प्राप्तोऽसौ कुदशां विकारबहलां प्राणान्तयोग्यां वृथा
क्रोडेयं तव कास्ति दर्शय मुखं स्वाश्वासनानिर्भरम् ॥ १३३ ॥

नाहं क्वापि कदापि वञ्चनपरा किन्त्वेष लोको वृथा
स्वेनान्धीकृत एव दूषयति मां स्वं रूपमेवास्थिताम् ।
किं दीप्तिर्विमला रवेर्गगनगा दुष्टा भवेद् दूरतोऽ-
मेध्ये संपतिता समापि विषयैः का सङ्गतेर्दुष्टता ॥ १३४ ॥

तृष्णासौ विषयाश्रितापि सहजं स्वं रूपमेवाश्रिता
यस्मात्ते विषयाः स्वरूपमुदिताः सर्वे शिवस्यैव तत् ।
भोगे भोगदृशं विहाय निखिलं तृष्णां च नो तद्दृशा
दृष्ट्वा शान्तिमुपेहि पूर्णसमतास्वादेन तृप्ताशय[ा]म् ॥ १३५ ॥

श्रुत्वा नैतन्निजहितरतैर्भाव्यमेवात्रमग्नै-
स्तृष्णारूपे विषयनिचयैः सर्परूपैः प्रपूर्णे ।
प्राप्ताः सेव्याः परमिह सदा देशकालाविरुद्धा
भोगास्त्याज्या नियतमितरे तां दृशं सन्नियोज्य ॥ १३६ ॥

हेयं हेयं परमिह सदा देयमादेयमेतद्-
दृष्टिरे(श्चै)षा ननु वुधवरैः साम्यरूपा प्रदिष्टा ।
हानाद्धानिं व्रजति न तथा भाव एषोऽथ वृद्धि
नादानाद्वा व्यवहृतिरियं जीवितान्तं त्वहेया ॥ १३७ ॥

तृष्णातप्तेषु योऽद्वैतकथां ब्रूयात् प्रशान्तये ।
तप्ते तैले जलं तेन क्षिप्तं मूढेन निश्चितम् ॥ १३८ ॥

शान्तेऽद्वैतोपदेशोऽयं शान्त्युत्कर्षाय कल्पते ।
शान्तेऽग्नौ जलमेको हि शान्त्याधिक्यकरः स्मृतः ॥ १३९ ॥

श्रुत्वाऽद्वैतं मूढधीर्नैकनिष्ठो भूतोन्मार्गेष्वेव धावत्यतृप्तः ।
तज्ज्ञः स्थाने स्थैर्यमेवैति सम्यक् कस्मिंस्तृप्तोभूय विश्रान्तिकामः ॥ १४० ॥

स्वात्मानं तच्छुद्धियुक्तं तु कृत्वा चित्ताऽऽदेयाऽद्वैतवागादरेण ।
भोगापेक्षा त्याग एवेह शुद्धिः का चापेक्षा नश्वरे भोगजाते ॥ १४१ ॥

अद्वैतं चेदेकचिन्मात्रताया दृष्टेः सिद्धं तन्महाऽद्वैतचर्चा ।
युक्ता ते स्याद्यत्र सर्वं यथास्वं सत्यं रूपे स्यान्निजे श्रीशिवाख्ये ॥ १४२ ॥

द्वैते सत्यं त्वत्स्वरूपं विभातं द्वैताभावे नासि किञ्चित्कदाचित् ।
पूर्णाद्वैते भूय एवासि सत्यं युक्ता चर्चा साकमेषा त्वया तत् ॥ १४३ ॥

चर्चा केयं वास्ति यश्चर्चको भोश्चर्च्यो वाऽसौ नास्ति कश्चित् सुसिद्धः ।
सिद्धौ वा तौ नैरपेक्ष्यात्तु कां तां चर्चां कुर्यातां कथं पूर्णताप्त्यै ॥ १४४ ॥

द्वैते बन्धस्तद्वियोगे विमोक्षो वेत्येवं या दृश्यते लोकचर्चा ।
सा युक्ता नो द्वैतहानेस्तथालं तस्याभावस्यापि हानेर्विशेषात् ॥ १४५ ॥

यो बद्धः स्यान्मोचको यत्र सोऽयं बन्धो लीलामात्रमेवैष तत्र ।
कः स्वं स्वेनैवेह बध्नाति तुष्ट्यै बध्नन्वा स्यात्क्रीडको नैव बद्धः ॥ १४६ ॥

बन्धाभावे मोक्ष एषोऽपि को यद् बद्धो मोक्षे योग्य एवास्ति नान्यः ।
मोक्षाभावेऽसौ च कः कोऽस्ति मोक्षः को वेत्येवं शाम्यतां स्वे स्वरूपे ॥ १४७ ॥

बन्धान्मोक्षाच्चैव मुक्तोऽस्ति मुक्तो नैकस्मात्तन्मुक्तिरेषास्ति काऽपि ।
बद्धो मुक्तो मुक्त एवाथ बद्धो यस्यां भायादेकचिन्मात्रभावात् ॥१४८॥

सर्वैवेयं बन्धमोक्षादिरूपा चर्चाऽद्वैते युज्यते नैव जातु ।
पूर्णाद्वैते सर्वमेतत्तु युक्तं पूर्णं सर्वेणैव यत्पूर्यतेऽलम् ॥ १४९ ॥

अस्वातन्त्र्यं यत्त्वतद्भावयोगात् सोऽयं बन्धो नान्यरूपोऽस्ति कश्चित् ।
मोक्षः स्वातन्त्र्यं परं पूर्णताख्यं नो भिन्नं तत्पूर्णपूर्णात् स्वतन्त्रात् ॥ १५० ॥

अस्वातन्त्र्यं चाप्यतद्भावकार्यं नो भिन्नं स्याज्जातु तस्मात्स्वतन्त्रात् ।
बन्धो मोक्षश्चापि भिन्नौ न भातो भातौ वैकं भानभावेन भानात् ॥ १५१ ॥

सत्यस्वरूपप्रथनं मोक्षो वा वृद्धसम्मतः ।
बन्धो देहात्मतामर्शस्ते स्वरूपं परं चितः ॥ १५२ ॥

नाश एव चितेर्मोक्षश्चार्वाकैः प्रतिपादितः ।
एकनाशे तथा सर्वे नश्येयुर्मातृतायुजः ॥ १५३ ॥

विज्ञानमात्रं शुद्धं तु बुद्धैर्मोक्षः प्रकीर्तितः ।
तच्छुद्धिस्तन्मतेनैव कारणाभावतो भवेत् ॥ १५४ ॥

प्रकृतेर्निर्गमो मोक्षः सांख्यैरात्मन इष्यते ।
शक्तेः शक्तिमतो भेदो न कदाचिच्छ्रुतिं गतः ॥ १५५ ॥

दुःखात्यन्ताभाव एवेह सोऽयं मोक्षः प्रोक्तस्तार्किकैस्तत्त्वविद्भिः ।
पूर्वं भातं चेत्तदात्यन्तमेतस्याभावो नो चेन्न तत् कास्य चर्चा ॥ १५६ ॥

मोक्षा एते वा भवन्त्वेव मोक्षाः कांश्चित् प्रत्येवेह तत्रैकनिष्ठान् ।
प्रत्युत्तीर्णास्ते स्युरेते तु बन्धा मोक्षो बन्धो वा न यत्सत्यतोऽस्ति ॥ १५७ ॥

प्रज्ञाबन्धस्तद्विमोक्षश्च लोके बन्धो मोक्षो यस्तु तौ द्वौ न तौ स्तः ।
अस्वातन्त्र्ये यत्परं तत्तु बन्धः स्वातन्त्र्यं यत् सोऽस्ति मोक्षोऽत्र सत्यः ॥१५८॥

२

इत्थं सर्वे पूर्णरूपास्तु येषां सद्यो भाताः शक्तिपातेन भावाः।
आरोहो नास्त्येव तेषां तु कुत्राऽप्यारूढानां व्याप्तिमात्रेण सद्यः ॥ १५९ ॥

चिन्मात्राख्येनैव रूपेण येषां भातं सर्वं भावजातं क्षणेन।
तेषां त्वेकं शिष्टमारोढुमस्ति स्थानं चिन्मात्रं हि पूर्णादधस्तात् ॥ १६० ॥

शून्यं सर्वं भाति येषां तु तेषां प्राप्यं शिष्टं स्थानयोर्युग्ममेव।
येषां बुद्धौ स्थौल्यमेवात्र भायाद्देहाद्यं स्यात् सर्वमारोढुमेषाम् ॥ १६१ ॥

देहादिके पदेऽप्येष न्यायो योज्यः स्वयं यतः।
मुच्यते यत्र यस्तत्र तस्य मुक्तिर्न संशयः ॥ १६२ ॥

कल्पनामात्रसिद्धोऽयं बन्धो मोक्षश्च तत्त्वतः।
यत्रैव कल्पना नष्टा तत्रास्ते तत्क्षणाज्जयः ॥ १६३ ॥

नाशोऽपि कल्पनाया यः सोऽपि कल्पनमात्रतः।
सिद्धस्तस्मात् स्वयं सिद्धो महामोक्षोऽस्ति नित्यशः ॥ १६४ ॥

मेयबुद्ध्या विनिर्णेतुमारब्धा विषया इह।
शिवत्वेनैव ते हस्तमायाता यद्यपि स्फुटम् ॥ १६५ ॥

तथापि व्यवहारार्थं प्रमेयत्वेन सुस्फुटम्।
निर्णीयन्ते पुनर्गूढबुद्ध्यारोहणकाङ्क्षया ॥ १६६ ॥ युग्मम्।

स्थूलबुद्धिगृहीता हि मूढा ममतया रताः।
विषयेष्वथ पुत्रादौ भागे चाहंतया तथा ॥ १६७ ॥

तेषामारोहणं तेभ्यो देहे कर्तव्यमेव यत्।
पुत्राद्यासक्तचित्तानां देहोऽपि विस्मृतिं गतः ॥ १६८ ॥ युग्मम्।

मेयताऽऽपादनेनैव विषयादेरनन्तरम्।
देहे प्रमातृताबुद्ध्याऽऽरोहणं तत इष्यते ॥ १६९ ॥

मात्राश्रयस्य मानस्य विषयो मेयमुच्यते।
मानं नवनवाभासो माता तत्प्रभवः स्मृतः ॥ १७० ॥

प्रमातृफलमित्युक्ता तत्साध्यत्वेन संस्थितेः।
सा परामर्शरूपा स्याद् मेयशब्दनभावतः ॥ १७१ ॥

तत्प्रमेयं द्विधा प्रोक्तं बाह्यमाभ्यन्तरं तथा।
बाह्यं नीलादि विज्ञेयं बाह्येन्द्रियपदत्वतः ॥ १७२ ॥

आन्तरं तु सुखादि स्यान्मनोविषयभावतः।
मनोविषयभावेऽपि नीलादेर्बाह्यता परम् ॥ १७३ ॥

जाग्रत्पदत्वमेतेषां विषयाणां स्मृतं बुधैः ।
जाग्रतो गोचरत्वेन व्यवहार्यदशाजुष(षा)म् ॥ १७४ ॥

जाग्रत्त्वमपि चैतेषामुपचारेण संस्मृतम् ।
जागर्ति पुरुषो यस्मादत्र मेयपदे स्फुटम् ॥ १७५ ॥

प्राधान्यमत्र देहस्य प्राणादीनां तु गौणता ।
देहाधिकरणैर्यस्मात् करणैर्बाह्यमीक्षते ॥ १७६ ॥

प्रमेयत्वं च भावांशे न भानांशेऽत्र संस्थितम् ।
स्वप्रकाशस्य मेयत्वं न कदाचिच्छ्रुतिं गतम् ॥ १७७ ॥

बाह्यत्वमपि तत्रैव युक्तं मेयतया स्थिते ।
अंशे बाह्यत्वमेयत्वे यत एकास्पदे सदा ॥ १७८ ॥

बाह्यत्वं बाह्यदेशत्वं चित्सारे युक्तिमत्कथम् ।
स्वप्ने चित्सारतार्थानां स्फुटमेवानुभूयते ॥ १७९ ॥

बाह्यत्वासम्भवे युक्तं नान्तरत्वं कदाचन ।
नान्योन्यापेक्षिणां यस्मादेकाभावेऽन्यसिद्धता ॥ १८० ॥

करणानां च नो युक्तं द्विरूपत्वं न संशयः ।
भावत्वं दुर्निवारं यदेतेषां भाववत् सदा ॥ १८१ ॥

विषयस्थैः प्रकारैर्हि प्रकारी विषयी भवेत् ।
ततोऽप्येषां द्विरूपत्वं करणानां न युक्तिमत् ॥ १८२ ॥

प्रकाशरूपता चैषां करणानां स्फुटा स्थिता ।
नवत्वमेतद् भ्रान्त्येव द्वैरूप्यं तत्र युक्तिमत् ॥ १८३ ॥

भवत्वेष प्रपञ्चोऽपि सत्यः सर्वोऽपि का क्षतिः ।
पराद्वैतं हि सर्वाढ्यं सदैवास्मदभीप्सितम् ॥ १८४ ॥

इति प्रमेयं निर्णीतं विषयाख्यं मया स्फुटम् ।
प्रत्यक्षत्वानुमेयत्वशाब्दत्वाख्यप्रकारधृत् ॥ १८५ ॥

बाह्यान्तरैर्य आभास इन्द्रियैर्वस्तुनो बहिः ।
प्रत्यक्षं मानमेतत् स्यात् मेयमस्य तथा स्मृतम् ॥ १८६ ॥

आभासानन्तरं यस्तु विमर्शो वस्तुदेहगः ।
सा प्रमा तत्र सम्प्रोक्ता फलभूतान्तरोन्मुखी ॥ १८७ ॥

अन्वयव्यतिरेकैस्तु तद्वत्पञ्चभिरन्वितम् ।
रूपैर्लिङ्गं बुधैः प्रोक्तमत्र मानं ततोऽर्थधीः ॥ १८८ ॥

साक्षाद् द्वाराथ धीतैक्ष्ण्यादर्थस्य प्रतिपादकः।
शब्दस्तदुक्तबोधोऽत्र शब्दाख्यं मानमीरितम् ॥ १८९ ॥

लौकिकं वैदिकं चेति द्विविधं तत्प्रकीर्तितम्।
आद्यं कनिष्ठं मानानामपरं ज्येष्ठमुच्यते ॥ १९० ॥

उपमानप्रकारेण नोपयोगोऽस्ति तादृशः।
अर्थापत्तिस्त्वनुमानं द्विविधाऽपि स्फुटं स्थिता ॥ १९१ ॥

ऐतिह्यं शब्द एवास्ति किन्त्वविज्ञातकर्तृकः।
सम्भवस्तर्करूपोऽयं कैतन्मेयस्य कल्पना ॥ १९२ ॥

अभावश्चाक्षुषः सोऽयं प्रत्यक्ष इति निश्चयः।
दृश्यादर्शनमेतस्य मानं काल्पनिकं स्मृतम् ॥ १९३ ॥

इति प्रमेयनिर्णीतिः सामान्येनाथ भेदतः।
तच्च मात्रादिभावेन स्थिते सर्वत्र सर्वदा ॥ १९४ ॥

भावांशोऽत्र प्रमेयं स्याद् भानांशो मानमीरितः।
तत्कर्तृता प्रमातृत्वं प्रमात्वं मातरि स्थितेः ॥ १९५ ॥

भावो मय्येष भातीति प्रयोगोऽत्र निदर्शनम्।
चतुष्टयं यदंशानां स्फुटमेवात्र संस्थितम् ॥ १९६ ॥

मात्रात्मना च मातृत्वं शिवदृष्टावुदाहृतम्।
[1]"घटो मदात्मना वेत्ती"ति सोमानन्ददेशिकैः ॥ १९७ ॥

मात्रादावपि सर्वत्वमेवं योज्यं सदा बुधैः।
सर्वैः सर्वं समापूर्णं नये शैवे हिं कीर्तितम् ॥ १९८ ॥

एवंविधस्य मेयस्य त्रैविध्यं चैव संस्थितम्।
स्थौल्यं सूक्ष्मत्वमथ च परत्वं सुप्रतिष्ठितम् ॥ १९९ ॥

भावांशे स्थूलता प्रोक्ता ज्ञानांशे सूक्ष्मता तथा।
अहंविश्रान्तिभावेन परत्वं समुदाहृतम् ॥ २०० ॥

घटं जानाम्यहमिति प्रयोगो लौकिके स्फुटम्।
भावांशो घटमित्युक्तो जानामीत्यथ बोधधीः ॥ २०१ ॥

अहंशब्देन विश्रान्तिः शिवे परप्रमातरि।
आर्थस्याथ प्रमाद्वारा प्रकाशाख्ये निरामये ॥ २०२ ॥

---

१. मदात्मना घटो वेत्ति वेद्म्यहं वा घटात्मना—शिवदृष्टिः ५।१०५।

ज्ञानस्य विषयो ज्ञानं नाज्ञानं तद्विरोधतः ।
विश्रान्तिस्तन्मयीभावो भेदे विश्रान्तता कुतः ॥ २०३ ॥

तदेवं व्यवहारेषु सर्वेष्वेव विनिश्चितम् ।
शिवीकरणमेवास्ति भावानां परमार्थतः ॥ २०४ ॥

तज्ज्ञानांशावधारत्वमत्र रात्रिन्दिनं स्थितम् ।
तेन ते व्यवहारेऽपि सर्वत्र शिवदर्शिनः ॥ २०५ ॥

आज्ञाभेदैकनिष्ठत्वान्नात्र विज्ञाः कदाचन ।
केवलं क्षोभमापन्ना उन्मत्ता इव संस्थिताः ॥ २०६ ॥

प्रतिभावं द्विधारूपं संस्थितं भेददर्शने ।
स्वलक्षणं च सामान्यं जगत्यत्र चराचरे ॥ २०७ ॥

आभास एव सामान्यमेकमेव सदा स्थितम् ।
स्वलक्षणं तु तत्पिण्डो भ्रमेणैकतया मतम् ॥ २०८ ॥

सर्वं आभासप्राणाः स्युर्भावा भेदेन संस्थिताः ।
नाभातं हि क्वचिद् दृष्टं दृष्टं वा भातमेव तत् ॥ २०९ ॥

यद्याभासाद्विभेदेन किञ्चित्स्यात् तत्कथं नु तत् ।
भायाद्भानं यदाभासो भानं च न ततः पृथक् ॥ २१० ॥

वस्तुभानाधिकं नास्ति पृथक् सिद्धं मनो भवेत् ।
भानं त्वधिकमेवास्ति पृथक् चातः स्फुटं स्थितम् ॥ २११ ॥

अन्यथा तु ततोऽन्यस्य भानं युक्तं कथं भवेत् ।
भातव्यरहितस्यापि सुप्तौ भानस्य यत्स्थितिः ॥ २१२ ॥

न सुप्तौ भानचर्चेति न वक्तुं युक्तमुत्तमैः ।
नेतीत्यपि हि भातं स्यात्तदा तत्रेति निश्चितम् ॥ २१३ ॥

भातव्यरहितत्वं न तत्र चेन्मास्तु का क्षतिः ।
भानस्यात्रापि सत्तैवं मात्रमेव हि नो मतम् ॥ २१४ ॥

मध्यधामसु भातव्यरहितं भानमीक्षते ।
सावधानैर्मुहुर्नात्र गतिस्तव कृतं बहु ॥ २१५ ॥

तत्रानेकविधं प्रोक्तं सामान्यं व्यक्तिभेदतः ।
परमार्थे च तत्त्वेकं शिवत्वाख्यं स्फुटं स्थितम् ॥ २१६ ॥

एकः शिवो हि सर्वत्र भानरूपतया स्थितः ।
व्यक्तिभेदास्तु नो तस्य सामान्यत्वविनाशकाः ॥ २१७ ॥

अत्र सामान्यरूपा वै व्यक्तयो बहुधा स्थिताः ।
महासामान्यभावोऽस्यानुत्तरः सर्वदा स्फुटः ॥ २१८ ॥

या व्यक्तिः सैव सामान्यं यत्र तत्रास्ति कैव वाक् ।
सामान्यव्यक्तिभावस्याप्यथवा परमार्थतः ॥ २१९ ॥

सत्ता सामान्यमस्यैव भागो भागस्य संस्थितः ।
यस्यान्तरेव सामान्यान्यपराण्यखिलानि तु ॥ २२० ॥

महासामान्यरूपस्य सामान्यान्यखिलानि तु ।
वृत्तयः स्युरवृत्तस्य स्वभावेनैव सर्वदा ॥ २२१ ॥

अभावेऽप्यत्र पिण्डत्वं याति सामान्य उत्तमे ।
सत्ताया अपि पिण्डत्वं यो न याति कदाचन ॥ २२२ ॥

प्रत्याभासं च सामान्येष्वेषु भानं पृथक् स्थितम् ।
नीलव्यवस्थाहेतुस्तु कथं पीते स्थितिं व्रजेत् ॥ २२३ ॥

तदेकत्र घटे नानाधर्मयोगितया स्थिते ।
प्रसरन्तु बहून्येव मानानि विषये स्वके ॥ २२४ ॥

सत्त्वादौ हि घटस्थेऽत्र धर्मजाते पृथक् पृथक् ।
ग्राहकानि प्रमाणानि प्रवर्तन्ते यथा स्वकम् ॥ २२५ ॥

प्रमाणानि च यान्यत्र प्रतिसामान्यमेककम् ।
सविसर्गप्रकाशस्य लेशभूतानि निश्चितम् ॥ २२६ ॥

स्थितिं यान्ति ततो मेयं मुख्यं सामान्यमेव तु ।
गौणी प्रमेयता प्रोक्ता विशेष्यस्य सदा बुधैः ॥ २२७ ॥ युग्मम् ॥

प्रकाशः केवलस्तुच्छकल्पो नालं प्रकाशने ।
विमर्शश्च तरां जाड्यहतः केवलतापदम् ॥ २२८ ॥

सविमर्शप्रकाशस्य ततः साम्राज्यमुत्तमम् ।
कणभावे स एवायं प्रमाणं बाह्यसंश्रयात् ॥ २२९ ॥

पिण्डभावे प्रमाता स्यात् प्रमातुर्मुखता स्थितेः ।
प्रमेयत्वं च तस्यैव बाह्यभावेन भानतः ॥ २३० ॥

शिवभावोऽपि तस्यैव शुद्धभावेन संस्थितेः ।
सोऽयं परशिवः प्रोक्तः सर्वान्तःकरणात् स्फुटम् ॥ २३१ ॥

प्रकाशस्य स्फुटं मानभावो नात्रास्ति संशयः ।
इन्द्रियादेः प्रमाणत्वं गौणं न मुख्यमीरितम् ॥ २३२ ॥

सामान्यमेव मानस्य विषयः सत्यतो भवेत् ।
स्वलक्षणं तु नो सत्यं मात्रयोजनसाधितम् ॥ २३३ ॥

बौद्धैः सह कथा त्वेषा शोभते नैव जातुचित् ।
तैर्हि सामान्यरूपस्य तुच्छता परिगीयते ॥ २३४ ॥

अतद्व्यावृत्तिमात्रं हि सामान्यं तैः प्रकीर्तितम् ।
न च तत्संभवत्येव संभवेऽपि न युक्तिमत् ॥ २३५ ॥

तत्सिद्धौ नञ्प्रयोगे हि युक्तो नेतरथा क्वचित् ।
तथा च व्यर्था व्यावृत्तिः सर्वा तद्देहनिष्ठिता ॥ २३६ ॥

तस्य सिद्धिस्तु नो युक्ता बौद्धानां तस्य तुच्छता ।
वदतां तद्धि सामान्यं तत्त्वामर्शनयोगतः ॥ २३७ ॥

इति नाङ्केन युज्येत व्यावृत्तिस्तु तरामिति ।
तत्सिद्धौ तु किमर्थं तद् देयं सम्प्राकृते कृतम् ॥ २३८ ॥

विमर्शस्य कथा तेषां गृहे शशविषाणवत् ।
शून्ये तेषां हि विश्रान्तिर्निर्विमर्शे शिलादिवत् ॥ २३९ ॥

विशेष्यस्यैव मेयत्वं निर्विकल्पे प्रमाणता ।
तेषामिष्टतमा तेन कथा तैः केयमित्यलम् ॥ २४० ॥

देशे काले तथैकत्र मुख्ये धर्मेऽथ योजनात् ।
धर्माणामेकताभानं स्वलक्षणमिहोच्यते ॥ २४१ ॥

स्वलक्षणत्वमेतस्यान्यानुयायितावशात् ।
तद्देशादिविशिष्टो हि नान्यदेशादिरञ्जितः ॥ २४२ ॥

देशकालौ तथा धर्मा नानाभावेन संस्थिताः ।
एकीकृता विशेष्यः स्यान्मातुर्व्यवहृतेः पदम् ॥ २४३ ॥

अर्थित्वविषयस्तत्र धर्मः कोऽपि प्रधानताम् ।
भजते तत्र ते धर्माः धर्मतां यान्ति सुस्फुटम् ॥ २४४ ॥

मातुः परिमितस्यात्र योजने यास्ति कल्पना ।
सा मानं नैव यस्मात्सा द्विचन्द्रादिस्वरूपिणी ॥ २४५ ॥

प्रवृत्त्यादौ तु योग्यत्वं यत्स्वलक्षणगोचरम् ।
ज्ञायते तद्भ्रमेणैव सिद्धं नात्रास्ति युक्तता ॥ २४६ ॥

घटस्तु तेन तेनैव धर्मेणार्थक्रियाकरः ।
भिन्नीकृतस्तु तेनासौ स्वं रूपं प्रतिपद्यते ॥ २४७ ॥

तत्रार्थक्रतिरेषाऽस्ति धर्माणां भेदभावतः ।
प्रत्येकमेव जातु स्यादेकभावेन संस्थिता ॥ २४८ ॥

तस्याऽभेदेऽन्यधर्माणां सहकारितया स्थितिः ।
एकस्य तत्र मुख्यत्वादिति शास्त्रार्थसङ्ग्रहः ॥ २४९ ॥

अभेदं सर्वं एवैकां धर्मास्तां प्रति सूद्यमाः ।
दीपा इव प्रकाशे स्युरतिसूक्ष्मस्य वस्तुनः ॥ २५० ॥

वस्तुतत्त्वं तु सामान्यलक्षणं तदुदाहृतम् ।
स्वलक्षणत्वं तत्रास्य देशकालादियोजनात् ॥ २५१ ॥

स्वलक्षणेऽपि भिन्नत्वं रुच्यादिवशतः स्मृतम् ।
तद्गतो धर्मनिचयो रुच्यादिविषयी भवेत् ॥ २५२ ॥

स च सत्त्वादिरूपोऽस्ति स्थितोऽनेकतया स्फुटम् ।
कदाचित् केनचिद् धर्मेणैव तस्यातिदेशनम् ॥ २५३ ॥

हृद्भङ्गस्य निवृत्त्यर्थं सन्नित्येव स गृह्यते ।
उदकाहरणार्थित्वे घटोऽयमिति तत्र धीः ॥ २५४ ॥

रम्यत्वार्थित्वमात्रे तु लोहितोऽयमिति ग्रहः ।
मूल्यार्थित्वे तु हेमेति तद्ग्रहः समुदीरितः ॥ २५५ ॥

अर्थित्वे योजनाऽस्त्येवं रुच्यादावपि सा तथा ।
कार्या स्यान्नहि भावस्य नियता रूपकल्पना ॥ २५६ ॥

एकेन ग्रहणं तत्र क्वचिदद्वयतो भवेत् ।
क्वचित्त्रयेण तत्प्रोक्तं क्वचिच्छास्त्रार्थपारगैः ॥ २५७ ॥

दूरासन्नादिभेदेन रुच्यादिविषया इमे ।
आभासा ननु कथ्यन्ते शास्त्रज्ञैः सर्ववस्तुगाः ॥ २५८ ॥

रुचिर्व्याक्षेपसारा स्यात् प्रवृत्तिर्वस्तुदेशने ।
अर्थित्वं कांक्षया तत्र सा प्रोक्ता पण्डितैः स्फुटम् ॥ २५९ ॥

व्युत्पत्तिश्चैव शिक्षाया ग्रहणादौ स्फुटं स्थिता ।
बोध्यबोधकनिष्ठाऽसौ पण्डितैः समुदाहृताः ॥ २६० ॥

सामानाधिकरण्यं स्यान्मुख्यधर्मानुसारतः ।
धर्माणां नहि धर्मीति दृश्यते कोऽपि सत्यतः ॥ २६१ ॥

एकत्वव्यवहारोऽत्र त्वनुसन्धानमात्रतः ।
तच्चोक्तं कल्पनामात्रमिति का धर्मिकल्पना ॥ २६२ ॥

धर्मा विचार्यमाणाश्च नाभासाद्भेदभाजनम् ।
आभासः सोऽपि निर्णीतः प्रकाशामर्शरूपकः ॥ २६३ ॥

प्रकाशामर्शरूपस्तु परमः शिव उच्यते ।
सर्वं जगद्गतं वस्तु ततः शिवतया स्थितम् ॥ २६४ ॥

यथा यथा विचार्यन्ते भावा एते बहिः स्थिताः ।
तथा तथा शिवाद्भिन्ना भासन्ते नैव जातुचित् ॥ २६५ ॥

दीपेन दृश्यमानं हि तमोजालं पुरोगतम् ।
दीपाद् भेदेन नो भाति कस्यचिज्जातुचित्क्वचित् ॥ २६६ ॥

दीपेन नश्यमानत्वं यत्तत्रारोप्यते जडैः ।
तद् भ्रमेणैव नो सत्यदृष्ट्या रज्जुभुजङ्गवत् ॥ २६७ ॥

नहि किञ्चित्तमोऽस्त्येव वस्तु तन्नाशकल्पना ।
येन युज्येत नाशोऽयं प्रकृत्यावस्थितिर्यतः ॥ २६८ ॥

तमःस्थाने तु नो किञ्चिद् दृश्यते तत्र संस्थितम् ।
घटस्थाने कपालानि यथा का नाम कल्पना ॥ २६९ ॥

दीपादर्शनमात्रं तत् तमस्तत्र यथा तथा ।
शिवादर्शनमात्रं यद् तद्भावस्फुरणं स्थितम् ॥ २७० ॥

गुणत्वकथनं युक्तं तमसो नास्ति लेशतः ।
गुणिनं हि विना कोऽयं गुणः सोऽत्र न विद्यते ॥ २७१ ॥

भुवो गुणत्वकथनं यत्तन्मतिविमोहतः ।
भुवो गुणा हि दृश्यन्ते आलोकेनैव नो तमः ॥ २७२ ॥

दीपस्यादर्शनं तत्राभावेन युज्यते स्फुटम् ।
शिवाभावोऽसम्भवेन हतो वन्ध्यात्मजो यथा ॥ २७३ ॥

तथाप्यदर्शनं तत्र यत्तच्छक्तिविजृम्भितम् ।
शक्तशक्तौ न चोद्यस्यावकाशोऽस्ति मनागपि ॥ २७४ ॥

अतिनैर्मल्यतो नास्य भानमस्त्येव सुस्फुटम् ।
नैर्मल्यस्य पराकाष्ठा सत्त्वे चाभातता यतः ॥ २७५ ॥

स्वदृष्टेरभिघाताद्वा मातॄणां भाति नो शिवः ।
अतिस्फुटोऽपि सूर्यो हि घूकानां नावभासते ॥ २७६ ॥

विकल्पातीतरूपत्वादथवा भातता शिवे ।
भातोऽप्यभात एवास्ति यद्घटोऽनवसायतः ॥ २७७ ॥

अतिभानवशाद्वास्य मानाभावोऽस्ति निश्चितम् ।
अतीव भातो भातो हि लोकेऽस्मिन्दृश्यते रविः ॥ २७८ ॥

कस्य वा भाति सोऽयं यत्तस्माद्भिन्नं जडं मतम् ।
तस्यैव तस्य भानं यत्तद्विरोधो न दूषितम् ॥ २७९ ॥

अदर्शनं ततोऽभावाद्भाववन्नात्र युज्यते ।
इति किं ब्रूमहे नास्ति शक्तिर्निर्णयवस्तुनि ॥ २८० ॥

निर्णयाभाव एषोऽपि शिव एव न संशयः ।
सिद्धिर्भानाद्धि सर्वस्य भानं शिवमयं स्थितम् ॥ २८१ ॥

अहंप्रयोगरहितो नास्ति कस्यापि यद्ग्रहः ।
ततस्तत्रैव विश्रान्तिं भावा यन्ति न संशयः ॥ २८२ ॥

अहंविश्रान्तिकाले च सर्वं तत्रैव लीयते ।
नह्यग्नौ ज्वलिते तूलं पतितं भेदभाग्भवेत् ॥ २८३ ॥

सर्वं विषयजातं चैकत्वेनैव यदा भवेत् ।
गृहीतं स्वात्मबुद्ध्या तत् प्राप्तं प्राप्तव्यमक्षतम् ॥ २८४ ॥

भोगेषु ग्रहणं तत्र पुत्रादिषु परं तु यत् ।
तदज्ञानैककार्यं स्यात्तत्त्याज्यं सर्वदा बुधैः ॥ २८५ ॥

देहादौ शून्यपर्यन्तेऽप्येष न्यायो यतोऽप्यमी ।
मेया एव न मातारो माता हि केवलं शिवः ॥ २८६ ॥

इत्यलं यत्ननिचयैर्भावा एते यथा यथा ।
निर्णीयन्ते तथा तेऽमी स्फुरन्ति शिवभावतः ॥ २८७ ॥

इति विषयविनिर्णयो मयाऽयं गुरुमुखतोऽधिगतः स्फुटीकृतोऽद्य ।
भवतु बुधजनोऽयमत्र विज्ञः परशिवदृष्टिपरोऽत्र भावजाते ॥२८८॥

इति श्रीमदाराध्यतमाचार्यवर्य-श्रीगुरुवर-भास्करकण्ठविरचिते चित्तानुबोधे
विषयनिर्णायकं प्रथमं प्रकरणं सम्पूर्णमिति शिवम् ॥ १ ॥

## द्वितीयं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः।
ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः।
ॐ तद्द्वयसामरस्यरूपायै गुरुपादुकायै नमः।
ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः।

ॐ शिवत्वेनैव निर्णीताः पूर्वं ये विषया मया।
देहादिमात्रं निर्णेतुं प्रमेया इव सन्तु ते॥ १॥

विषयेणैव मात्रादि यतोऽस्तित्वेन कल्प्यते।
निरालम्बा रवेर्दीप्तिर्ह्यसत्कल्प्यै(ल्पै)व दृश्यते॥ २॥

किञ्च मेयमधः कृत्वा माता स्वात्मनि संस्थितः।
उत्तरोत्तरमारोढुं शक्तोऽस्ति नान्यथा स्फुटम्॥ ३॥

तत्र मुख्यतया मातुर्न मानादेर्विचारणम्।
तस्यैवास्ति द्वयं रूपं प्रमा मानं च भेदतः॥ ४॥

तत्प्रसङ्गेन मानस्य प्रमायाश्च विचारणम्।
स्वयमेव भवेन्नात्र तदुद्देशः कृतस्ततः॥ ५॥

प्रमेयमपि यद्येवमात्मरूपं स्मृतं बुधैः।
स्फुटं बन्धनहेतुत्वात् तथापि तदुदीरणम्॥ ६॥

विषयैर्बध्यमानो हि माता मातृत्वभाजनम्।
अन्यथा स शिवः साक्षात् सर्वानुग्रहकारकः॥ ७॥

विषया बन्धनं चास्य क्रीडैव यद्यपि स्फुटम्।
ततो मुक्तेश्च तत्त्वं सुस्थितं केन वार्यते॥ ८॥

तदर्थं च प्रवृत्तानां शास्त्राणां कर्तृरूपिणः।
क्रीडाभावः शिवस्यैव प्रोच्यते नान्यथा स्थितिः॥ ९॥

आरोह एव मुक्तिः स्यादुत्तरस्मिन्पदे यतः।
तन्मात्रमेव शास्त्रेऽस्मिन् वक्ष्यते स्फुटयुक्तिभिः॥ १०॥

विषयादेर्विनिर्मुक्तो माता देहादिकं श्रितः।
स्वतयारूढवाग्योग्यस्ततः स्यादिति निश्चयः॥ ११॥

आरोहोऽत्र विचारेण न पादाभ्यां भवेद्यतः।
विषयाणां विचारोऽयं पूर्वं तेन कृतः स्फुटम् ॥ १२ ॥

इह मातृविचारोऽयं क्रियते येन तत्पदात्।
चिन्मात्रपदगो जीवो भवेदेव न संशयः ॥ १३ ॥

मातृमेयविनाशे प्रमा माने क्वेव तिष्ठताम्।
विषयाश्रयनाशे हि तयोः का स्थितिरुच्यताम् ॥ १४ ॥

स्वातन्त्र्येणैव सङ्कोचं यातो माता प्रकीर्तितः।
प्रकाशामर्शरूपोऽत्र बुधैः परशिवः स्वयम् ॥ १५ ॥

प्रकाशाख्यं निजं रूपं विस्मार्यैव तु संस्थितः।
न किञ्चिद्रूपतां स्वस्मिन् जानात्येष पदाच्च्युतः ॥ १६ ॥

एव तुर्यपदाच्च्यावः सुप्तिरूपोऽस्य जायते।
स्वातन्त्र्येणैव वैवश्यान्न तु मातुरिव स्फुटम् ॥ १७ ॥

स्वरूपे यत्र लीनोऽसौ स्वरूपादपि विस्मृतः।
भवेत्सुषुप्तिभूः साऽस्य सुष्ठु सुप्तेः प्रमेयतः ॥ १८ ॥

एकस्याऽनेकता चात्राऽज्ञानोपाधिवशाद् भवेत्।
जीवब्रह्मविभागोऽयं वेदान्तेषु प्रकीर्तितः ॥ १९ ॥

आज्ञानोपाधिरप्येष एकचित्तत्वगः स्मृतः।
विषयत्वाश्रयत्वाभ्यां न तु भेदेन संस्थितः ॥ २० ॥

जीवब्रह्मविभागो हि भवत्यज्ञानवैभवात्।
विषयाश्रयभावस्य कथनं नात्र युक्तिमत् ॥ २१ ॥

बन्धमोक्षव्यवस्थार्थं बहुत्वस्य तु कल्पना।
अज्ञाने क्रियते तौ तु कल्पनातो न तत्त्वतः ॥ २२ ॥

कल्पितार्थं कल्पना च गण्डे गण्डस्य विस्फुटा।
अलमप्रस्तुताख्यानैः प्रस्तुतं त्वभिधीयते ॥ २३ ॥

स्वभानेऽप्यत्र सुप्तत्वं नाणौ स्तोकाद्विलीयते।
प्रमेयभानमेवाहुर्यस्मात् सुप्तिविनाशकम् ॥ २४ ॥

प्रमेयो नाऽयमात्माऽस्ति भवन्वाऽऽत्मा कथं भवेत्।
तन्मातुर्मातृतापत्तेस्तन्मेयत्वेऽनवस्थितिः ॥ २५ ॥

तदात्मभानेऽप्यत्रास्ति नैव काप्येव खण्डना।
मेयभानात् खण्डना यत् सुप्तेर्नैवान्यतः स्फुटम् ॥ २६ ॥

अभावो मेयजातस्य मातुर्नात्र कदाचन।
स्वभावस्यापि साक्षित्वात् कल्पितस्य यथा तथा ॥ २७ ॥

अशक्तेर्ग्रहणे वात्र मेयाभानं प्रमातृगम्।
साऽपि स्वातन्त्र्यशक्त्युत्था तस्य किं ब्रूमहे ततः ॥ २८ ॥

मातुरभावो भानं वा कदाचिन्नोपपद्यते।
द्वयं मेयैकविषयं ह्यत्र सद्भिः प्रकीर्तितम् ॥ २९ ॥

शिवः परशिवीभावात् स्वशक्त्यैकतया स्थितात्।
स्वातन्त्र्येण च्युतः प्रोक्तः शिव इत्येव पण्डितैः ॥ ३० ॥

शिवोऽयं मातृभावार्थं सङ्कोचाश्रयणे रतः।
न किञ्चिद्भावमेवादौ याति भागे तदास्पदे ॥ ३१ ॥

प्रकाशस्य हि सङ्कोचो न किञ्चिद्भाव इष्यते।
सुप्तो हि जीवसङ्कोचस्तद्भावान्नैव भेदभाक् ॥ ३२ ॥

न किञ्चिद्भावतां यातो नभो माता प्रकीर्तितः।
प्रकाशः शून्यभावान्तो भागमात्रे प्रकल्पिते ॥ ३३ ॥

प्रमेयाभानरूपं तु शून्यमत्र स्फुटं स्थितम्।
शून्यमाता ततः सोऽयं न भूताकाशभानतः ॥ ३४ ॥

शून्यं हि मेयपक्षेऽस्ति भूताकाशस्वरूपकम्।
तद्ग्रहे देहमातृत्वमेव नो शून्यमातृता ॥ ३५ ॥

चिन्मात्रत्वं शिवस्यास्य शान्तता स्वात्मनि स्थितिः।
न सङ्कोचो हि चिन्मात्रं व्यापकं पण्डितैः स्मृतम् ॥ ३६ ॥

चेत्यनिर्भरतारूपं त्यक्त्वा या स्थितिरिच्छया।
चिन्मात्रता शिवस्योक्ता सेयं न तुच्छतोद्भवः ॥ ३७ ॥

पूर्णतायाश्च्युतिस्तावन्न तुच्छत्वावभासनम्।
चिन्मात्रता बुधैः सेयं प्रोक्ता न शून्यताग्रहः ॥ ३८ ॥

नास्मीति तुच्छतास्फूर्तिर्या शिवस्य निजेच्छया।
सा शून्यमात्रता प्रोक्ता न शून्यं परमार्थतः ॥ ३९ ॥

[असंवे]द्यसुषुप्तित्वमस्याः प्रोक्तं पुरातनैः।
नहि वेद्यं किमप्यत्र भाति बाह्यं तथान्तरम् ॥ ४० ॥

अवस्थातुर्न भिन्ना स्याज्जात्ववस्था स्वयं हि सः।
विशेषं कालिकं सृष्ट्वाऽवस्थाभावेन जृम्भते ॥ ४१ ॥

सुषुप्तपदमेवैतत् सेतुः स्याज्जगदीशयोः।
ईशः स्वयं प्रकाशः स्याज्जगन्मेयमिति स्थितम् ॥ ४२ ॥

आरोहेऽथावरोहे च विश्रान्तिः स्थानमिष्यते।
इदमेवोभयत्रापि प्रापकं हि बुधैः स्मृतम् ॥ ४३ ॥

तत्रावरोह ईशस्य जीवस्यारोहणं स्मृतम्।
परे शिवे न तौ युक्तौ सर्वाध्वान्तः कृतेः स्फुटम् ॥ ४४ ॥

तत्रैव स्वबलोद्भूतिं कुर्वन्माता प्रकीर्तितः।
प्राणाख्यः प्राणशब्दो हि बले सङ्केतितो बुधैः ॥ ४५ ॥

आनन्दरूपता स्वाम्यस्तोकमत्र स्फुरेद्यतः।
स(सं)वेद्यसुप्तिस्तेनाथं(नोक्तं) पदमेतत् पुरातनैः ॥ ४६ ॥

आनन्दमयकोशोऽयं वेदान्तेषु स्थितिं गतः।
भावि प्राणेऽस्य बीजत्वं वातरूपे प्रकीर्तितम् ॥ ४७ ॥

नभस्येव च वातोऽयं स्फुरन् दृष्टो बहिः सदा।
कोऽत्रानाश्वास एषोऽस्ति दृष्टे हि प्रक्रिया स्मृता ॥ ४८ ॥

प्राणस्यास्यैव जीवत्वं प्राणधारणशक्तितः।
अन्येषां गुणतः प्रोक्तं मातृभावेन संस्थितैः ॥ ४९ ॥

प्रवेशनिर्गमाशक्तो देहे प्राणो हि यः सदा।
एतेन धार्यते सोऽयमन्तर्बाह्ये च सर्वदा ॥ ५० ॥

चिन्मात्रबलरूपोऽयं प्राणः सद्भिः प्रकीर्तितः।
धारको देहवातस्य न स्वयं वातरूपकः ॥ ५१ ॥

बलोद्रेके ततः शक्तिं चेतनाख्यां विभावयन्।
धीमाताऽसौ बुधैः प्रोक्तश्चिद्भावोऽत्र स्फुटीभवेत् ॥ ५२ ॥

विज्ञानमयकोशोऽयं वेदान्तेषूपगीयते।
विज्ञानमिति धीनाम रूढ्या योगेन च स्थितम् ॥ ५३ ॥

भावि बाह्यग्रहादस्य मनोभावो भविष्यति।
कोशो मनोमयः सोऽयमिति वेदान्तिडिण्डिमः ॥ ५४ ॥

भावित्वादेव नेहासौ कथितः शास्त्रपारगैः।
विज्ञानमयकोशश्च स्तोकं भेदेन संस्थितेः ॥ ५५ ॥

स्वप्नावस्थास्वरूपोऽयं माता प्रोक्तो मनीषिभिः।
विज्ञानमात्रसिद्धा हि स्वप्नार्थाः समुदाहृताः ॥ ५६ ॥

अस्यैव मातुर्मानत्वं प्रमात्वं च निगद्यते ।
स्वरूपभूतं मातृत्वमस्य स्वात्मनि निष्ठितेः ॥ ५७ ॥

मानत्वं बहिरौन्मुख्यात्तस्यैव समुदाहृतम् ।
पुनरन्तर्मुखीभावे प्रमात्वं सुस्फुटं स्थितम् ॥ ५८ ॥

मानं नवनवाभास आन्तरामर्शरूपिणी ।
प्रमाभासफलं प्राहुः परामर्शं यतो बुधाः ॥ ५९ ॥

बहिर्मुखस्य बोधस्य मानत्वं समुदाहृतम् ।
प्रमात्वं लीयमानस्य मातृता तद्द्वयाश्रये ॥ ६० ॥

स्वप्नरूपापि निष्कृष्टा प्रमेयं विषयान्निजात् ।
तुर्यरूपा भवेत्तुर्यं चिन्मात्रं हि बुधैः स्मृतम् ॥ ६१ ॥

माता मानं च तद्वत् स्यात्तुर्यरूपं क्षणादिह ।
विषयार्थं(र्थे)षणामुक्तं नात्र कार्या विचारणा ॥ ६२ ॥

प्रमेयं व्यवहारेषु साधनं येन तत्तया ।
विस्तरेणात्मनः प्राप्तिं ब्रूमः सिद्धिप्रदायिनीम् ॥ ६३ ॥

प्रमामूलान्वेषणायाः सद्यः प्राप्तिर्भवेत् सदा ।
तन्मूलस्यात्मनः सा हि तत एव समुत्थिता ॥ ६४ ॥

प्रमालयस्थानमिदं निर्णीय तत्त्वतः स्वयम् ।
आत्मलाभो भवेद्ध्यात्मा तद् विश्रान्तिमहास्पदम् ॥ ६५ ॥

प्रमाद्वयस्य मध्यं च नैरन्तर्यदशाजुषः ।
प्रविश्य युक्त्या सम्प्राप्तिः सद्यः स्यात्परमात्मनः ॥ ६६ ॥

प्रभवं च लयाधारं प्रमाया वीक्ष्य यत्नतः ।
सद्यश्चिद्रूपतां याति स्वभावेनैव मानवः ॥ ६७ ॥

विषयाश्रययोर्मध्ये यत्प्रमारूपमुत्तमम् ।
तत्परामर्शमात्रेण सद्यः स्यान्निर्वृतिः परा ॥ ६८ ॥

सत्त्वेऽप्यसत्कल्पता प्रमायाः सौक्ष्म्यतया भवेत् ।
तदेवाचेत्यचिन्मात्ररूपं नान्यदुदीरितम् ॥ ६९ ॥

तदुक्तं श्रीवसिष्ठेन मोक्षोपायेषु यत्नतः ।
"कान्तासंसक्तचित्तस्य चन्द्रे समुदिते सति ॥ ७० ॥

चन्द्रप्रत्ययसत्तात्मचिद्रूपोऽहमनामयः ।"
इत्येवं तत्र चन्द्रस्य प्रत्ययः सन्नपि स्फुटम् ॥ ७१ ॥

असत्कल्पः परं नैव द्वेषत्वेनापि भाषते ।
द्वेषभावेन भानं च सत्तायाः लक्षणं विदुः ॥ ७२ ॥
एवं क्रोधाद्यवस्थानां शान्त्यादिमूलता स्थिता ।
स्वविरुद्धे हि वस्त्वेतद्देशे भाति स्फुटं यतः ॥ ७३ ॥
नीले नीलं हि नाभाति पीते पीतं तथैव च ।
सिते कृष्णं तु भात्येव शान्ते सर्वं विभासते ॥ ७४ ॥
चिति चेत्यं च भात्येव शुद्धायां मलभावतः ।
ज्ञातं शुद्धतया तच्च तत्र लीयेत निश्चितम् ॥ ७५ ॥
यस्मिन्काले च याऽवस्था मातुः स्यात्तदनन्तरम् ।
तस्या मूलविचारेण सद्यश्चिन्मयतां व्रजेत् ॥ ७६ ॥
अवस्था च प्रमामात्रं नान्यत्किञ्चित् कदाचन ।
प्रमामात्रं हि पुरुषोऽवस्था सत्तैव नापरम् ॥ ७७ ॥
अवस्थातृत्वकथनं कल्पनामात्रप्राणकम् ।
महाद्वैते तदप्यस्तु का हानिः पूर्णतापदे ॥ ७८ ॥
वृत्तित्रयं भवत्येव मध्यद्वारेण योगिनाम् ।
स्वात्मप्राप्तिकरं त्वेषा प्रमा सान्निध्यभागिनी ॥ ७९ ॥
प्रमामात्रं हि पुरुषस्तेन तद्द्वारतः स्फुटम् ।
सद्यो याति शिवं तेन तच्चर्चा महती कृता ॥ ८० ॥
माताऽयमस्फुटो मानं क्षोभाविष्टं तथैव च ।
मेयं स्थूलतया युक्तं प्रमा निकटवर्तिनी ॥ ८१ ॥
मानद्वारेण मेयत्वं माता गच्छत्यसंशयम् ।
प्रमाद्वारा शिवत्वं तु यथेच्छसि तथा कुरु ॥ ८२ ॥
मेयादिकं प्रमायां तु विश्राम्यत्येव सुस्फुटम् ।
साक्षाद्वा द्वारतो वाऽपि तथा चोक्तं पुरातनैः ॥ ८३ ॥
मेयं माने मातरि तत् सोऽपि तस्यां मितौ स्फुटम् ।
विश्राम्यतीति सैवैषा देवी विश्वैकजीवितम् ॥ ८४ ॥
प्रमान्तरं न प्रमायां ग्राहकं स्यात् कदाचन ।
स्वप्रकाशा ततः सेयं प्रकाशामर्शरूपिणी ॥ ८५ ॥
[1]"संविन्न किल वेद्या सा तत्त्वेनैव हि भासते" ।
इत्युक्तं हि महाशास्त्रे तन्त्रालोके महात्मभिः ॥ ८६ ॥

---

१. तन्त्रालोक १०।२७६ ।

मातृमाने च भिन्ने न मेये मानेन जातु न ।
बोधमात्रैकरूपत्वाद् बोधो हि नान्यबोध्यता ॥ ८७ ॥

स्वतः प्रामाण्यता माने स्वप्रकाशत्वमेककम् ।
ज्ञानग्राह्यं च बोध्यत्वं प्रामाण्यस्य न लक्षणम् ॥ ८८ ॥

मानं बहिर्मुखो बोधः प्रमान्तर्मुख एव सः ।
आन्ता रूपः शिवः प्रोक्तः सर्वान्तरतया स्थितेः ॥ ८९ ॥

प्रमोपाधेर्विनिर्मुक्ता प्रकाशाख्यः शिवः स्मृतः ।
अन्तर्मुखत्वं तस्यास्तु शिवैक्योन्मुखता परम् ॥ ९० ॥

सर्वगोऽपि यथा वायुस्तालवृन्तात् स्फुटीभवेत् ।
मानस्य वशतस्तद्वच्छिवो मानत्वभाग् भवेत् ॥ ९१ ॥

प्रमा चिन्मात्ररूपा तत्परमार्थेन विद्यते ।
फलत्वमस्य मिथ्यैव भात्युपाधिवशाद् भ्रमम् ॥ ९२ ॥

विकासं प्रमया याति माता सिद्धार्थतावशात् ।
माता विकासमायातः शिवः संकोचहानितः ॥ ९३ ॥

वस्त्विच्छामात्रवशतो माता संकोचमागतः ।
तत्प्रमाकाल एवासौ तं विहाय शिवीभवेत् ॥ ९४ ॥

वस्तुप्राप्तिक्षणे यस्तु विकासः स प्रमाकृतः ।
तां विना प्राप्तमप्येतद् वस्तु न प्राप्तमुच्यते ॥ ९५ ॥

प्रमाऽनन्तरमप्राप्तिकृता या दुःखभावना ।
सा नवीना नो प्रमायाः कार्यं सा हि क्षणाद्गता ॥ ९६ ॥

प्रमाकाले तु या मातुः शिवे विश्रान्तिरुत्तमा ।
सा प्रवृद्धैः परिज्ञेया नाप्रवुद्धैः कदाचन ॥ ९७ ॥

सुप्रवुद्धाः सर्वदैव सर्वथा तत्र निष्ठिताः ।
क्षणेषु तेषु का तेषां स्पृहा तन्मयचेतसाम् ॥ ९८ ॥

चलतो मार्गणस्येह मध्येऽङ्गुलप्रमाणके ।
देशे या स्थितिरस्त्येव सा येषां बुद्धिगोचरे ॥ ९९ ॥

तेऽत्र विज्ञा नेतरे तु वस्तुमोहेन मोहिताः ।
वस्तुमात्रैकनिष्ठास्ते नात्रादरतताः स्थिताः ॥ १०० ॥

प्रमायां सावधाना ये व्यवहारक्षणेऽपि ते ।
शिवैक्यभाजः सन्त्येव समाधौ कोऽत्र संशयः ॥ १०१ ॥

स्थूलेऽपि व्यवहारे ते क्रियारूपे तथा स्थिताः ।
क्रिया प्रमायाः स्थौल्यं नो इतरद्धोति वक्ष्यते ॥ १०२ ॥

रहस्यकथनेनालं बहुना यन्महादृशः ।
एतावतैव विज्ञाः स्युर्नेतरेषामधिक्रिया ॥ १०३ ॥

देहासक्तिर्विशेषेणार्गलाऽस्मिन् पण्डितैः स्मृता ।
निर्गतास्तु ततो यत्नं प्राप्ता एव परं पदम् ॥ १०४ ॥

विषयेभ्यो विरक्ता ये तेषामत्रास्त्यधिक्रिया ।
नास्माकं विषयासक्तचेतसां दृषदामिव ॥ १०५ ॥

श्रुत्वा गुरुमुखात्त्वेतल्लेशतः प्रकटीकृतम् ।
शास्त्रानुसारतो नात्रानुभवो नोऽस्ति तादृशः ॥ १०६ ॥

अत्राधिकारं भगवानस्मभ्यं चापि दास्यति ।
स्वशक्तिपातवशतो ह्यशक्यं तस्य किं भवेत् ॥ १०७ ॥

प्रमाया बहुरूपत्वमेकस्या अपि संस्थितम् ।
उपाधित्वशतो मिथ्या गगनस्येव वस्तुभिः ॥ १०८ ॥

मानं त्रिविधमेवास्ति मेयभेदवशेन यत् ।
मेयभेदान्मानभेदस्तच्च पूर्वं प्रकाशितम् ॥ १०९ ॥

सविमर्शप्रकाशस्य लेशत्वं तु पुरेरितम् ।
मानस्य न पुनस्तत्राऽऽयासो युक्तो निरर्थकः ॥ ११० ॥

ये तु बोधाबोधरूपसामग्र्या मानतार्थिनः ।
भेदवादरतास्ते स्युः कथेयं तैर्न शोभते ॥ १११ ॥

प्रमायाः फलभावस्तैः कथ्यते सत्यभावतः ।
कथयन्तु हि सूक्ष्मेयं दृष्टिरस्माभिरीरिता ॥ ११२ ॥

मीमांसकैस्तु मानस्य बोधत्वं सम्यगीरितम् ।
ज्ञाततायास्तु फलता भ्रमेणोक्ता तु तैर्वृथा ॥ ११३ ॥

साध्यतायां मानभावः फलता सिद्धताजुषः ।
कथं तस्यैव युक्ता स्यादिति निर्णीयतां बुधाः ॥ ११४ ॥

विसंवादकताभावो मानस्योक्तस्तु सौगतैः ।
उपेक्ष्ये नास्य दृष्टोऽसौ मानता तु स्फुरं(टं)स्थिता ॥ ११५ ॥

तुल्यसामग्र्यधीनस्य ज्ञानस्य मानताकृति ।
भ्रम एवास्ति केयं स्यात्तुल्यताऽद्वैतशासने ॥ ११६ ॥

सांख्यैर्बुद्धेर्मानताया वृत्तेरुक्ता सुनिश्चितैः ।
सा युक्ता किन्तु बुद्धेस्तु कर्तृता नास्ति शोभना ॥ ११७ ॥

प्रत्यक्षस्यैव मानत्वं चार्वाकैः कथितं तु यत् ।
तन्न युक्तं प्रमेयानां बहुत्वेनैव संस्थितेः ॥ ११८ ॥

मानेषु शब्दत्यागो यः स बौद्धानां महान् भ्रमः ।
स एव ज्येष्ठः श्रेष्ठश्च मानानां समुदाहृतम् ॥ ११९ ॥

स्वशिक्षितैर्यदाऽनन्यं प्रोक्तं मानेषु यत्नतः ।
तद्युक्तं भेदवादेऽस्ति मानचर्चा हि भेदवाक् ॥ १२० ॥

मानबाह्यैकविषयं प्रोक्तं नान्तरगं बुधैः ।
स्वसाधके हि मानत्वं न युक्तं न च सम्भवि ॥ १२१ ॥

प्रमातुर्व्यतिरिक्तं तु मुख्यं बाह्यं प्रकीर्तितम् ।
गौणं त्वन्तःकरणतो बाह्यं तदपि मुख्यतः ॥ १२२ ॥

चिन्मात्राद् भेदतो भातो माताऽपि बाह्य ईरितः ।
ततो भेदेन भातस्तु घटोऽप्यान्तरभावभाक् ॥ १२३ ॥

न बाह्यं बाह्यतो बाह्यं केवलं तत्र बाह्यता ।
न युक्ता स्यात्ततो बाह्यमान्तरापेक्षया स्फुटम् ॥ १२४ ॥

आन्तरस्तु शिवोऽस्त्येकः सारभावेन संस्थितेः ।
माता चापि स एवोक्तो यस्मात् सर्वप्रकाशकः ॥ १२५ ॥

कर्तृतोन्मुखता मातुस्तृचः कर्तरि संस्थितेः ।
स्थौल्ये स एव कर्ता स्यात् कारकत्वेन निश्चितः ॥ १२६ ॥

मेयं तु स्थौल्यमाश्रित्य कार्यं कर्मणि ण्यत्स्मृतेः ।
मानं करणमित्युक्तं ल्युटस्तत्र स्थितेस्तथा ॥ १२७ ॥

प्रमा क्रियेति संप्रोक्ता भावे प्रत्ययलाभतः ।
तस्याश्च फलभावः स्यात् साध्यत्वात् सर्वदा स्थितः ॥ १२८ ॥

सिद्धत्वं नैव तस्या यत् क्वचिद् घटपटादिवत् ।
क्रिया दृष्टेयां(क्रियां दृष्ट्वे)ह केनापि सिद्धं हि दृष्टतापदम् ॥ १२९ ॥

या त्वोदनस्य फलता सा तदाश्रयभावतः ।
तण्डुलत्वेन सिद्धि तन्न मुख्यां फलतां श्रयेत् ॥ १३० ॥

विक्लित्तिर्याऽस्य सैवास्य विशेषोऽयं क्रियाकृतः ।
विशेषस्य फलत्वं नो गुणत्वेनैव संस्थितेः ॥ १३१ ॥

क्रियाश्रयस्य कर्तुर्नो फलत्वं युज्यते यतः।
कर्तृत्वेनैव स क्रान्तः प्रदेशः सिद्धतास्पदम् ॥ १३२ ॥

विषयत्वकृतैवास्तु गौणीयमथवा स्फुटम्।
फलत्वकल्पनात् तेनातिव्याप्तिः कैव दूषिता ॥ १३३ ॥

एवं बुद्धिप्रमाता स्यात् प्रमा मानत्वभाजनम्।
स्वप्नावस्थाश्रितश्चैष कथितः शास्त्रपारगैः ॥ १३४ ॥

धीभावानन्तरं सोऽयं पूर्वां प्राणदशां स्वकाम्।
पुष्टीकरोति देहस्य भाविनः स्थितिकारिणीम् ॥ १३५ ॥

स एष प्राणकोशोऽस्ति वेदान्तेषु प्रकीर्तितः।
शैवे नयेऽस्य कथनं गतत्वान्न कृतं पुनः ॥ १३६ ॥

यत्पुष्टीभावमात्रेण तत्त्वान्तरप्रकल्पना।
न युक्ता तेन नास्येह मातृत्वं समुदीरितम् ॥ १३७ ॥

कोश(शा)नामेव मातृत्वव्यपदेश इह स्थितः।
वेद्यजातं समस्तं हि शिवस्यैव निजं वपुः ॥ १३८ ॥

बहिश्चान्तश्च देहस्य भाविनो व्यापको भवेत्।
सूक्ष्मप्राणेऽप्यतः सोऽयं प्राणकर्मकरूपभाक् ॥ १३९ ॥

नासिकागुदरन्ध्रैस्तु बहिर्वै द्वादशाङ्गुलम्।
याति चिच्छक्तिघटितः पुनश्चान्तर्निरन्तरम् ॥ १४० ॥

प्रतिरोमं च देहेऽत्र प्रवेशनिर्गमान्वितः।
प्राणोऽयं नासिकाद्वारे स्फुटमेवाभिव्यज्यते ॥ १४१ ॥

एतत्पिण्डमयं बाह्यो वातोऽयं नेतरात्मकः।
बाह्यं नभो वात एव निष्पन्दत्वेन संस्थितः ॥ १४२ ॥

धीमाताऽसौ ततो बाह्यां विभूतिं द्रष्टुमुत्सुकः।
स्थूलं द्वाराश्रयं देहं स्वात्मत्वेनाथ कल्पयन् ॥ १४३ ॥

पुंदेहं प्राणभावेन प्रविश्यात्र न साततः।
रेतोभावं प्रयात्येव स्वभाववशतः स्फुटम् ॥ १४४ ॥

उपस्थद्वयसंघट्टात् स्त्रीगर्भं प्राप्य तत्र सः।
पुमान् स्त्री वा भवेदेव देहमाता स एव च ॥ १४५ ॥

पञ्चमाहुतिभावेन पुंसां जन्मग्रहः स्मृतः।
वेदान्तेषु तथैवास्तु को ग्रहः कल्पनास्वयम् ॥ १४६ ॥

मातापित्रोः सुसंयोगात् समतादेहसंज्ञिकः ।
इन्द्रियाख्यैर्महाद्वारैराश्रितो जायते स्फुटम् ॥ १४७ ॥

जाग्रन्मयोऽयं सम्प्रोक्त इन्द्रियैरर्थलब्धितः ।
इन्द्रियैरर्थबोधो हि जागरा समुदाहृता ॥ १४८ ॥

यथाऽऽकाशोऽतिसूक्ष्मोऽपि वातादित्वस्य भाजनम् ।
तथा प्रकाशः शून्यादिमातृभावस्य भाजनम् ॥ १४९ ॥

आदौ स्थूलस्य देहस्य स्त्रीपुंसाभावतः कुतः ।
उत्पत्तिरिति चेन्नात्र विज्ञाः स्मो वाच्यतामहे ॥ १५० ॥

आदिरेव न यत्रास्ति तत्र काऽऽधेयकल्पना ।
कालदेशौ यदाधारौ सर्वदा जन्मिनां स्मृतौ ॥ १५१ ॥

तौ न संभवतो यत्र तत्र काऽऽदित्वकल्पना ।
तत्कल्पने तयोः कौ स्तो देशकालौ स्वजन्मनि ॥ १५२ ॥

कल्पादेरादिता चेत्तत् स कल्पो देहवत् स्फुटम् ।
कल्पानामप्यनन्तत्वाद् विवादपतितो भवेत् ॥ १५३ ॥

प्रतिदेहं तु कल्पादिः कल्पान्तोऽप्यस्ति नो मते ।
कल्पादि जन्म संप्रोक्तं कल्पान्तो मरणं तथा ॥ १५४ ॥

द्वन्द्वयोगं विनाऽप्यादौ देहजन्म भवेद् यदि ।
को दोषो जन्मकीटानां तं विनापि यतः स्फुटम् ॥ १५५ ॥

सर्वं सम्भवतीवात्र न परं दृष्टिगोचरः ।
शक्तेः परशिवाकाश इत्यलं वाग्विकल्पितैः ॥ १५६ ॥

भाव्यत्र निर्णयो नेह क्लिश्यते भूयसा वृथा ।
प्रसङ्गगतचर्चा हि न बह्वी शोभना स्मृता ॥ १५७ ॥

सरूपता निजाऽत्रास्य व्यज्यतेऽन्तविभागता ।
स्थूले देहेऽपि सत्तेयं पुष्टत्वेनावभासते ॥ १५८ ॥

ततो द्वारैर्बहिर्यातो विषयानाश्रयत्यसौ ।
तान् समाश्रित्य तत्रैव समतामधिगच्छति ॥ १५९ ॥

समताभावनादार्ढ्यात् स्वात्मतां तत्र कल्पयेत् ।
यक्षभावनया तत्त्वं प्रयाति हि नरः स्फुटम् ॥ १६० ॥

यद्यप्येते निजं रूपं परमार्थे न सर्वदा ।
तथापि भागतस्तत्र स्वात्मत्वं भ्रमकारणम् ॥ १६१ ॥

अत्रावरोहः प्रथमं दर्शितो भेदतः स्फुटम् ।
नावरूढोऽस्ति नारोढुमधिकारी यतः स्थितः ॥ १६२ ॥

याऽऽरूढिस्तु स्वभावेन नासावारूढिरुच्यते ।
द्वयमेतद्धि सापेक्ष्यं स्यादन्योन्यं प्रति स्फुटम् ॥ १६३ ॥

नास्वादविषयाप्येषा रूढिरप्रतियोगिनी ।
को भुक्तमरिचः स्वादमिक्षुरादृतिमानयेत् ॥ १६४ ॥

भट्टनारायणेनापि स्तोत्रे प्रोक्तमिदं स्वके ।
[1]"नमस्ते भवसम्भ्रान्तभ्रान्तिमुद्भाव्य भिन्दते" ॥ १६५ ॥

विषयेभ्यः समारोहोपायभूतो मया पुरा ।
विवेकः प्रोदितः सम्यक् पुनर्नायिस्यते वृथा ॥ १६६ ॥

सम्पन्नोऽस्मीति भावेषु ग्रह आत्मतया स्फुटः ।
[2]"आत्मा वै पुत्र नामासी"त्येवं श्रुतिरपि स्थिता ॥ १६७ ॥

विषयाणां विनाशे च स्वं विनष्टं यतः पुमान् ।
विजानाति ततोऽप्यस्ति तेषु स्वात्मतया ग्रहः ॥ १६८ ॥

मेयत्वं स्फुटमेवास्ति विषयाणां यतस्ततः ।
मातृत्वं नात्र युक्तं स्यात् स्वात्मत्वाख्यमसंशयः ॥ १६९ ॥

ततश्चार्वाकसिद्धान्तनीत्योत्थाय ततो हठात् ।
देहात्मत्वं समाश्रित्य बाह्यं मेयतया श्रयेत् ॥ १७० ॥

कृशः स्थूलोऽहमिति या वसादेहपदा तथा ।
देहस्य स्फुटमेवास्ति स्वात्मता निरुपप्लवा ॥ १७१ ॥

वेदेऽप्यन्नमयस्यास्य देहस्य मातृता स्फुटम् ।
प्रोक्तास्ति"अन्नमयाः प्राणाः" इत्यादेर्वाक्यपूगतः ॥ १७२ ॥

देहोपयोगि बाह्यं तु सेवनीयं प्रवाहतः ।
देशकालाविरुद्धं चेन्नान्यथेति विनिश्चयः ॥ १७३ ॥

ततो देहैकनिष्ठः सन् बाह्ये शिथिलिताशयः ।
देहार्थे विषयापेक्षां दृष्ट्वा देहं च दूषयेत् ॥ १७४ ॥

देहनिन्दा च बहुधा शास्त्रेषूक्ता मनीषिभिः ।
तत एवावगन्तव्या नोच्यते विस्तृतेर्भयात् ॥ १७५ ॥

---

१. स्तवचिन्तामणिः ७१ । २. पारस्करगृह्यसूत्रं १।१६।१८ ।

नश्वरत्वात् तथावस्थाभेदाद् व्याधिनिपीडनात् ।
क्लेदित्वेनार्थविषयापेक्षोत्पादनहेतुतः ॥ १७६ ॥

पराधीनतया स्थितया ताडनादिभयात्तथा ।
अन्यतोऽथ च हिंस्रेभ्यो भीतेर्भोज्यतया स्थितेः ॥ १७७ ॥

मलमूत्राकरत्वेन जुगुप्सापदभावतः ।
संक्षेपतोऽस्ति निन्द्योऽयं देहो देहभृतां सदा ॥ १७८ ॥

देहे मातृत्वबुद्धिर्या स लोष्ठे मातृताभ्रमः ।
लोष्ठे स्वात्मभ्रमेणार्तो लोष्ठ एव न संशयः ॥ १७९ ॥

तस्माद्देहात्ममुक्ताय प्राणे मातृत्वभावना ।
कार्या स्वप्ने हि देहोऽयं स्फुटं नान्वेति कञ्चन ॥ १८० ॥

तत्रापि भाति यो देहः स एतद्वासनामयः ।
अन्यथा पतितेन स्युः कथमेतेन ताः क्रियाः ॥ १८१ ॥

वासना च न किञ्चित् स्याद् भावनामात्ररूपिणी ।
भावना हि क्षयं याति क्षणात् सत्यावबोधतः ॥ १८२ ॥

देहपुष्टिप्रदः प्राणो माता ज्ञेयो न देहकः ।
तन्निघर्षेण हृदये बोधोऽयं जायते यतः ॥ १८३ ॥

वेदे सूत्रतयाऽस्यैव जीवभावो निगद्यते ।
जीवस्य मातृभावोऽयं निःसंशयमिह स्थितः ॥ १८४ ॥

प्राणिमीति तृषार्तोऽहं क्षुधा चेति च सुस्फुटम् ।
व्यवहारात् प्रमातृत्वं प्राणे स्थितिमुपागतम् ॥ १८५ ॥

प्राणनं क्षुच्च तृट् चैषा प्राणधर्मा व्यवस्थिताः ।
अन्यथा स्पन्दितः प्राणः कथं तत्र हितो भवेत् ॥ १८६ ॥

परमार्थविचारे तु प्राणस्यापि न मातृता ।
बोधकारणता याऽस्य न तया मातृता भवेत् ॥ १८७ ॥

विषयादेश्च बोधस्योत्पत्तौ कारणता स्थिता ।
तस्यापि मातृभावोऽयं प्रसज्येतात्मताभिधम् ॥ १८८ ॥

बोधकारणता चास्य सत्यतो नैव विद्यते ।
चित्क्षोभकारितामात्रं भ्रान्त्या तत्त्वेन कल्प्यते ॥ १८९ ॥

तालवृन्तनयाद् वायुरुत्पन्न इति विभ्रमः ।
तद् भ्रान्तिमात्रं भवति वायुर्ह्येष सदागतिः ॥ १९० ॥

प्राणादुत्थाय विज्ञानमिदं मातृतया ततः ।
ग्राह्यं ज्ञानस्वरूपं तु न प्राणो जडभावतः ॥ १९१ ॥

प्राणे जडत्वं सुस्पष्टं युक्तिर्नात्रोपयोगिनी ।
बाह्यवातस्य भागोऽयं योऽतोऽस्त्येव विनिश्चयात् ॥ १९२ ॥

घटं जानाम्यहमिति सामानाधिकरण्यतः ।
अहन्ता बुद्धिगा ज्ञेया मातृताऽहंपदं स्मृता ॥ १९३ ॥

प्रतिबिम्बन्ति सर्वेऽर्था बुद्धावेव यतः स्फुटम् ।
बुद्धिरेव ततो माता मातृता ह्यर्थबिम्बनात् ॥ १९४ ॥

वेदे विज्ञानमयता कथिता ब्रह्मणः स्फुटम् ।
ब्रह्म चेतनमेवास्ति माता च चेतनः स्मृतः ॥ १९५ ॥

अत्रापि च क्षणं स्थित्वा ग्राह्यं शून्यपदं ततः ।
सुषुप्तौ नहि विज्ञानं केनचिदनुभूयते ॥ १९६ ॥

विच्छेदो नैव युक्तोऽस्ति मातुरात्मत्वहानितः ।
आत्मा हि सततं भाति नो चेदात्मा कथं न सः ॥ १९७ ॥

मनसोऽपि च मातृत्वं वेदेषु शङ्कितं तु यत् ।
प्रत्याख्यातमनेनैव तदप्यस्ति न संशयः ॥ १९८ ॥

धीचित्तयोर्विभेदे हि लेशमात्रेण संस्थितः ।
नाऽत्र यत्नः पृथग्युक्त इत्यलं चोद्यचञ्चुता ॥ १९९ ॥

सूक्ष्मप्राणस्तु मध्येऽत्र स्फुटं यद्यपि संस्थितः ।
तथापि पूर्वमेवास्य मातृत्वं विनिवारितम् ॥ २०० ॥

स्वकार्यान्नहि भेदोऽस्ति कारणस्य कदाचन ।
कारणानुगुणं कार्यं यस्मात् सर्वत्र दृश्यते ॥ २०१ ॥

यद्यपि स्थूलतायुक्तस्यास्य प्राणस्य मातृता ।
वेदान्तिगृहगैवास्ति तथापीहापि सा मता ॥ २०२ ॥

सूक्ष्मप्राणस्य मातृत्वशङ्कया विनिवर्तने ।
उपचारदिशा नातः पूर्वापरविरुद्धता ॥ २०३ ॥
तदेवं मातृता शून्ये न किञ्चिन्मातृरूपिणि ।
स्थितिं गता समस्तानां वस्तूनां साररूपिणि ॥ २०४ ॥
शून्यात् सर्वं समुद्भूतं शून्ये सर्वं प्रतिष्ठितम् ।
पर्यन्ते सर्ववस्तूनां शून्यमेवावशिष्यते ॥ २०५ ॥

बाह्यशून्यात् समुद्भूतिर्वाय्वादेः स्फुटमीक्ष्यते ।
तत्रैवावस्थितिस्तत्र लयश्चैव न संशयः ॥ २०६ ॥

अन्तःशून्यं बहिःशून्यं तिर्यगूर्ध्वमधस्तथा ।
व्यापकं शून्यमेवास्ति नात्र कार्या विचारणा ॥ २०७ ॥

यदेतद्भासते सर्वं तच्छून्यस्यैव वैभवम् ।
जलमात्रं यथा भङ्गः शून्यमात्रं तथा जगत् ॥ २०८ ॥

शून्येऽस्मिन् प्राप्तनिष्ठा ये ते शून्याख्यं पदं गताः ।
विश्रान्ताः स्युर्यतः शून्यं पदं पार्यन्तिकं स्मृतम् ॥ २०९ ॥

परमाणुचयोऽप्येष शून्यमात्रं स्थितं भवेत् ।
पृथ्व्यादिकमतः सर्वं शून्यसारं स्मृतं बुधैः ॥ २१० ॥

विभागकल्पनायां यत् पर्यन्ते शून्यमात्रकम् ।
शिष्यते सर्वभूतानां स एवाणुचयो मतः ॥ २११ ॥

पृथ्वीयं लीयते ह्यप्सु लोष्ठवत्ताश्च तेजसि ।
आर्द्रवस्त्रे जलमिव वाते तल्लीयते स्फुटम् ॥ २१२ ॥

दीपवद् वायुरप्येष लीयते शून्यमात्रके ।
आकाशे शून्यमेवेह स्फुटमेवावशिष्यते ॥ २१३ ॥

प्रमातापि च शून्योऽयं न किञ्चिन्मातृरूपधृत् ।
गर्भेऽस्य शून्यभावो हि मृतौ चैवाप्यसंशयम् ॥ २१४ ॥

प्रतिरात्रं सुषुप्तौ च मध्येषु च क्षणे-क्षणे ।
शून्यरूपः प्रमाताऽयं स्वभावेनैव सर्वदा ॥ २१५ ॥

किञ्चिन्मात्रतया भानं यत्तच्छून्यस्य वैभवम् ।
नहि तुच्छं शून्यमेतत् सर्वसारं हि तत् स्मृतम् ॥ २१६ ॥

एवं सुषुप्तौ मातृत्वं शून्यस्यैव स्थितिं गतम् ।
न किञ्चिदासमिति यत् स्मृतिर्भावितया स्थिता ॥ २१७ ॥

सुखानुभव एषोऽत्र योऽप्यस्त्यौत्तरकालिकात् ।
परामर्शाच्चानुमेयः सोऽपि नो वेद्यतापदम् ॥ २१८ ॥

केवलं सोऽपि शून्यात्मा दुःखाभावस्वरूपकः ।
लेशतोऽप्यत्र दुःखं हि भाववन्नात्र भासते ॥ २१९ ॥

नैयायिकैस्तथा बौद्धैः शून्ये कृतपदैः स्फुटम् ।
दुःखात्यन्ताभाव एव स्फुटं मोक्षतया मतः ॥ २२० ॥

किञ्चिद्भावो महादुःखं न किञ्चित्त्वं महामृतम् ।
संसारभारविश्रान्तिः सैवोक्ताऽत्युत्तमैर्बुधैः ॥ २२१ ॥

किञ्चिदेव न यत्रास्ति तत्र का दुःखकल्पना ।
सुखं च दुःखमेवास्ति विषसम्पृक्तभोज्यवत् ॥ २२२ ॥

यत्र बाह्यं नान्तरं वा वस्तु स्वात्मा च किञ्चन ।
तत्र विश्रान्तिभाजो ये ते मुक्ताः संसृतेर्नराः ॥ २२३ ॥

स्फुटं दिनकृतं खेदं घननिद्रा हरत्यलम् ।
घननिद्रैव सुप्तिः स्यात् सेयं शून्यैकरूपिणी ॥ २२४ ॥

नाशोऽयं ननु को नाशः स्वरूपावस्थितिर्हि सः ।
घटो नष्टो हि मृद्रूपो भवत्येव न संशयः ॥ २२५ ॥

स्वरूपं शून्यमेवाहुः सर्वस्यापि मतो बुधाः ।
मृतिस्तद्भावसम्पत्तिः शोकस्यावसरोऽस्ति कः ॥ २२६ ॥

मृतिरत्यन्तनाशश्चेत् तद्भवामयसंशयः ।
भूयः शरीरलाभश्चेन्नव एव तदुद्भवः ॥ २२७ ॥

"कुकर्मे(र्म)भ्योऽथ चेद्भीतिः सा समेह परत्र च" ।
इत्युक्तं श्रीवसिष्ठेन मोक्षोपाये महर्षिणा ॥ २२८ ॥

कर्मात्र वासनामात्रं नान्यत्किञ्चन विद्यते ।
वास्यवासकयोः शून्यरूपत्वाद् वासनाऽपि का ॥ २२९ ॥

तथापि वासनानाशे यतितव्यं महाधिया ।
पिशाचीव यतो दुष्टा सा विवेकेन नश्यति ॥ २३० ॥

प्राणस्पन्दनिरोधेन तथा सत्सङ्गमेन च ।
सच्छास्त्रसेवया तद्वद्वासना विनिवर्तते ॥ २३१ ॥

व्यवहारेषु वैमुख्यादशुद्धेषु निरन्तरम् ।
शुद्धेषु चापि शैथिल्याद् वासनातानवं भवेत् ॥ २३२ ॥

शास्त्रेषु वासनानाशे योगाः प्रोक्ताः सहस्रशः ।
स्वभावतो नैर्विकल्प्यसंपादनकृतोद्यमाः ॥ २३३ ॥

विवेकवशतो या त्वनास्था भावेषु सादिता ।
वासनानाशने सेयं युक्तिः सुखकरी स्मृता ॥ २३४ ॥

सत्या वास्त्वथवाऽसत्या वासना तन्निरोधने ।
यत्नः कार्यो वासनो हि मृतौ न दुःखभाजनम् ॥ २३५ ॥

मृतिः समनुभूता चेद् भवेज्जीवद्भिरिच्छया ।
तां विना नैव किञ्चित् ते वाञ्छेयुर्भुवि मानवाः ॥ २३६ ॥

शान्ता जीवन्मृताः प्रोक्ताः शान्तेच्छाः सुजना बुधैः ।
जीवद्भावो हि वाञ्छैव केवलं सुखनाशिनी ॥ २३७ ॥

चित्रं सुखार्थिनो वाञ्छातापं यान्ति जना इमे ।
वाञ्छां त्यक्त्वा जगत्त्यक्तुं जगत्यक्त्वा सुखी भव ॥ २३८ ॥

यत्सुखं वाञ्छ्यते लोका(कै)स्तन्मयेनैव भूयताम् ।
भवनं वापि किं तत्र सुखमेव हि वो वपुः ॥ २३९ ॥

वाञ्छात्यागः शून्यभावो मृतिः सैषा प्रकीर्तिता ।
न मृतिर्देहनाशोऽयं सा जीवत्स्वपि संभवेत् ॥ २४० ॥

जीवन्नेव मृतो यः स न पुनर्मृतिमर्हति ।
देहनाशोऽस्य भारस्य त्याग एव न संशयः ॥ २४१ ॥

ममता मृत्युरित्युक्ताऽहंभावोऽन्तक इष्यते ।
ताभ्यां मुक्तो मृतेर्मुक्तो न पुनर्मृतिमर्हति ॥ २४२ ॥

शून्यावस्था द्विविधाऽऽस्ते स्वभावाद् यत्नतस्तथा ।
स्वभावजा निष्फला स्यात् सफला यत्नजा स्मृता ॥ २४३ ॥

सङ्कल्पहानं यत्नोऽत्र न हस्तादिविचालनम् ।
अभावनं च तस्य स्याद्रूपं स्फुटतया स्थितम् ॥ २४४ ॥

अभावनं भावनायास्त्यागो नान्यत् कदाचन ।
स सिद्ध एव सर्वस्य साध्यं भावनमेव यत् ॥ २४५ ॥

सिद्धोऽर्थो हस्तमायाति न येषां ते कथं किल ।
व्यवहारेऽपि योग्याः स्युः साध्ये यत्नशतैरपि ॥ २४६ ॥

तस्माद् या या स्फुरत्यत्र हृदये भावना स्वयम् ।
सा सा त्याज्या विचारेण नाहमित्येव निश्चयात् ॥ २४७ ॥

नाहमित्येव विश्रान्तिर्जीवस्य परमा स्मृता ।
अहन्ता हि महाभारः क्व विश्रान्तिस्तया हृते ॥ २४८ ॥

यत्राऽहं तत्र दुःखौघः स्वयमेवोपतिष्ठते ।
नाहं यत्र कथा तत्र तस्य काऽऽश्रयहानितः ॥ २४९ ॥

नाहमित्येव विश्रामः खिन्नानां भव ध्वन्वनि(च भवाध्वनि) ।
भारोपरि महाभारारोपणं स्यादहंग्रहः ॥ २५० ॥

नाहमित्येवमुक्त्वा तु तूष्णीम्भूता[ः] स्युरेव ये ।
ते विश्रान्ता नेतरे तु तत्र वाचालताजुषः ॥ २५१ ॥

नेदमित्येव सोपानं नाहमित्यस्य कीर्तितम् ।
महाशून्यतया सेयं स्थितिः प्रोक्ता पुरातनैः ॥ २५२ ॥

यत्राहं तत्र सर्वं स्यान्मदभावे तु कः परः ।
पराभावे तु योऽहं स्यां न सोऽहं त्वदभावतः ॥ २५३ ॥

त्वयाहं त्वं मया तद्वदावां कौ स्वः स्वरूपतः ।
अभाव आवयोस्तस्मादन्योन्याश्रयभावतः ॥ २५४ ॥

तस्यास्य च कथा कैव शून्यसाम्राज्य उत्तमे ।
त्वमहं यत्र लीनौ स्वो दुरुच्छेद्यौ स्वभावतः ॥ २५५ ॥

त्वं मा भव ततो नाहं स्यामित्येव विनिश्चयः ।
अथवा नाहमेव स्यां कस्त्वं स्याः कस्य मे वद ॥ २५६ ॥

त्वयि चासति सोऽयं च कौ स्तः शून्यपदे मम ।
त्वमेव सोऽयं भावेनावस्थाभेदेन भासि यत् ॥ २५७ ॥

न स्यां चेन्नैव कोऽपि स्यात् सन् वास्तु मम का क्षतिः ।
आकाशपुष्पं तापेन नैवं ह मलिनीकृतम् ॥ २५८ ॥

नासनस्य तु साध्यत्वभ्रमः कोऽयं निरर्थकः ।
स्वयमेव तु यो नास्ति तस्य को नासने श्रमः ॥ २५९ ॥

पूर्वं नासं तथाग्रे च न भविष्यामि निश्चितम् ।
मध्ये सन्नपि नैवास्मि पिशाच इव मन्दिरे ॥ २६० ॥

शून्यमात्रमतः सोऽहं सोऽहमित्यस्य वा कथा ।
न युक्ता शून्यमेवास्ति यतस्तच्चापि नास्ति वा ॥ २६१ ॥

नास्तीत्यपि च वा नास्ति महाशून्यपदेऽत्र यत् ।
तद्वाचालङ्कृतं चालं सर्वशान्तिर्हि सर्वशः ॥ २६२ ॥

शान्तिर्वापि गता सेयं गतत्वं चापि कीदृशम् ।
यं प्रत्येतत् स एवास्मि न किञ्चित् स्वस्वभावतः ॥ २६३ ॥

भावे वा किमपीवास्मि तत्त्वं यद्वाक्पदेऽस्ति न ।
कस्त्वं तत्र ममास्येष भव वा मम किं क्षतम् ॥ २६४ ॥

नास्मि नास्मीति नास्मीति कथनं स्वासनं यतः ।
स्फुटीकरोति मौनं तत्करिष्याम्येव सर्वशः ॥ २६५ ॥

करणं वापि मौनस्य किं स्यादिति न विद्महे।
प्रयत्नेनाहृतं तद्धि वाचालत्वं बुधैः स्मृतम् ॥ २६६ ॥

यदायाति प्रवाहेन तत्रैव शून्यभावना।
परावस्था स्मृता मौनममौनं वाऽस्तु किं मम ॥ २६७ ॥

भावनापि किमेवात्र भावे सा हि स्थितिं व्रजेत्।
सर्वथा भावनं यत् सा शून्यावस्था प्रकीर्तिता ॥ २६८ ॥

अभावनं स्वयं सिद्धं न यत्नं समपेक्ष्यते।
यन्नाहं भावनं तस्माद्वैमुख्यं केवलं शिवम् ॥ २६९ ॥

अहो जनः स्वयंसिद्धं त्यक्त्वा यत्नाहृतं भजन्।
क्षोभमायाति नो तस्माद् भावयाम्यत्र किञ्चन ॥ २७० ॥

स्वस्यैव भावनं मूलं शून्यभावनसन्ततेः।
न भावयामीति ततो नोक्तं युक्तं विभासते ॥ २७१ ॥

न भावयामीति बुधाः फलतः स्वस्य भावनम्।
अन्यस्य भावनं तस्मिन् सति क्वेवोपगच्छति ॥ २७२ ॥

अभावनं भावनं वा स्वस्य वाऽन्यस्य यत्स्फुटम्।
तत्त्यक्त्वा या तु निष्ठा स्याच्छून्यनिष्ठा परन्तु सा ॥ २७३ ॥

शून्यं च नैव शून्यं स्यादवस्थाभावयोगतः।
अवस्था हि स्थितिः प्रोक्ता स्थितिः सत्ता न शून्यकम् ॥२७४॥

शून्यं किमपि तद्युक्तं यत्र नास्मि च नासि च।
नान्यदस्ति न नास्तीति वर्तते न च शून्यकम् ॥ २७५ ॥

लग्ना ये स्युर्विषयनिचये स्वात्मभावान्न तैः स्या-
च्चर्चा युक्ता ननु समतया ये तु लग्ना त एते।
संश्राव्यन्ते किमिह ममतानश्वरे भावजाते
प्रेक्षायुक्तः क इह ममतां सेवते वीचिजाले ॥ २७६ ॥

ये सेवन्ते ननु ममतया नश्वरं भावजातं
दूराद्भ्रान्तं जडजनमतौ वस्तुभावेन सम्यक्।
गृह्णन्त्येते कथमिव न ते पद्मिनीनां दलस्थं
मुक्ताभ्रान्त्या जलकणचयं भानमात्रेण सिद्धम् ॥ २७७ ॥

देहेऽप्येवं न च समुचिता कर्तुमेषाऽस्त्यहन्ता
काऽहन्ता स्याद्वदत तृणवद्दाहयोग्येऽत्र निन्द्ये।

त्यागो भावी स्फुटमिह यतोऽस्यास्ति तेनाप्यहन्ता
योग्याऽस्मिन्नो नहि मतिमता सेव्यते त्यागयोगी ॥ २७८ ॥

देहो वेदक एष यैर्ननु मतो मूढैर्जनैर्जाड्यतो
नूनं तैर्मृत एष जातु विषये कुत्रापि भूमौ लुठन् ।
नो दृष्टोऽथ च बालिशैस्तु यदि तैर्दृष्टापि संकथ्यते
लोष्टं चात्मतया वदन्तु नहि तैः सेयं कथाऽस्त्येव नः ॥ २७९ ॥

स्थिता देहे येऽस्मिन्नयमहमिति भ्रान्तिवशतः
पिशाचे संभ्रान्ता अहमितिरतास्ते स्युरनिशम् ।
तदर्थं भोगे ये क्षपितसकलायुर्वनचया-
स्त एतद्वल्यर्थे क्षपितविभवा मूढनिवहाः ॥ २८० ॥

क आत्मंस्त्वां क्षोभो बहिरिह जनामाननकृतः
शरीरे संल्लग्नं परिदहति रात्रिन्दिनमयम् ।
जनो यस्मात् सर्वो निजनिजशरीरे स्थितवत-
स्तवैवार्चासक्तस्त्यज परमिमां देहकलनाम् ॥ २८१ ॥

प्रकाशं स्वात्मानं परमिह शरीरीकृतवतो
दृषत्त्वं युक्तं स्यात् स्फुटमिह महाजाड्यवशतः ।
शरीरं चिद्रूपं परिकलयतो त्यक्तवपुषो
बहिश्चान्तश्चैतच्चितिमयतया भानमुचितम् ॥ २८२ ॥

देहो देहतया प्रमातृपदवीं नो सेवते लेशत-
श्चिद्भावेन तु साऽस्य केन ह्रियते तस्यां हि युक्तैव सा ।
चिद्भावोऽस्य च सूक्ष्मदेहवदयं यत्नानपेक्षः स्फुटं
स्वप्ने जाग्रति चापि देहकलना तुल्यैव नो भेदिनी ॥ २८३ ॥

चितौ दग्धं यावन्न भवति शरीरं परचितौ
बुधैस्तावद्दाह्यं तृणमिव महाग्नौ परधिया ।
ततो दग्धो देहो न भवति पुनर्दाहविषयो
न दग्धं काष्ठं यद्दहति दहनोऽन्तर्गतमपि ॥ २८४ ॥

देहो देहो न भवति निजो मातृबुद्ध्या गृहीतो
मेयीकार्यस्तदयमनिशं प्राणमातृत्वमेत्य ।
पृष्ठे पुंसा धृत इह यतो वाहनो वाहनो नो
बा [बा]ह्याधःकृतिविषयतां नीत एवेति तत्ताम् ॥ २८५ ॥

बलं देहे प्राणे ! भवति ननु सारोऽपि स तथा
ततो माता प्राणो जगति न शरीरं क्वचिदपि ।
धियं त्वालम्ब्याद्योऽय त्यज पवनगां मातृकलनां
न वायोर्मातृत्वं खलु समुचितं दृष्टमथवा ॥ २८६ ॥

प्राणे वातांशरूपे कृतमतिरिह यो मातृभावेन मोहात्
तत्सङ्घातेऽपि बाह्ये पवन इह सतां किं न कुर्याद् विमूढः ।
कुर्वन् वा हासपात्रीभवति तु स तथा स्वात्मसंप्राप्तिबुद्ध्या
भ्राम्यन्नुन्मत्तरीत्या मृग इव परितो वातयुक्तान् प्रदेशान् ॥ २८७ ॥

चितः शक्तिः प्राणो ननु यदि मतो बुद्धिबलदो
न बाह्यो वातांशो भवति सततो योग्य इह वा ।
प्रमातृत्वे शक्तेर्नहि समुचिता भेदकलना
निजाधाराच्छक्ता त्यज परिमितां वातकलनाम् ॥ २८८ ॥

समुत्तिष्ठेद् यस्मात् प्रविशति च यत्राप्यविरतं
बहिश्चान्तश्चायं करतलहतः कर्मक इव ।
स एवासौ प्राणो न तु परिमिता वातकणिका
तदेनां त्वं मेयीकुरु मतिरिहात्मेति कलयन् ॥ २८९ ॥

विज्ञानेषु मुहुर्विनाशिषु धियं येऽप्यात्मनः कुर्वते
धिक् तान् मूढधियोऽम्बुशीकरचयं मुक्ताभ्रमाद् गृह्णतः ।
स्मृत्यादिव्यवहार एष तु कथं सिद्ध्येच्च तेषां यतो
मात्रैक्ये सति सिद्धिभाङ्निगदितः सोऽलं बुधैर्नान्यथा ॥ २९० ॥

मनोविज्ञानाख्यान्न भवति पृथग् वस्तु किमपि
प्रमातुस्तत्स्थौल्यं भवति हि तदेतत्परमिह ।
ततोऽस्मादुत्थाने ननु भवति तस्मादपि सुखं
समुत्थानं सिद्धं स्वयमिति न यत्नोऽत्र विहितः ॥ २९१ ॥

विज्ञानैक्यमिहास्तिताविषयतां यैर्नीयते पण्डितैः
स्मृत्यादेर्व्यवहारतो ननु न तैः संस्थीयते तेषु यत् ।
तन्मेयीकृति चान्तरीसमुचितश्चिन्मात्ररूपो ह्ययं
भङ्ग्यङ्गीकृत एव भाति परमो माता न विज्ञानकम् ॥ २९२ ॥

विज्ञानेषु बलं ददाति ननु यः प्राणः स चाऽप्येव नो
भिन्नो देहबलार्पकाद्भवति यत् प्राणात् परोक्तात् ततः ।
तन्मातृत्वनिवारणेन कथितं तस्यापि तत्स्याद्यतः
कार्यं कारणरूपमेव न पुनस्तस्माद्विभिन्नं भवेत् ॥ २९३ ॥

प्राणोऽयं स्फुरतीव यत्र गगने वातो यथा बाह्यखे
तस्यैवेह भवे भवेत् समुचिता सा मातृतासंशयम् ।
नार्थानां न च देहकस्य न च वा बुद्धेस्तथास्मिन् परे
प्राणे वा खलु सर्वमेतदनिशं शून्यैकसिद्धं यतः ॥ २९४ ॥

आसं किञ्चन पूर्वमेष न तवैवाग्रे भविष्यामि वा
नाद्याप्यस्मि विवेकतो भ्रमवशात् सिद्धेर्यथा यक्षकः ।
तत्सत्तामभुकेव शून्यवपुषो भावाश्च केऽमी पुरो
भाताः स्युः परमाणुभावखचितास्तच्छून्यमात्रं जगत् ॥ २९५ ॥

प्रमातृत्वं शून्ये खलु भवति युक्तं परमिदं
सुषुप्तौ सर्वान्ते भजति हि तदेकं स्थितिकलाम् ।
मृतौ चैषाऽवस्था स्फुरति च सदा गर्भसदने
तथावस्था मध्ये कवलितसमस्तार्थनिचये ॥ २९६ ॥

प्राणापानगमागमान्तरपदे बाह्ये द्विषट्को द्विधा
हृद्देशेऽपि तथैव देहसदने प्रत्यङ्गुलं खद्वये ।
शून्यं भाति यतस्ततोऽस्ति सततं तस्यैव सत्ता परं
मातृत्वं च ततोऽस्य केवलमिदं माता हि सन्नापरः ॥ २९७ ॥

विज्ञानेषु स्फुरणविषयेष्वेषु मध्येऽपि शून्यं
भात्येवैतत् स्फुटमिह सदाधारभावेन प्रोतम् ।
ज्ञानाधारं भवति च परं मातृरूपं तदेतत्
शून्यं माता ननु समुचितो नापरं जाड्यधामा ॥ २९८ ॥

अभावाख्ये लीनाः परमिह भवन्त्येव सततं
समाधौ मौनाख्ये दृषदिव महामौनकलिताः ।
ततो मौनं रूपं भवति च प्रमातुर्निजमिदं
तदेतच्छून्याख्यं पदमिह भवेन्मातृ न परम् ॥ २९९ ॥

माता शून्यं परमिह यतः प्रोक्तितो जीव एव
सुप्तेः स्वप्नानुभवचतुरो दृश्यते सद्य एषः ।
नामाताऽसौ भवति तु कदाप्येव माता हि सुप्तौ
मेये ज्ञाने स्फुटमिह भजत्येव मातृत्वमेतत् ॥ ३०० ॥

शून्याख्यं निजमेव रूपमथवा तस्यात्र भाति स्फुटं
भानं तच्च न हन्ति तस्य सहजं सुप्तत्वमेतद् भृशम् ।

उद्भ्रान्तं ह्यपि शून्यमेव परमं नो भेदवाचः पदं
तत्तर्कि विनिहन्ति हे ननु बुधाः केयं कथा शाम्यताम् ॥ ३०१ ॥

शान्तेर्नान्यद्भवति च किमप्येव विश्रान्तिगेहं
शान्तिः सेयं भवति च परं शून्यतापत्तिरेव ।
शून्यत्वं तद्भवति च सदा कल्पनाया अभावः
सा केव स्याज्जगति विषयाभावतो सिद्धरूपा ॥ ३०२ ॥

सो भावः सुस्फुटमिह परं सिद्धरूपोऽस्ति कोऽस्मिन्
यत्नः शान्तिः स्वयमिह ततः सिद्धरूपा तथैव ।
शान्तौ यत्स्यात् सुखमिह न तत् स्वर्गलोकेऽपि लभ्यं
चित्रं लोको निजकरगतां तां विहायात्र शक्तः ॥ ३०३ ॥

आशैवेयं भवति तु परं शान्तिनाशे रता सा
कस्मिन् कार्या वदत विकलेष्वेषु भावेषु नित्यम् ।
कस्यार्थे वा भवति हि निजो देह एष स्वकीयो
नान्यार्थे यो भजति ननु तां धिक् तमेतं विमूढम् ॥ ३०४ ॥

आशा स्फूर्तौ भवति सहजा शान्तिरेवात्र सिद्धा
तच्छून्यत्वं जगति परमं नो ह्ययं देहनाशः ।
सा विश्रान्तिरथ च परमा दीर्घसंसारमार्गे
खिन्नो जीवो भजति हि महासौख्यमत्रैव शान्तः ॥ ३०५ ॥

मृतौ चेयं पूर्वं स्फुरति परमा सुप्तिरमला
स्वभावात् सर्वेषां परसुखमयी शून्यबहुला ।
विमूढा संस्कारात् पुनरपि तथा संसृतिजुषो
भवेयुर्बुद्धाः स्युर्लयमथ गतास्तन्मयतया ॥ ३०६ ॥

निःसंकल्पो भवति तु मृतो देहयोगेऽपि देही
चेत् संकल्पी भवति तु तदा देहनाशेऽपि जीवन् ।
जीवत्वं तद् भवति च महासंसृते रूपमेतद्
मृत्युर्मुक्तिर्भवति तदियं सोऽपि संकल्पहानिः ॥ ३०७ ॥

निःसंकल्पो भवति पुरुषश्चेत्तदा मुक्त एव
नो चेद्बद्धो जगति निगडैर्भावरूपैः समन्तात् ।
भावाः शून्ये यदि परिणतास्तत्कथं बद्धचर्चा
शून्यस्थोऽयं भवति तदयं मुक्त एवेह माता ॥ ३०८ ॥

शरीराच्छून्यान्तं सकलमपि भातं यदि भवेत्
शिवस्यैतद्रूपं ननु विषयवत् सर्गं(र्वं)वपुषः ।
तदारोहो न स्यात् पुनरपि पदे क्वापि विबुधा
न चेच्चिन्मात्राख्यं पदमिह भवेत् प्राप्यमिह वः ॥ ३०९ ॥

देहो बुद्धिः प्राण एषोऽथ शून्यं निर्णीतं यच्चात्र तत्सर्वमेव ।
सोपानं स्याद्विद्धि कस्यापि प्राप्तौ शून्यं तत्राऽप्यस्ति मे(मा)तुस्तु मध्ये ॥ ३१० ॥

शून्यादारूढो ह्यभेदात्मके स्यात् प्राप्तस्थाने चित्पदाख्ये विशुद्धे ।
तस्मादेवाथावरूढोऽस्ति प्राप्तो भेदाख्येऽस्मिन् द्वैपदे चेत्यरूपे ॥ ३११ ॥

सीमा सेयं शून्यरूपास्ति मध्ये भेदाभेदाख्ये द्वयेनाख्यरूपा ।
प्राप्तो योऽत्रास्त्येव विश्रान्तिभागी सोऽयं प्रोक्तो मध्यसन्धौ महद्भिः ॥३१२॥

एतन्मात्रासादनेनैव यः स्यात् प्राप्तं सत्यः स्वे पदे सोऽयमेव ।
प्रोक्तः शून्याख्यः पिशाचो महद्भिः पैशाचं रूपं यतः शून्यमात्रम् ॥ ३१३ ॥

तस्मादुक्ता यैव तूर्णं त्वमुष्मात् स्थानं ग्राह्यं चिन्मयं साक्षिरूपम् ।
शून्यं सिद्धं तद्विना कुत्र दृष्टं दृष्टं वा चित्साक्ष्यसिद्धं प्रदिष्टम् ॥ ३१४ ॥

एवं मातृविनिर्णयो गुरुमुखात् पूर्वं श्रुतः शाश्वतो
दृष्टश्चाथ मया स्फुटं निगदितो देहादिशून्यान्तगः ।
श्रुत्वैतन्ननु भक्तितः सुधिषणाः स्थानेऽत्र शून्यात्मके
विश्रान्ता न चिरेण चिन्मयमपि स्थानं प्रयान्त्युन्मुखाः ॥ ३१५ ॥

इति श्रीमदाराध्यतमाचार्यवर्य-श्रीगुरुवर-राजानक-भास्करकण्ठविरचिते
चित्तानुबोधाख्ये महाशास्त्रे देहादिशून्यान्तमातृतत्त्वनिर्णायकं
द्वितीयं प्रकरणं सम्पूर्णम् । इति शिवम् ॥ २ ॥

## तृतीयं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः ।
ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः ।
ॐ तद्द्वयसामरस्यरूपायै गुरुपादुकायै नमः ।
ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः ।

अथ शून्यपदादूर्ध्वं चिन्मात्राख्यं पदं महत् ।
स्थितं निर्णीयते येन तत्रारोहः सुखं भवेत् ॥ १ ॥

शून्यं चैतत् कथं योग्यं मातृत्वे चेतनास्पदे ।
केन वन्ध्यासुतो दृष्टो वस्तुग्रहणतत्परः ॥ २ ॥

स्वयमेव तु यत्रा(न्ना)स्तिस्वरूपं तस्य का कथा ।
परेषामस्तितादाने तमः किं दीपदीपकम् ॥ ३ ॥

अत्र शून्ये कृतास्था ये बाह्याकाशे तु ते कथम् ।
गृहसंस्था न कुर्वन्ति विस्तृतेति समेति च ॥ ४ ॥

शून्यं च सर्वदैवैतच्छून्यमित्येव निश्चयः ।
नाशून्यं तत्कदाप्येव माता किञ्चिन्न शून्यकम् ॥ ५ ॥

यस्याभावस्य सर्वे स्युः प्रतियोगितया स्थिताः ।
तच्छून्यं तस्य मातृत्वं कथं माता हि सर्वगः ॥ ६ ॥

न स्वाभावस्वरूपः स्यात् कोऽपि कुत्रापि जातुचित् ।
भवन् वा न निजं रूपं लभते स्वेन बाधितम् ॥ ७ ॥

दृश्यत्वं नात्र युक्तं स्यात् स्वाभावग्रहणे तथा ।
भवेत् सानुपलब्धिर्वा काऽस्यास्ते न विशेष्यता ॥ ८ ॥

द्रष्टा हि माता नो दृश्यं तत्त्वे स मेयतां श्रयेत् ।
सा न युक्ता तथा चोक्तमाचार्यैस्तत्त्वदर्शिभिः ॥ ९ ॥

"यत्प्रमेयीकृतोऽस्मीति सर्वोऽप्यात्मनि लज्जते" ।
कथं प्रमेयीकरणं सहतां तन्महेश्वरः ॥ १० ॥

तादात्म्याभावसंसिद्धौ तार्किकैश्चाप्युदाहृता ।
केवलानुपलब्धिश्च शशशृङ्गस्वरूपिणी ॥ ११ ॥

मातृरूपतया भावः कथं ग्राह्यो भवेदतः।
ग्रहणं हि विना मानमसम्भवपराहतम् ॥ १२ ॥

माता कोऽत्र भवेन्नैव स्वाभावे कोऽपि मातृताम्।
भजतीह भजन् वा स्यान्न शून्यं साक्षिभावतः ॥ १३ ॥

प्रमाकथाऽत्र कैवास्ति मानाभावे विशेषतः।
करणासम्भवे सत्ता का फलस्य जगद्गता ॥ १४ ॥

आश्रयो न प्रमायाः स्यात् शून्यं तुच्छतया स्थितम्।
नहि वृक्षं विना पक्षी कुलायकरणोद्यतः ॥ १५ ॥

विषयः सम्भवश्चास्याः केवलः शक्तिभाजनम्।
मानमात्रोरभावे प्रमोत्पत्तिः शशशृङ्गवत् ॥ १६ ॥

तन्मातुः शून्यरूपस्य ग्रहणं नैव युज्यते।
त्रयाभावादतः शून्यं मातेति विहतं वचः ॥ १७ ॥

ग्रहणं तु विना सत्ताऽङ्गीकारे सर्वमेव सत्।
किं न स्यादिति कोऽयं स्यान्मातेह शून्यरूपकः ॥ १८ ॥

मेयानामपि शून्यत्वं न युक्तं परमार्थतः।
केवलं सन्निवेशोऽयं तेषां शून्यीभवेद्यतः ॥ १९ ॥

सन्निवेशे विनष्टेऽपि कोऽर्थेषु शून्यताभ्रमः।
ऊर्मिकात्वे विनष्टेऽपि किं सुवर्णं विनश्यति ॥ २० ॥

अन्यस्य सत्तया सत्ताभाक्त्वं वा शून्यता भवेत्।
मृत्सत्तयैव तद्युक्तो घटः शून्यवपुर्यतः ॥ २१ ॥

स्वप्रकाशं तदेतच्चेत् सिद्धमेव समीहितम्।
अस्माकं यत एषा स्याच्चिदङ्गीकृतिरुज्ज्वला ॥ २२ ॥

प्रकाशः स्वं भवेद्यस्य शून्यता तस्य का भवेत्।
स्वमसाधारणी सत्ता स्फुरत्ता तु प्रकाशवाक् ॥ २३ ॥

स्वेन प्रकाशो यस्येति व्याख्यायां यद्यसौ न सन्।
कस्य प्रकाशो भवति सन्नेवास्य हि गोचरः ॥ २४ ॥

स्वस्य प्रकाश इति च व्याख्यायामपि दूषणम्।
पूर्वोक्तमेव तदलं स्वप्रकाशगिराऽन्यया ॥ २५ ॥

जडत्वाच्चैव शून्यं नो योग्यं स्यान्मातृतापदे।
शून्यं हि ज्ञानविषयो माता ज्ञानाश्रयो मतः ॥ २६ ॥

विषयो जडपक्षे स्यादाश्रयश्चेतनस्ततः ।
शून्यस्य मातृता युक्ता न स्वप्नेऽपि कदाचन ॥ २७ ॥
शून्यीभावो न युक्तः स्यात्सतोऽसत्तः कदाचन ।
केवलं मेयशून्यत्वं शून्यत्वं त्वत्र युक्तिमत् ॥ २८ ॥

[1]"अशून्यं शून्यमित्याहुः शून्यं चाभाव इष्यते ।
अभावः स तु विज्ञेयो यत्र भावाः क्षयं गताः" ॥ २९ ॥
एवं स्वच्छन्दशास्त्रेऽपि मेयाभावस्य शून्यता ।
प्रोक्ता श्रीपरमेशेन गिरिजायाः स्वकण्ठतः ॥ ३० ॥

भावनापि कथं स्थैर्यं याति शून्येष्व(न्ये स्व)नाशके ।
यान्तीवाऽभावकाख्यं सा स्वाश्रयं सत्त्वमानयेत् ॥ ३१ ॥
स एव माता शून्यत्वं तस्य किं सत्त्वसन्निधौ ।
दीपस्य सन्निधाने किं तमस्तिष्ठेदनश्वरम् ॥ ३२ ॥

[2]"नाभावो भाव्यतामेति न च तत्रास्य मूढ़ता ।
यतोऽभियोगसंस्पर्शात् तदासीदिति निश्चयः" ॥ ३३ ॥
इत्युक्ता स्पन्दशास्त्रेऽपि भावनाया अयोग्यता ।
अभावे विषये तस्मान्नाभावो भावनापदम् ॥ ३४ ॥

भावना चेत् स्वयं सत्ता तत्तरां शून्यताक्षतिः ।
मातुर्भवेद् भावना हि भूधातो रूपमुज्ज्वलम् ॥ ३५ ॥
अभावितः प्रमाता स्यात् किंरूप इति कथ्यताम् ।
भावितस्यैव यत्सत्ता वस्तुनः प्रकटीभवेत् ॥ ३६ ॥

अभावेनापि न स्थैर्यं याति शून्ये निरात्मके ।
भावितं ह्येव तस्याः स्यात् पदं सिद्धतया स्थितम् ॥ ३७ ॥
अभावना भावनैव न स्वयं कापि सा स्थिता ।
प्रतियोगिवशेनैव यदभावस्य सिद्धता ॥ ३८ ॥

नादोऽत्र योगो यः सोऽयं देशकालवशात् स्थितः ।
देशकालौ तु मिथ्यैव कल्पनामात्ररूपिणौ ॥ ३९ ॥
तस्माच्छून्यस्य मातृत्वं न कदाचिच्छ्रुतिं गतम् ।
गतं वापि न युक्तं स्याच्छब्दो हि द्विविधः स्थितः ॥ ४० ॥
चेत्याभाववशाच्छून्यं चिन्मात्रं यदि वो मतम् ।
तद्युक्तं नहि नास्त्यस्तिविवादः स हि वस्तुनि ॥ ४१ ॥

---

१. स्वच्छन्दतन्त्रं ४।२९१ । २. स्पन्दकारिका १२ ।

तस्माच्छून्यात्ममुक्ताय ग्राह्यं चिन्मात्रमास्पदम् ।
मातृभावस्य धीरेण बोधमात्रस्वरूपकम् ॥ ४२ ॥

चिन्मात्रं चेत्यनिर्मुक्तमचेत्योन्मुखमेव च ।
चेत्यस्पर्शे मध्यरूपमिति त्रेधा स्थितं सदा ॥ ४३ ॥

आद्यं तत्र महाशान्तमशान्तेर्निगमात् स्मृतम् ।
द्वितीयं शान्तमेव स्यादशान्तिस्पर्शवर्जनात् ॥ ४४ ॥

अशान्तमध्यगं शान्तं तृतीयं परिकीर्तितम् ।
महावधानगम्यं तद् योगिनां पदमुत्तमम् ॥ ४५ ॥

तच्चिन्मात्रं तु किंरूपमिति चेद् ब्रूमहेऽत्र किम् ।
कथ्यमानं हि तच्चेत्यरूपतामेव संश्रयेत् ॥ ४६ ॥

[1]"यदभिन्नं स्वसंवित्तौ तत्परस्य यदोच्यते ।
तदा भिन्नमिवाभाति शाब्दीं भूमिमुपागतम्" ॥ ४७ ॥

इति वामनदत्तेन गुरुणापि निवेदितम् ।
संवित्प्रकाशे शास्त्रे स्वे पराद्वैतपरायणे ॥ ४८ ॥

विधानमत्र नो युक्तमात्मभावेन सर्वदा ।
प्राप्तत्वान्न निषेधोऽपि तरां तेनैव हेतुना ॥ ४९ ॥

स्यामित्येवं विधिर्ह्यत्र नवीनत्वस्य साधकः ।
स्वमेव प्रेरकं शब्दद्वारेणात्रास्ति को विधिः ॥ ५० ॥

प्रेर्यं चापि तदेवात्र द्वितीयस्याप्रवेशतः ।
विधेः पूर्वं ततः सिद्धमन्यथा का विधेः स्थितिः ॥ ५१ ॥

प्रेर्यप्रेरकयोर्नैव वियोगः संभवत्ययम् ।
विधिर्निषेध एषोऽपि विषयाश्रयविच्युतेः ॥ ५२ ॥

अतद्व्यावृत्तिरूपेण द्वयमप्यत्र वा भवेत् ।
अस्या रूपं निषेधो हि विधौ विश्रान्तिभाक् स्फुटम् ॥ ५३ ॥

मौनमप्यत्र नो युक्तं प्रकटे काऽस्ति मौनवाक् ।
प्राकट्यं स्वात्ममात्रे तु परां काष्ठामुपागतम् ॥ ५४ ॥

महाङ्गीकाररूपं तु मानं च युज्यतेऽत्र वा ।
अङ्गीकारे हि वाक्स्फूर्तिर्महत्त्वे तस्य मौनता ॥ ५५ ॥

---

१. संवित्प्रकाशः २।१८–१९ ।

प्रत्याख्यानं साधनं स्यात् साधनं चापि तत्तथा ।
अनिर्वाच्ये पदे तत्र सर्वथावाच्यतामहे(ये) ॥ ५६ ॥

लक्षणैः कथनं तस्य न युक्तं लक्ष्यभावतः ।
गतस्य धर्मनिवहै रहितत्वादनाकृतेः ॥ ५७ ॥

लक्षणं चापि भातं स्यात् तस्य सर्वं जगत्तथा ।
धर्मत्वेनैव सर्वं हि जगत्तत्र व्यवस्थितम् ॥ ५८ ॥

प्रमाणं किमपीवात्र प्रवृत्तिं नैव यात्यलम् ।
सर्वदाधिगतत्वेन प्रमेयत्वाद् बहिःस्थितौ ॥ ५९ ॥

सर्वं प्रमाणजातं वा तत्रैवास्ति कृतस्थिति ।
तरङ्गेषु स्थितं यत्स्यात् तज्जलस्थं हि संस्मृतम् ॥ ६० ॥

येन जीवति माताऽहो तदन्वेषणतत्परः ।
भवत्येव जलं मीनैश्चित्रं क्वास्तीति मृग्यते ॥ ६१ ॥

जलेन जीवन्मीनोऽत्र जलं नादृतिमानयेत् ।
चिता जीवन्विमूढस्तां तथा नादृतिमानयेत् ॥ ६२ ॥

जलाद्विनिर्गतो मीनः क्षणं जीवति वा स्फुटम् ।
चिता विरहितो जीवो न संभवति जातुचित् ॥ ६३ ॥

मृताण्डरूपो देहो यश्चिन्मात्रेणैव जीवति ।
तन्मार्ताण्डः स एवाऽयं स्वात्माकाशे स्थितिं गतः ॥ ६४ ॥

येन जीवति लोकोऽयं चित्रं तत्रैव विन्दते ।
विन्दनं वात्र किं तद्यत् तस्य तद्विन्दनं वृथा ॥ ६५ ॥

अनादृतिमनादृत्य केवलं चित्पदास्पदा ।
या स्थितिः सैव तत्प्राप्तिनर्थिवद् ग्रहणात्मिका ॥ ६६ ॥

चिन्मात्रं तत्किमप्येव यस्य मात्रच्-प्रयोगतः ।
स्वशक्तेश्चैत्यरूपाया व्यवच्छेदः परं स्थितः ॥ ६७ ॥

चेत्याभावोऽसंभवेन हृतो यद्यपि सुस्फुटम् ।
तथाप्युक्तः प्रकल्प्यैव चित्स्वरूपविविक्तये ॥ ६८ ॥

नित्यं स्वे ह्येव चेत्यं स्यादन्यद् बाह्यं न चेद्भवेत् ।
अन्यथा जडतापत्तेः स्फटिकादेर्यथा स्फुटम् ॥ ६९ ॥

बाह्याभावोऽपि नो युक्तः कदाचिदपि न क्वचित् ।
सर्वदा सर्वरूपिण्यश्चितश्चित्त्वान्निजात् सदा ॥ ७० ॥

[1]"अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः।
महेश्वरत्वं संवित्त्वं तदत्यक्षत् घटादिवत्" ॥ ७१ ॥

इत्युक्तं हि निजे शास्त्रे गुरुभिः सूक्ष्मदर्शिभिः।
महेश्वरोऽत्र चिन्मात्रमेव नान्यः कदाचन ॥ ७२ ॥

इत्यलं प्रकृतं ब्रूमश्चिन्मात्रस्य विनिर्णये।
केयं परशिवावस्था कथा साग्रे भविष्यति ॥ ७३ ॥

चिन्मात्रं चेत्यनिर्मुक्तं चेत्यं न सहतेतराम्।
नास्य चेत्यं स्वमप्येतद् बाह्यस्यात्र कथैव का ॥ ७४ ॥

यदि स्वं तस्य चेत्यं स्यात् चित्त्वं युक्तं कथं भवेत्।
कर्तुर्हि विषयीभावो दूषितस्तत्त्वदर्शिभिः ॥ ७५ ॥

चेत्यभावश्चितो मा भूश्चेत्यं चितिमयं भवेत्।
इति चेदस्तु का हानिश्चितः साम्राज्यकीर्तनात् ॥ ७६ ॥

कथं न हानिर्व्यावर्त्यं मात्रचः किं भवेत्ततः।
मास्त्वेव किञ्चित्तस्यापि चेत्यत्वाच्चिद्धि केवला ॥ ७७ ॥

चितश्चिन्मात्रता नश्येद् यस्य कस्यापि कल्पनात्।
असंभवोऽपि चेत्यस्य चेत्यतामेव संश्रयेत् ॥ ७८ ॥

सोऽपि मा स्यान्मासनं च तस्य युक्तं न विद्महे।
आ चेत्यचित्सन्निधौ तदस्ति किञ्चिन्न युक्तिमत् ॥ ७९ ॥

एकासौ न दशैवास्ति साऽपि वा जाड्यदूषिता।
नास्त्येव परमार्थेन नासनं चेत्यलं वचः ॥ ८० ॥
तच्चिन्मात्रं महाशान्तरूपत्वाज्जडवत्स्थितम्।
न जडं परमार्थेन चिद्भावेन सदा स्थितेः ॥ ८१ ॥

असत्त्वं तस्य जात्वेव न संभवसहं स्मृतम्।
एकजीवमृतौ सर्वेऽन्यथा स्युर्मृतिभागिनः ॥ ८२ ॥
सन्मात्रमिति तत्तेन प्रोक्तं तत्त्वं मनीषिभिः।
अन्येषां तत्सत्तयैव सत्ताभाक्त्वेन सुस्फुटम् ॥ ८३ ॥

आनन्दरूपता चास्य स्वरूपत्वेन संस्थिता।
नो चेत् समाधिकाले स्यात् कथमानन्दविस्फुरा ॥ ८४ ॥
सुषुप्त्यादौ च याऽऽनन्दस्फूर्तिः साप्येव तत्स्फुरा।
अज्ञानवलितस्यास्ति मातुर्यत्तत्र मज्जनम् ॥ ८५ ॥

---

१. बहुषु ग्रन्थेपूद्धृतस्यास्य न क्वाप्याकरनिर्देशः।

स्वकार्येण विना ज्ञानं स्थितं सूक्ष्मतया यतः ।
तत्र तेनावृतिं कर्तुं न शक्तं जाग्रदादिवत् ॥ ८६ ॥

स्वप्नादौ कार्यसद्भावादज्ञानं पुष्टिमागतम् ।
आनन्दरूपतां स्वस्य वृणोत्येव न संशयः ॥ ८७ ॥

तत्राज्ञानस्य विषय आनन्दश्चितिराश्रयः ।
आनन्दश्चितिरित्येवं द्वयमेकं स्वभावतः ॥ ८८ ॥

अज्ञानस्याश्रयो जीवः पदं ब्रह्मेति ये विदुः ।
न ते तज्ज्ञविभागस्याज्ञानकार्यत्वसंश्रुतेः ॥ ८९ ॥

सत्ताऽपि न चितो भिन्ना स्फुरत्तामात्ररूपिणी ।
स्फुरणं हि चितो रूपं को भेद एकरूपिणोः ॥ ९० ॥

सन्मात्रगा तु सत्ताऽसौ भावगत्वेन भासते ।
जलसत्ता यथा मूढे स्फुटं भाति तरङ्गगा ॥ ९१ ॥

सत्ताश्रितेषु भावेषु भाति सा धर्मभावतः ।
द्विविधोऽयं विपर्यासो दृश्यते मूढनिष्ठितः ॥ ९२ ॥

अभानं नैव सत्तायाश्चितेश्च युज्यते स्फुटम् ।
तदभानेऽन्यसत्ताऽपि न स्फुरेदिति निश्चयः ॥ ९३ ॥

आनन्दस्यापि भानं वा भवत्येव मनाग्यतः ।
प्रेम सर्वस्य सहजं दृश्यते स्वात्मनि स्फुटम् ॥ ९४ ॥

दुःखे प्रेम न जात्वेव युज्यते कुत्रचिद् यतः ।
दुःखाभावोऽयमानन्द एव नान्यत् कदाचन ॥ ९५ ॥

दुःखादिवशतो येऽपि हन्तुं स्वात्मानमुद्यताः ।
परात्परं स्फुटं तेषां प्रेम स्वात्मनि विद्यते ॥ ९६ ॥

रूपत्रयेण भात्येतच्चिन्मात्रमिति सुस्फुटम् ।
न भातीव च यत्तत्र विकल्पो न कृतस्थितिः ॥ ९७ ॥

विकल्पेन स्फुटं वस्तु गृहीतमिति भासते ।
नान्यथा तत्र तस्यास्ति न योग्या स्थितिरित्यलम् ॥ ९८ ॥

यथाऽन्यत्र गते चित्ते न भातमिव भासते ।
भातं वस्तु तथा भाति नैव चिन्मात्रमग्रगम् ॥ ९९ ॥

अहो येनैव भातीदं सर्वं तन्नैव कस्यचित् ।
भाति भो घट आभाति न सूर्य इति का गतिः ॥ १०० ॥

यथा पटे चित्रपूर्णे सन्धिबन्धेषु संस्थिताः ।
पटलेशास्तथा चेत्यपूर्णायां चिति चित्कणाः ॥ १०१ ॥

सत्त्वेऽप्यसत्कल्पमिव मध्यदेशेषु चिन्नभः ।
गङ्गासूर्यसुतामध्ये यथैवासौ सरस्वती ॥ १०२ ॥

इडा गङ्गा समाख्याता पिङ्गला यमुना नदी ।
सुषुम्ना मध्यदेशे तु प्रोक्ता सद्भिः सरस्वती ॥ १०३ ॥
इडायां मेयसोमोऽस्ति मानार्कः पिङ्गलाश्रयः ।
चिदग्निस्तु सुषुम्नायां वसत्येष महाप्रभः ॥ १०४ ॥

अग्निः पुष्टीकरोत्यर्कमर्कः सोमं तथैव च ।
सोमस्तथारभावेन भावान् सर्वान् प्रपूरयेत् ॥ १०५ ॥
रेतोभावस्तथारस्य चन्द्रोऽर्थस्य बुधैः स्मृतः ।
रेतसः सर्वभावाः स्युरित्यलं प्रकृतं शृणु ॥ १०६ ॥
अर्काग्न्योरैक्यबुद्धेश्चदमग्नीषोमात्मकं जगत् ।
बुधैः प्रोक्तं पुराविद्भिस्त्रितत्त्वं किञ्चिदात्मकम् ॥ १०७ ॥

इडा ज्ञेयमयी प्रोक्ता पिङ्गला ज्ञानरूपिणी ।
सुषुम्णेयं समाख्याता शुद्धचिन्मात्ररूपिणी ॥ १०८ ॥
इडाऽपानाश्रया प्रोक्ता पिङ्गला प्राणवाहिनी ।
सुषुम्णा शुद्धिचिन्मात्रवाहिनी मध्यगा स्मृता ॥ १०९ ॥

इडा क्रियामयी प्रोक्ता पिङ्गला ज्ञानरूपिणी ।
इच्छाशक्तिमयी प्रोक्ता सुषुम्णात्युत्तमैर्बुधैः ॥ ११० ॥

यद्यद् द्वयं विकल्पानां तन्मध्यं यन्निरामयम् ।
न किञ्चिद्भावभातं स्यात् तत्सुषुम्णेति निश्चयः ॥ १११ ॥

निर्विकल्पमवस्थानं सुषुम्णेति बुधैः स्मृतम् ।
यथा तथेति सिद्धान्तो नात्र लेशोऽस्ति तद्वपुः ॥ ११२ ॥
यस्य कस्यापि युग्मस्य मध्यदेशं समाश्रयेत् ।
तत्राचेत्यं हि चिन्मात्रं स्वभासा भाति भावपुः ॥ ११३ ॥
चिन्ता मध्येऽपि तस्यैव भानं श्रीस्पन्दशासने ।
प्रोक्तं श्रीवसुगुप्तेन भट्टनारायणेन च ॥ ११४ ॥
[1]"अहं सुखी च दुःखी च रक्तश्चेत्यादिसंविदः ।
सुखाद्यवस्थानुस्यूते वर्तन्तेऽन्यत्र ताः स्फुटम्" ॥ ११५ ॥

---

१. स्पन्दकारिका ४ ।

इत्येवमपि शास्त्रेऽत्र स्पन्दाख्ये मध्यचर्चनम् ।
अनुस्यूतं ह्यवस्थासु चिन्मात्रं मध्यदेशगम् ॥ ११६ ॥
[1]"जाग्रदादौ च तस्यैवाभिन्नत्वं भिन्नरूपिषु" ।
अत्रैवोक्तं महाशास्त्रे चेत्यचिन्मात्ररूपिणः ॥ ११७ ॥
[2]"न दुःखं न सुखं यत्र न ग्राह्यो ग्राहको न च ।
न चास्ति मूढभावोऽपि तदस्ति परमार्थतः" ॥ ११८ ॥
इत्येवमथ शास्त्रेऽत्र सत्ता तस्यैव कीर्तिता ।
अन्येषां तु बुधैः प्रोक्ता सत्ता तदुपजीविनी ॥ ११९ ॥
ऊर्ध्वं त्यक्त्वाऽधोऽविशेत् स वा(रा)मस्थो मध्यदेशगः ।
इत्येवं रामशब्देन प्राणापानान्तरं जगुः ॥ १२० ॥
ऊर्ध्वं प्रकाशरूपोऽत्र प्राण एव प्रकीर्तितः ।
अधोऽपानस्तथो(मो,रूपः सारशास्त्रेषु पण्डितैः ॥ १२१ ॥
प्रकाशतमसोर्मध्ये निरालम्बं महावपुः ।
शुद्धं तत्त्वं स्फुरत्येव योगिनस्तत्र निष्ठिताः ॥ १२२ ॥
तत्र केचित् प्रकाशाख्यमार्गेणात्र स्थितिं गताः ।
तदुक्तं श्रीभगवता गीतासु दयया स्वयम् ॥ १२३ ॥
[3]"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" ॥ १२४ ॥
अग्निर्ज्योतिःस्वरूपोऽत्र प्राण एव न बाह्यगः ।
दिनादि तस्य चारोऽत्र स्थूलसूक्ष्मदृशः प्रति ॥ १२५ ॥
प्राण एव हि देहेऽत्र पाचकोऽथ प्रकाशकः ।
उष्णत्वादथ विज्ञानहेतुभावाच्च सुस्फुटम् ॥ १२६ ॥
सर्वगोऽपि यथा वायुस्तालवृन्तात् स्फुटीभवेत् ।
सर्वव्यापि तथा ज्ञानं प्राणस्पन्दात् स्फुटीभवेत् ॥ १२७ ॥
हृदयाद् द्वादशान्तं हि प्राण एष चरन् मुहुः ।
हृदयेऽज्ञानमुद्भूतिं नयत्येव न संशयः ॥ १२८ ॥
तत्र स्थूलदृशः प्राणचारं दिनतया हृदि ।
प्रकल्प्यानुसरन्त्येव कालसौक्ष्म्यार्थिनो बुधाः ॥ १२९ ॥

---

१. स्पन्दकारिका ३ । २. स्पन्दकारिका ५ । ३. गीता ८।२४ ।

केचित्तं पक्षभावेन कल्पयन्त्येव योगिनः ।
सूक्ष्मदर्शितयाऽन्ये तं वत्सरान्ततया विदुः ॥ १३० ॥

द्वयस्यात्र प्रकाशत्वं स्फुटमेव जगद्गतम् ।
देवानां तु दिनं प्रोक्तमुत्तरायणमुत्तमम् ॥ १३१ ॥

द्वादशाब्दादिचर्चाऽत्र न कृतास्ति यतः स्वयम् ।
एतन्निष्ठस्तत्र रूढो भवितैव न संशयः ॥ १३२ ॥

दीर्घताकरणेनैव प्राणसौक्ष्म्यं स्फुटीभवेत् ।
सौक्ष्म्यं गतः प्राण एव चिन्मात्रं शुद्धमुत्तमम् ॥ १३३ ॥

रेचकाभ्यासनिष्ठा ये योगिनः सुमहाधियः ।
प्राणचारेण ते बाह्यमाकाशं प्राप्नुवन्ति हि ॥ १३४ ॥

बाह्याकाशो बृहत्त्वात्तु ब्रह्मेति कथितो बुधैः ।
तज्ज्ञा ब्रह्मविदः प्रोक्ताः प्रयाणं तत्र लीनता ॥ १३५ ॥

लीनास्ते तत्क्षणादेव तत्सात्मत्वमुपागताः ।
शुद्धं चिद्धाम संसृत्य तद्भावेन स्फुरन्त्यलम् ॥ १३६ ॥

"जपः प्राणसमः कार्यो दिनान्ते मोक्षकामिभिः" ।
इत्येवमुक्तं स्वच्छन्दशास्त्रेऽपि विभुना स्वयम् ॥ १३७ ॥

प्राणाख्यस्य दिनस्यान्तो बाह्याकाशो बुधैः स्मृतः ।
जपस्तत्र लयः प्रोक्तो. मन्त्रद्वारेण सूरिभिः ॥ १३८ ॥

सायंसन्ध्या च सेयं स्यात् प्राणार्कास्तमयी स्फुटम् ।
प्राणार्कास्तमयादत्र बाह्ये खे निश्चलीभवेत् ॥ १३९ ॥

हृत्सन्ध्या या बाह्यसन्ध्या देहस्पर्शं विना स्थितेः ।
अतिश्रेष्ठा बुधैः प्रोक्ता रेचकाभ्याससाधिता ॥ १४० ॥

बाह्येऽपि सायंसन्ध्यायाः प्राधान्यं समुदाहृतम् ।
"अजस्रं सायमारम्भ" इति प्राथम्यसंश्रुतेः ॥ १४१ ॥

शरीरत्याग एषोऽन्ते योगिनां भवतीव यत् ।
सर्गेणानेन तेनात्रावृत्तिर्नैव पुनः स्थिता ॥ १४२ ॥

अविशेषेण सर्वेषां प्रयाणं यद्यपि स्थितम् ।
मार्गेणानेन तत्रापि योगिनां कोऽपि निष्ठितः ॥ १४३ ॥

विदेहमुक्तास्तेनात्र नादृतेः पदमीरिताः ।
योगिनः केवलं नैव सर्वे एवेऽत्यलं बहु ॥ १४४ ॥

तमोमार्गं श्रिताः केचिद् योगिनस्तत्पदाप्तये ।
तदुक्तं श्रीभगवता गीतास्वेव दयालुना ॥ १४५ ॥
¹"धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते" ॥ १४६ ॥

श्लोकेनाऽनेन मार्गोऽत्र तम आख्यः प्रकीर्तितः ।
अपानचाररीत्या तु रात्र्यादिस्त्वत्र चेत्यलम् ॥ १४७ ॥

धूमोऽत्र तम एव स्यात् कृष्णभावेन संस्थितेः ।
अग्निशब्दानुरोधेन धूमशब्देन कीर्तनम् ॥ १४८ ॥

तम एवापानवायुः शरीरे जडभावतः ।
जडत्वं च द्विधा तत्र शीतत्वादथ मौढ्यतः ॥ १४९ ॥

अपानस्पन्दतो देहे शीतत्वं चात्र मूढता ।
मांसपुष्टीकृते प्राणोऽन्यथा किं पाचयेन्मुहुः ॥ १५० ॥

बाह्योऽपि चन्द्रमाः पुष्टिं नयत्यन्नं रसात्मकम् ।
सूर्यः पाचयते ह्यण्डब्रह्माण्डैक्यं बुधैः स्मृतम् ॥ १५१ ॥

धूमस्यापि जडत्वं स्याज्जलभावेन संस्थितेः ।
आर्द्रेन्धनेऽन्यथा धूमबाहुल्यं स्यान्न युक्तिमत् ॥ १५२ ॥

अपानो जलरूपोऽयं अधोगत्या बुधैः स्मृतः ।
अधः स्वभावतो याति जलमेव हि नेतरत् ॥ १५३ ॥

तस्यापानस्य चारोऽत्र स्थूलसूक्ष्ममतीन् प्रति ।
रात्रिः कृष्णश्च पक्षोऽथ दक्षिणायनमन्वतः ॥ १५४ ॥

अत्रापि द्वादशाब्दादिचर्चा भगवता कृता ।
नैव साम्मुख्यमात्रार्थं चिन्मात्रं यत्प्रकाशितम् ॥ १५५ ॥

रात्रिश्च कृष्णपक्षश्च उभौ रूपौ स्फुटं स्थितौ ।
दक्षिणायनमध्ये तद् देवानां रात्रिरुच्यते ॥ १५६ ॥

पूरकाभ्यासनिष्ठास्तु मार्गेणानेन निश्चितम् ।
हृद्देशं प्राप्नुवन्त्येव दहराख्यं चिदाश्रयम् ॥ १५७ ॥

तत्र चान्द्रमसं ज्योतिर्विज्ञानाख्यं स्फुटं स्थितम् ।
जीवो हि चन्द्रमाः प्रोक्तस्तज्ज्योतिर्ज्ञानमुच्यते ॥ १५८ ॥

---

१. गीता ८।२५ ।

तत्रावधाननिष्ठाश्च विज्ञाने सारभावतः।
चिद्धाम प्राप्नुवन्त्येव कालेनेति विनिश्चयः॥ १५९॥

सेयं प्राभातिको सन्ध्या बुधैर्मध्यफला स्मृता।
देहस्पर्शस्थिते भूयो निवृत्तेश्चेत्यलं बहु॥ १६०॥

विष(षु)वत् स्वयमप्यत्र बाह्ये हृदि तथैव च।
अयनद्वयमध्ये तु योगिगम्यं स्फुरत्यलम्॥ १६१॥

पूर्णत्वं वा दिननिशोः शिवशक्तिस्वरूपयोः।
द्वयस्यास्य मुखे स्फूर्तिं याति योगिवरेष्विह॥ १६२॥

अमावस्या द्वादशान्ते पितॄणां तृप्तिदा स्मृता।
पूर्णिमा हृदये प्रोक्ता देवानां तृप्तिकारिणी॥ १६३॥

ग्रहणद्वयमप्यत्र मेयमानलयात् स्मृतम्।
प्रथमं मध्यमं तत्र द्वितीयं तु महाफलम्॥ १६४॥

अपानसोमनाशात्तु चिदादित्योऽत्र सुस्फुटम्।
उदयं याति पुण्योऽयं कालस्तेन बुधैः स्मृतः॥ १६५॥

जीवन्मुक्तेषु मार्गोऽयं परं सम्भवतीह यत्।
तत आवृत्तिरत्रालं योगिनां समुदाहृता॥ १६६॥

सृतिद्वयमिदं तेजस्तमोरूपं परं स्थितम्।
एकया यात्यनावृत्तिं अन्ययाऽऽवर्तते पुनः॥ १६७॥

मार्गद्वयस्य मध्यं च द्विधान्तरथ बाह्यतः।
चिन्मात्ररूपं शुद्धं तन्निरालम्बतया स्थितम्॥ १६८॥

निर्वाणाख्ये प्रकरणे निर्णयोऽत्र महाकृतः।
श्रीवसिष्ठेनर्षिणैव भुशुण्डस्य कथान्तरे॥ १६९॥

कुम्भकं हि द्विधा तत्र प्रोक्तं बाह्यमथान्तरम्।
कुम्भको मध्यदेशस्यालम्भ एव बुधैः स्मृतः॥ १७०॥

मार्गद्वयेऽपि खिन्नोऽत्र विश्रान्तिं लभते पराम्।
कुम्भकाभ्यासनिष्ठो हि योगी प्राप्तपदः स्फुटम्॥ १७१॥

सृतित्वं तु द्वयस्यास्य स्वयं भगवतोदितम्।
सृत्या प्राप्तं स्वयं देशं प्राप्नोत्येव हि निःसृतः॥ १७२॥
मध्यचर्चा ततो नात्र स्फुटं भगवता कृता।
प्रसङ्गात्तु कृतास्माभिश्चर्चेयं लाघवात् स्वकात्॥ १७३॥

यद्यद्द्वन्द्वं जगत्यत्र सदृशं वा विलक्षणम् ।
तन्मध्ये चेत्यचिद्भानं स्थितमेवेति संग्रहः ॥ १७४ ॥

यदा ज्ञातिक्रमात् सद्यो मृत्युं प्राप्नोति मानवः ।
तदाज्ञाश्रुतिवेलायां प्राणापानौ लयं गतौ ॥ १७५ ॥

स्वभावतो मध्यधाम्नि हित्वा ब्रह्माण्डगोचरम् ।
भवेतां सावधानानां तज्ज्ञानां तत्र चिन्नभः ॥ १७६ ॥

हृद्देशे स्फूर्तिमायाति नैर्विकल्प्यदशाजुषि ।
मूढानां तत्र सौषुप्ती दशैव नितरां स्थिता ॥ १७७ ॥

आद्यन्तयोरवस्थानां मध्यवस्तु निरामयम् ।
स्फुरत्येतत्स्वभावेन तदुक्तं स्पन्दशासने ॥ १७८ ॥
[1]"तस्योपलब्धिः सततं त्रिपदा व्यभिचारिणि ।
नित्यं स्यात्सुप्रवुद्धस्य तदाद्यन्ते परस्य तु" ॥ १७९ ॥

सामान्यरूपमेवास्ति तद्वस्तु न विशेष्यतः ।
तज्ज्ञाः सामान्यनिष्ठाः स्युर्न विशेष्यरताः सदा ॥ १८० ॥

सामान्यं नैव भात्येतन्मूढबुद्धौ कदाचन ।
विशेष्यसमताग्रस्ता यतस्ते स्युः स्वभावतः ॥ १८१ ॥

सामान्यमेव सद्रूपं न विशेष्यः कदाचन ।
विशेष्येष्वपि या सत्ता सा सामान्यानुवेशतः ॥ १८२ ॥

सामान्यमेव धर्म्युक्तं न विशेष्यः कदाचन ।
विपर्ययेण मोहान्धैरन्यथा प्रक्रिया क्ष(क्ल)ता ॥ १८३ ॥

[2]"तत्त्वग्रामस्य सर्वस्य धर्मः स्यादनपायवान् ।
आत्मेव हि स्वभावात्मे"त्युक्तं श्रीत्रिशिरोमते ॥ १८४ ॥

विशेष्यैर्व्यवहारोऽयं बाह्यः सिद्ध्यति सुस्फुटम् ।
नान्तरोऽतो न तज्ज्ञाः स्युस्तन्मात्रैकपरायणाः ॥ १८५ ॥

अतितज्ज्ञास्तु वै सर्वकालं तन्मात्रदर्शिनः ।
महासामान्यनिष्ठानां तेषां चर्चेह नास्त्यलम् ॥ १८६ ॥

इह चिन्मात्रनिष्ठानां तज्ज्ञानामेव चर्चनम् ।
अभ्यासनिष्ठा तेषां स्याद्युक्ता नो बाह्यनिष्ठता ॥ १८७ ॥

---

१. स्पन्दकारिका १७ ।    २. तन्त्रालोकः १।८२ ।

प्रौढत्वे सापि कालेन तेषां हस्तगता भवेत् ।
इयं ज्ञानकला यस्मात् सकृज्ज्ञाताऽभिवर्धते ॥ १८८ ॥

शिवभावोन्मुखं तत्त्वं चिन्मात्रं परिकीर्तितम् ।
शिवो ह्यामर्शसंयुक्तश्चिन्मात्रं शान्ततापदम् ॥ १८९ ॥

अहमामर्श एवास्ति शक्तिः शिवपदे स्थिता ।
चिन्मात्रेऽसौ न युक्ता स्याद्युक्तत्वे शिव एव सः ॥ १९० ॥

स्वशक्त्यैक्यं गतः प्रोक्तः शिवः परशिवो बुधैः ।
पूर्णत्वं हि परत्वं स्यात् तच्छक्ते केवलं स्थितम् ॥ १९१ ॥

यदि चिन्मात्रमेवैतद् भाति शक्तिमयं तदा ।
आरोहो नास्ति कुत्रापि विश्रान्तिस्तत्र या स्थिता ॥ १९२ ॥

अनाश्रितः शिवः प्रोक्तश्चिन्मात्रं न परः शिवः ।
शान्तं ब्रह्म तदेवास्ति वेदान्तेषु स्थितिं गतम् ॥ १९३ ॥

शक्त्याश्रितः परो ज्ञेयः शिवो विश्रान्तिभूः स्वयम् ।
शक्यसत्त्वे तु तस्यास्ति परत्वस्य परा स्थितिः ॥ १९४ ॥

सोक्तमार्ये(र्गे)ण बुद्धयास्तु वेदान्तिभिरियं कृता ।
शान्ते ब्रह्मणि विश्रान्तिः क्षोभाशङ्कितबुद्धिभिः ॥ १९५ ॥

शक्तस्य नैव क्षोभोऽस्ति शक्त्या शून्यै(क्यै)श्च कश्चन ।
वह्नेः का क्षोभकलना दाह्यदाहे स्फुटं स्थिता ॥ १९६ ॥

शक्तं तत्त्वं तु पूर्णं स्याच्छक्यैर्यदि च पूर्यते ।
तदादिपूर्णता तस्य महाविश्रान्तिदायिनी ॥ १९७ ॥

शान्तं वस्तु दृषत्कल्पं यदनीश्वरतापदम् ।
तत्र विश्रान्तियोग्यं स्यात् सा हि पूर्णे पदे स्मृता ॥ १९८ ॥

इत्यलं प्रकृतं ह्यत्र चिन्मात्रं न परः शिवः ।
शून्यादुत्काय यद्योग्या स्थितिस्तत्रैव नान्यतः ॥ १९९ ॥

सच्चिदानन्दरूपं तत् पदं ग्राह्यं मनीषिभिः ।
शून्यादुत्काय सोद्योगैः शून्येनाश्रितसाह्यदम् ॥ २०० ॥

एतच्छून्यमिवाभाति न शून्यं परमार्थतः ।
अतिसूक्ष्मे हि या शून्यबुद्धिः सा स्थूलदृष्टिता ॥ २०१ ॥

सूक्ष्मत्वस्य पराकाष्ठा सा प्रोक्ताऽत्र मनीषिभिः ।
बाह्यान्तःकरणैर्यत् स्यात् सतोऽप्यग्रहणं सदा ॥ २०२ ॥

प्रमाणाविषयत्वेन न सतोऽसत्त्वकल्पना ।
युज्यते सा हि दृश्यस्यानुपलब्धेः परं भवेत् ॥ २०३ ॥
प्रमाणं नात्र वृत्तिं स्वां लभते यत् पुरातनैः ।
[1]"विश्ववैचित्र्यचित्रस्य समभित्तितलोपमे ॥ २०४ ॥

विरुद्धाभावसंस्पर्शे परमार्थसतीश्वरे ।
किं प्रमाणं नवाभासः सर्वप्रमितिभागिनि" ॥ २०५ ॥
इत्युक्तं प्रत्यभिज्ञाख्ये शास्त्रे सारमये स्फुटम् ।
लाभेऽपि मेयतां तस्य न कर्तुमलमित्यलम् ॥ २०६ ॥

चेतना येन चेतन्ति तच्चिन्मात्रमुदाहृतम् ।
येन सर्वे सन्ति तत्तु सन्मात्रं परिकीर्तितम् ॥ २०७ ॥
आनन्दरूपता चास्य परप्रेमास्पदं यतः ।
......................ह्यात्मा केवलं प्रेमभाजनम् ॥ २०८ ॥

चेतनं भवनस्यैव रूपं शुद्धस्य कीर्तितम् ।
तेन चिन्मात्रसन्मात्रभेदो निरुपपत्तिकः ॥ २०९ ॥
चिद्भावेनात्र साक्षित्वं सन्मात्रत्वेन सारताम् ।
भावेष्वानन्दभावेन स्वादतां याति चिन्नभः ॥ २१० ॥

स्वादुता या हि भावेषु मातृभिस्त्वनुभूयते ।
साऽऽनन्दरूपता प्राणानन्दकारणतावशात् ॥ २११ ॥
जडेष्वेषा व्यवस्था स्याच्चेतना स्वयमेव चित् ।
देहाद्या ये तु तेषां ते जडपक्षनिपातिनः ॥ २१२ ॥

अस्वादुतापि या भावे सापि स्यात् स्वादुता परा ।
महास्वादविभेदत्वादा(द)स्वादास्वादयोः स्फुटम् ॥ २१३ ॥
चिन्मात्रं तत्र किञ्चित् स्यादिन्द्रियागोचरत्वतः ।
किञ्चिच्च सर्वसारत्वान्न किञ्चित् किञ्चिदात्मकम् ॥ २१४ ॥

यद् द्रष्टृदृश्ययोर्मध्ये दर्शनस्य स्वकं वपुः ।
तदेतन्ननु चिन्मात्रं शुद्धदर्शनरूपकम् ॥ २१५ ॥
हृद्देशस्यापि यत्साम्यं विना मूर्च्छादिकं बलात् ।
नखरोमादिभिः सेयं चित्तत्त्वस्य स्फुरा स्मृता ॥ २१६ ॥

येन सर्वाणीन्द्रियाणि यथास्वं कार्यवन्ति भोः ।
सारेण प्रेरकेणापि सच्चिन्मात्रं तदीरितम् ॥ २१७ ॥

१. ईश्वरप्रत्यभिज्ञा २।३।१५–१६ ।

यश्चोदकं सर्वधीनां कर्मणामपि नः स्वयम् ।
तद्भर्गो यस्य तं देवं वरेण्यं ननु धीमहि ॥ २१८ ॥

भूमेरुत्थानभाजोऽमी उद्भिजा यद्बलेन तत् ।
चिन्मात्रं सर्वगं प्रोक्तं बलमात्रस्वरूपकम् ॥ २१९ ॥

अचला येन सारेण गुरुभावं गता अमी ।
स्थैर्यं भजन्ति तत् सूक्ष्मं सन्मात्रं समुदाहृतम् ॥ २२० ॥

आकाशो येन सारेण शून्यपूर्णः स्फुटं स्थितः ।
महासामान्यरूपं तद् वस्तु संकीर्तितं बुधैः ॥ २२१ ॥

भूम्यादेर्बीजजातस्य यन्मयत्वं सदा स्थितम् ।
अनिर्वाच्यं तदेतत् स्यात् सन्मात्रं सर्वसारदम् ॥ २२२ ॥

यत्र सर्वमिदं भाति साक्ष्यभूते प्रकाशके ।
तच्चिन्मात्रमिदं प्रोक्तं मातृभावेन संस्थितम् ॥ २२३ ॥

येन सर्वमिदं यस्मै स्वदते स्वादरूपिणा ।
महानन्दस्वरूपं तत्तत्त्वं किमपि कीर्त्यते ॥ २२४ ॥

मानमात्रैः प्रमायाश्च यद्रूपं विमलं स्थितम् ।
सामान्यरूपं चिन्मात्रं तदेतत् परिकीर्तितम् ॥ २२५ ॥

माता परिमितं रूपं मानं क्षुब्धमुदाहृतम् ।
प्रमा शान्त्युन्मुखं रूपं चिन्मात्रस्य प्रकीर्तितम् ॥ २२६ ॥

मेयमाश्यानभावः स्याच्चितश्चित्त्वात् स्फुटं स्थितः ।
पाषाणत्वं यथा शैत्यात् तोयस्य शिशिरे स्वतः ॥ २२७ ॥

पञ्चमं वस्तु नैवास्ति जगत्यत्र चराचरे ।
तस्माच्चिन्मात्रमेवैतद् सर्वभावेन संस्थितम् ॥ २२८ ॥

सर्वाध्यासोऽस्ति यत्रैव यदध्यासेऽपि सर्वतः ।
तच्चिन्मात्रमिति प्रोक्तं स्फुटास्फुटतया स्थितम् ॥ २२९ ॥

न किञ्चिन्मातृरूपं तत् सर्वभावेन संस्थितेः ।
परिनिष्ठितरूपं हि कथं रूपान्तरं श्रयेत् ॥ २३० ॥

इत्यलं वाक्प्रपञ्चेन यत्किञ्चिज्जगति स्थितम् ।
चिन्मात्रमेव तत् सर्वमिति तत्रैव शाम्यताम् ॥ २३१ ॥

सर्वे एव विनिर्याता जीवास्तस्मात् परात् पदात् ।
दीपाद्दीपा इवानन्तास्तेभ्योऽप्यन्ये कृतं बहु ॥ २३२ ॥

जीवास्त एकरूपाः स्युस्तन्मात्रत्वेन संस्थितेः।
तिक्तं तिक्तं न सर्वेषां भायाद् भेदे तु संस्थितेः॥ २३३॥

तच्चिन्मात्रं प्रमाता स्यान्नान्यः शून्यादि नश्वरम्।
उद्ग्राह्यमितरत् त्याज्यमित्यलं बहु चर्चया॥ २३४॥

कथितं पूर्वमेवैतत् पुनरेव च कथ्यते।
मूढानां च यथा बुद्धौ संक्रामेदिति काङ्क्षया॥ २३५॥

मेयाभावे सहजममलं स्वं स्वरूपं न जह्याद्
मातासौ यद्भवति च ततः संस्तदाऽप्येष माता।
दाह्यं नो चेद्भवति दहनस्यात्र किं सोऽस्त्वनग्निः
शान्तोऽग्निर्यत् परमिह भवेदग्निसारैकरूपः॥ २३६॥

शून्यत्वं यत् कथयति जनस्तत्र मातुः सुषुप्तौ
मेयाभावाद् वदति तदयं नास्य मातुरभावात्।
शून्यत्वं यद् व्यवहृतिपदं कानने वस्त्वभावात्
नास्याभावः खलु समुचितः काननं तद्धि किं स्यात्॥ २३७॥

मेयाभावोऽपि न समुचितोऽत्रास्ति मेयं हि तत्रा-
ज्ञानानन्दाभिधमनुभवत्येव माता द्विरूपम्।
नो चेदेवं कथमिव भवेज्जाग्रतो मातुरेषा
तत्संस्कारात् स्मृतिरुभयगा नानुभूते हि सा नो॥ २३८॥

माता तस्माद्भवति न जडस्तत्र भोः! शून्यरूपः
शून्यत्वेऽसौ कथमिव भवेन्मातृभावेऽत्र योग्यः।
मातृत्वं किं वदत विबुधाः शून्यरूपे तनूजे
वन्ध्यायाः स्याद् गगनकुसुमामोदतुल्यं भ्रमेऽपि॥ २३९॥

बाह्याभावो भवति तदयं शून्यतारूप एवं
सुप्तौ बाह्यं स्फुरति न कदाप्येव मातुः प्रसुप्ते।
सुप्तौ माता कथमिव भवेत् सुप्तिसाक्षित्वयोग्यः
सुप्तश्चेत् स्याद् भवति तदयं शुद्धचिन्मात्ररूपः॥ २४०॥

प्रमाता शून्याख्यो ननु समुचितो नो परिमितो
जडो मूकप्रायो दृषदिव न किञ्चिद् वपुरपि।
पिशाचाः शून्याख्यास्त इह यदिता येऽत्र निरता
भ्रमाद् भ्रात्या तांस्तात(न्) त इव दययोक्ता यदि प्रभो॥ २४१॥

य एनं चिद्रूपं परिमितिविहीनं ननु शिवं
विजानीयाद् देवं विगतनिखिलोपाधिममलम् ।
य एते सम्प्राप्ताः सुधिय इह तां मातृपदवीं
प्रमेयीकृत्यालं सकलमपि देहादिनिचयम् ॥ २४२ ॥

विश्रान्तिर्विषयेषु दोषकलिता देहेऽप्यपेक्षान्विता
तेषां प्राणगता त्वसंभवहता स्वाधारचाञ्चल्यतः ।
विज्ञानेषु मुहुर्विनाशिषु तथा नो युक्ततां सेवते
शून्ये जाड्यहता ततोऽतिविमलं चिन्मात्रमस्याः पदम् ॥ २४३ ॥

देहोऽनुक्षणमेव पुष्टिवशतोऽपूर्वो मतस्तार्किकैः
प्राणोऽपि प्रतिचारमेव कथितस्तादृङ्महापण्डितैः ।
विज्ञानानि विनाशभाञ्जि नितरां शून्यं तु तुच्छं मतं
चिन्मात्रं तत आत्मभूतममलं तेषां तु साक्षी स्फुटम् ॥ २४४ ॥

चिन्मात्रं ननु किंस्वरूपमिति चेत् सम्पृच्छ्यते केनचित्
किं ब्रूमो नहि तत्र वस्तुनि मनोऽभिज्ञं कथं वाक् स्फुरेत् ।
यत्राभाति न किञ्चिदेव नियतेऽवस्थाविशेषेऽत्र यः
साक्षी शुद्धविभानमात्रविभवस्तत्तत्त्वमेतत् स्वभाः ॥ २४५ ॥

शून्ये मेयीभवति यदिदं मातृभावेन भायात्
तच्चिन्मात्रं खलु निगदितं पण्डितैर्दृष्टियुक्तैः ।
नाभातं तत्कथमिव भवेत् स्मर्तृभावेन भातं
नासीत्किञ्चिदिति कलनतः स्मर्तृता यद् विभाते ॥ २४६ ॥

भानां पिण्डो भवति सततं बाह्यरागाद् विमुक्त-
श्चिन्मात्रं तत् सहजममलं सिद्धरूपं सदैव ।
साध्यत्वं यत् स्फुरति तदिदं बाह्यरागैकनिष्ठं
साध्यो रागः स्फटिकमिव नो साध्यतां नेतुमीशः ॥ २४७ ॥

प्रमातृत्वं भातं यदपि च शरीरादिनिवहे
तदप्येतैर्द्वारैः स्फुरति ननु चिन्मात्रनभसः ।
गृहद्वारैर्ज्योतिः प्रसरति यदेतद्बहिरिदं
गृहान्तःस्थस्यैतद् भवति खलु दीपस्य नियतम् ॥ २४८ ॥

अलं वा चिन्ताभिश्चिदितरदिदं भाति ननु यत्
समस्तं वेद्यं तद् भवति न यतो वेदक इह ।
स्वरूपं वेद्यानां कथितमिह पूर्वं शिवतया
तदेकं चिन्मात्रं स्फुरति सकले भावनिवहे ॥ २४९ ॥

शून्यादिर्ननु मातृभावसमये मेयीभवत्येव यत्
तन्मेयं व्यतिरेकतः स्वत इदं गृह्णात्यसौ सर्वदा।
चिन्मात्रं खलु तद्गृहीतृ न ततो भेदेन भाति स्फुटं
मेयं तन्न भवेद् भवत्तदपि यद् भायात्ततो भेदतः॥ २५० ॥

तदेकः सिद्धोऽयं जगति सकले वेदकतया
विभुश्चिन्मात्राख्यो विविधकलनारूषितवपुः।
गतो नानाभावं स्फटिकमिव नीलादिवशतो
निजं रूपं शुद्धं भजति न कदाचित् स सुमहत्॥ २५१ ॥

अब्धौ क्षिप्ते जलकण इहास्त्येव या वृद्धिरब्धे-
स्तस्याः सूक्ष्मा भवति तु भृशं या स्थितिः सत्त्वरूपा।
तादृक् सूक्ष्मं ननु परचितो रूपमस्त्येव मोहाद्
मोहान्धानां कथमिव भवेत् तत्र विश्वासनिष्ठा॥ २५२ ॥

भावाभावतदेकगोचरवलद्विज्ञानसत्तानियुङ्-
मध्ये भाति परं सदैव विमलं तत्त्वं यदेतत् स्फुटम्।
विद्युद्द्योतितरत्नवत् सुनिपुणाः पश्यन्ति तद्योगिनो
नाज्ञा मूढतयाथ सिद्धनिवहाः सर्वत्र तद्दर्शिनः॥ २५३ ॥

वर्णाद् वर्णमयं कदाचिदपि वा गन्तुं न शक्तः पद-
स्योच्चारे ननु तत्र याति यदि नो विश्रान्तिदार्ढ्यं नरः।
बोधोऽतो न यथैव वस्तुनिवहो रागान्तरं संश्रयेत्
तद्वद् रूपमनागतं निजमिदं चेत्यान्तरं चिन्नभः॥ २५४ ॥

देहाद्रिस्थमनोद्रुमोक्तकलना शाखालिसन्ध्यन्तराद्
द्रष्टुं जाड्यहरं विमर्शविभवादुन्मेषरूपं रविम्।
लग्ना ये सततं तदेकमयतां पश्यन्त आत्मन्यथो
संसारेऽपि च तत्प्रकाशवशतो भाते(ता)स्तु तेभ्यो नमः॥ २५५ ॥

विज्ञानद्वयमध्यमेतदमलं कृत्वा त्रिधा तत्र यद्
भागानां त्रयमत्र पूर्वमनिशं पूर्वे समर्प्योत्तरम्।
कृत्वान्त्योपगतं तु शिष्टमथ ये भागं समासाद्य त-
ल्लीनास्तन्मयभावतः स्युरथ ते चिन्मात्रनिष्ठाः परम्॥ २५६ ॥

या याऽवस्था स्फुरति हृदये स्वेन तस्यास्तदेतौ
वीक्ष्याद्यन्ताववहिततरैस्तद्गतौ सद्य एव।

प्राप्तं मध्यद्वयमपि भवेत् तुल्यकालं गताया
आगच्छन्त्या अपि भवति साऽप्येव तन्मात्ररूपा ॥ २५७ ॥

प्राणाख्येऽस्मिन् बहिरिव भ्रमं द्वादशान्ते निलीने
सूर्ये यावत् समुदयमितो नैव चन्द्रस्त्वपानः ।
सायंसन्ध्या भवति तदियं तेन धन्या भजन्ते
कालेऽस्मिस्तं रविमिह परं चित्स्वरूपं महान्तः ॥ २५८ ॥

बाह्यादष्टादशपरिमिते चाङ्गुले हृत्प्रदेशात्
ताल्वाख्येऽस्मिन्नुपगत इहोद्देशवर्ये क्षणेन ।
प्राणे सूर्ये शशिनि च तथाऽपानरूपेऽत्र सन्ध्या-
युग्मं माध्याह्निकमथ भवेदाव(र्ध)रात्रं च सद्यः ॥ २५९ ॥

लीने चन्द्रे हृदयसदनेऽपानरूपे तथैव
यावन्नायं समुदयमितः प्राणसूर्योऽत्र देशे ।
तावत्सन्ध्या भवति यदियं पुण्यरूपौषसी तु
काले तत्रापि च रविममुं तेन धन्या भजन्ते ॥ २६० ॥

अत्राऽप्येतं परपदगतं भास्करं चित्स्वरूपं
सेवन्तेऽमी कृतपरिचया योगिनोऽभ्यासनिष्ठाः ।
सन्ध्यास्थानेषु हि परमिदं चेत्यहीनं चिदाख्यं
रूपं भाति स्फुटमिह ततोऽत्रैव निष्ठा प्रशस्ता ॥ २६१ ॥

प्राणीयेऽष्टोत्तरशतमिते चाङ्गुलानां प्रचारे
सन्ध्याकालः प्रतिपदमसौ भाति चिन्मात्रधाम ।
युक्ते देहे स्फुटमिह सदा द्वादशान्तद्वयेनाऽऽ-
धेयं तज्ज्ञैर्बहिरिह धृता ग्रन्थियुक्ताक्षमाला ॥ २६२ ॥

मानाख्योऽर्कः परिमितवपुर्मेयचन्द्रेण युक्तो
मायामात्रा भवति च यदा राहुरूपेण भुक्तः ।
तस्मिन् काले त्रयमपि भवेदेकरूपं निरीहे
लीनं शान्ते परमगहने सावधानोऽत्र योगी ॥ २६३ ॥

माता सूर्यो व्रजति विलयं मेयचन्द्रोऽपि यस्यां
विज्ञानाख्यं स्फुरति न तथा तारकाजालमेतत् ।
मेघैश्छन्नं परपदगतैः शान्तिरूपैश्च मेयं
रात्रिः प्रोक्ता विमलधिषणैः पूजनीया शिवाख्या ॥ २६४ ॥

संक्रान्तिर्या भवति नियतं त्वङ्गुलानां तु षट्को(के)
षट्को(के) बाह्ये हृदयगगने चापि नित्यं स्वभावात् ।
चिन्मात्रं तत् स्फुरति नियतं तत्र यत्तेन पुण्यः
कालः सोऽयं बहिरिव भवत्येव शान्तैस्तु लभ्यः ॥ २६५ ॥

प्राणापानौ रजनिदिवसौ यत्र साम्यं प्रयातो
हृद्देशेऽन्तर्बहिरपि तथा द्वादशान्ते क्षणे तु ।
सेवन्ते ये ननु विषुवदाख्यायुतं काललेशं
तं ते सद्यः परचिति समावेशभाजो भवन्ति ॥ २६६ ॥

वेद्यं रात्रिर्भवति च तमो जाड्ययुक्तं दिनं वा
वेत्ता सोऽयं भवति च तथा सत्प्रकाशैव(क)रूपः ।
साम्यं मध्ये यदथ च तयोः शुद्धचिन्मात्रभावात्
तं कालं वा ननु विषुवदाख्यं बुधाः कीर्तयन्ति ॥ २६७ ॥

शान्तेः शान्ति गत इह जनः प्राणचारस्य लेशाद्
भङ्क्त्वा बुद्ध्या पुनरपि तथा लेशतो युक्तियुक्तः ।
चिन्मात्रं तत् प्रविशति सुखं नान्यथा यत्नतोऽपि
प्राणस्थौल्यं भवति हि सदैवार्गला तत्र नान्यत् ॥ २६८ ॥

दिनं मासा वर्षादिकमथ च तस्मिश्चरति यत्
क्रियन्तेऽप्येकस्मिन् विमलधिषणैश्चार इह वा ।
तदेतत् सौक्ष्म्यार्थं परमिह भवेन्नान्यफलदं
यतः प्राणः सौक्ष्म्यं गत इव भवेत्तत् परपदम् ॥ २६९ ॥

ब्रूमोऽन्यत् किं भवति तु महाशास्त्रवृन्देषु चोक्ता
या या काचिद् विमलधिषणैर्धारणा स्थैर्यरूपा ।
सा सा ज्ञेया परमिह बुधैः प्राणशान्त्यर्थमेव
प्राणः शान्तः श्रयति हि परं शुद्धचिद्भावमेषः ॥ २७० ॥

बाह्याश्चर्चा अपि खलु भवन्त्येव हेतुः स्वभावात्
तच्छान्तौ या विपुलधिषणैः शास्त्रवृन्देषु चोक्तः ।
....स्तज्ज्ञोऽस्मिन् परमिह भवन्त्येव योग्या जने यत्
तस्मान्नोक्ता इह खलु यतोऽज्ञार्थमेव प्रयत्नः ॥ २७१ ॥

विकल्पाः प्रोद्भूता हृदयगतसंस्कारवशतः
किमुक्ता एते स्युरिति परधिया सद्य इह यैः ।
विचारान्तर्नीताः परचितिमहालाभहृषिता
भवेयुस्तेऽप्येते स्वसुभगमहायुक्तिनिरताः ॥ २७२ ॥

तदेतच्चिन्मात्रं सकलमिह चेत्यं ननु यत-
श्चिनोति स्वाभिन्नं निजविभवतश्चित्त्वकलितात् ।
तथा सन्मात्रं तत् स्फुटमिव जगत्पूरयति यत्
स्वमात्रं सत्त्वं स्वं स्वमिव वितरद्भूरिवपुः ॥ २७३ ॥

नो सूर्योऽसावुदयति यथाऽपेक्ष्य भावान् स्वभास्यान्
भासन्ते ते स्वयमिह परं खेऽत्र तिष्ठत्ययत्नम् ।
चित्सूर्योऽयं सततमुदितो भावभानैकहेतु-
र्नैवं तेऽतः परमिह सदा प्राप्य सत्तां स्फुरन्ति ॥ २७४ ॥

चिता सिद्धैश्चेत्यैश्चितिकृतपदैर्वेत्ति जडधी-
श्चितः प्राकट्यं नो अकलितचिदेकस्य विषयः ।
प्रकाशायां भित्तौ तपनविभवे नैव निवहः
शिशूनां दीप्तिं यत् कलयति रवेर्भानविषयम् ॥ २७५ ॥

विना चेत्यैश्चित् सा न चिदिति न वक्तुं समुचितम्
न नास्तित्वं तस्याः कथयितुमतो योग्यमिह यत् ।
अभावं दीप्तीनां कथयति रवेः कोऽपि विबुधो
न मध्ये दृश्यानां स्फुटमिह रवौ भित्तिभुवि च ॥ २७६ ॥

चित्सूर्योऽयं सततमुदितोऽप्यस्तमेवाश्रितो यत्
तच्छायाप्तस्फुरणविभवास्तारकाः प्रोल्लसन्ति ।
संकल्पाख्या उदयति महादित्यरूपे त्वमुष्मिन्
सर्वा एताः सपदि विलयं यान्ति तद्रूपबिम्बे ॥ २७७ ॥

चितो धर्मान् भावान् कलयति जडो धर्मिवपुष-
श्चितोऽथो धर्मत्वं ननु स जडधीर्वेत्ति नियतम् ।
घटे मृद्धर्मत्वं स्फुरति नहि बाले समुचितम्
मृदस्तद्धर्मत्वं खलु वदति हि भ्रान्त इह सः ॥ २७८ ॥

चिदाख्योऽयं माता भवति च निजात्मा परमतो
न मेयत्वं यायात् क्वचिदपि कदाचिदपि तथा ।
व्रजन्वा नात्मा स्याद् य इह खलु माता स तु कथं
बलायातं जह्यात् समुचितमिवात्मत्वमथ तत् ॥ २७९ ॥[1]

---

१. इतः परं ४५ तमं पत्रं (२८० तः २९१ श्लो० यावत्) मूलमातृकायामेव नास्ति ।

.........स्त्यागो यदि खलु महापूर्णतादत्तसत्तो
लाभः प्राप्तिर्यदि विषयवन्मेयतापादिनी स्यात् ॥ २९२ ॥

लब्धो यैः स्यात् कथमपि न तैर्लब्धएषोऽस्ति देवो
नो लब्धो यैर्भवति च न तां लब्ध एषोऽथ तैर्वा ।
लाभालाभौ पदमितपदौ दूरतोऽपास्य या स्यात्
तृप्तिः स्वान्तःकृतपरतृषाभूषिता लाभ एषः ॥ २९३ ॥

आत्मा नास्ति किमप्यसौ परिमितं वस्त्वेतदाप्तौ यथा
हर्षो युज्यत एष नास्ति च तथा नाप्तावमर्षोऽस्य वा ।
सर्वत्रैव च सर्वदैव च तथावस्थानयोगी सदा
सर्वाकारयुतस्तथा परमसौ हर्षोऽप्यमर्षोऽत्र कः ॥ २९४ ॥

न किञ्चिद् किञ्चिद् वा यदिदमखिलं भाति बहुधा
समस्तं तत् किञ्चिद् परिमिततया ज्ञेयमथ तत् ।
न किञ्चिद् वस्तु स्यात् परमिव विभात्येव परितो
न किञ्चित्किञ्चित्त्वं स्ववपुषि निधायैवमखिलम् ॥ २९५ ॥

न किञ्चित्सत् किञ्चित् स्फुरति जगदेतन्ननु परं
न किञ्चित्सत् किञ्चित् स्फुरति कलनाकाररहितम् ।
न किञ्चित्किञ्चित्त्वे परिमितपदे तुच्छविषये
विहायैते शिष्टं यदिह खलु तत्स्याद्द्वयमिदम् ॥ २९६ ॥

किञ्चित्स्थूलमिदं विहाय सकलं ग्राह्यं न किञ्चित् पदं
सूक्ष्मं तुच्छतया न किञ्चिदपि तत् त्यक्त्वा पुनः संश्रयेत् ।
किञ्चिदेव तु चेतनं परिमितं तच्चापि हित्वा पुन-
र्ग्राह्यं तत्त्रितयस्य सारदमथो पूर्णं न किञ्चित्पदम् ॥ २९७ ॥

किञ्चित् किञ्चिद् भवति हि सदा किञ्चिदेतन्न किञ्चित्
तस्मान्नेतत् स्वयमपि भ्रमं ग्राह्यतां याति जातु ।
ग्राह्यं किञ्चिद् यदि परिमितं नो भवेत्तुच्छताया
निष्क्रान्तं वाऽप्यथ यदि भवेत् पूर्वमेतन्न किञ्चित् ॥ २९८ ॥

किञ्चित्तद् यदि ब्रूत विश्वमखिलं तल्लेशमात्रं कथं
नो किञ्चिदथ तत् कथं भवति वाधिष्ठानभूतं सतः ।
सर्वस्याथ न किञ्चिदेव च भवेत्किञ्चित्तदेतत्तदा
व्याप्ये भावगणेऽस्ति वैभववशात् सारः सुसूक्ष्मो भृशम् ॥ २९९ ॥

तत्किञ्चिदिति पृच्छते स्वगुरुणा निर्णीय यद्वोत्तरं
दत्त्वा मे वद तन्न किञ्चिदिति यत् शिष्याय प्रोक्तं स्वयम् ।
तेनैते तु पदे परे ननु गते रूढिं न योगेन यद्
युक्ते तत् त्यज तूर्णमेव निखिलां किञ्चिन्नकिञ्चिद्धियम् ॥ ३०० ॥

न किञ्चित्त्वं तस्मिन् परिमितिनिरासे सुनिपुणं
तदेतच्चिन्मात्रं विषयरहिता चिन्न किमपि ।
यदेतत्किञ्चित्त्वं भवति तु सदा तुच्छपदता-
निवृत्तौ हेतुस्तत् कथितमथ सन्मात्रमिति च ॥ ३०१ ॥

तच्चित् सर्वमिदं हि चेतति सदा मातॄन् प्रकल्प्यात्मना
चेत्यं तस्य स्वतः पृथङ् नहि ततो मात्रं तदेतत्स्मृतम् ।
सत्तत् यद् भवतीह भावनिचयं प्रोद्भाव्य चास्तित्वभाङ्
मात्रं तद्गदितं यतोऽखिलमिदं तत्रैव लीनं स्थितम् ॥ ३०२ ॥

स्वां छायां प्रविलङ्घ्य बाह्यपदगां गन्तुं न शक्तः पुमान्
यः सोऽन्तःपदगां तु तां चितिमहो यातुं कथं शक्नुयात् ।
शक्तो वाऽस्तु च धानमेतदथ किं चित्या विना सम्भवेत्
तच्छायावदियं चितिः स्वयमिहास्यालं पुरो धावति ॥ ३०३ ॥

किं वा धावनमत्र चिद्धि परमा व्याप्या स्थिता सर्वतः
स्वेनैवास्ति सदा स्थितिश्च ननु का तत्रैव किं संस्थितः ।
याऽवस्था खलु यस्य यत्र च यदा येनास्ति सा सर्वथा
सैवेत्येव विनिश्चयः किमथवा तस्याश्च तत्त्वं भवेत् ॥ ३०४ ॥

चिन्मात्रं तत्प्रमाता स्यात् प्रकाशाख्यः शिवः स्वयम् ।
शून्यादि सर्वमेतस्य प्रमेयमिति निश्चयः ॥ ३०५ ॥

महातुर्यमयं प्रोक्तः प्रमालेशेन तुर्यताम् ।
भजत्येव ततस्तासामयं राशिः प्रकीर्तितः ॥ ३०६ ॥

प्रमाणां विषयास्पर्शः पारमित्यावहः स्मृतः ।
विषयास्तत्र लीयन्ते स्पर्शस्यातः कथैव का ॥ ३०७ ॥

प्रमा द्वारतया तुर्यं प्रोक्ता न मुख्यतावशात् ।
तत्प्रमाद्वारमाश्रित्य शिवं तुर्यमयं विशेत् ॥ ३०८ ॥

प्रमेयादित्रयं त्यक्त्वा प्रमान्वेषणतत्परः ।
सद्यो याति परं धाम विषयैश्चेन्न नीयते ॥ ३०९ ॥

विषयेभ्यो विरक्तिस्तु साध्या यत्नेन सर्वथा।
विवेकादिवशेनालं प्रथमं बुद्धिशालिना ॥ ३१० ॥

अनादरविरक्त्या तु तदुपेक्षा ततो बुधैः।
प्रौढिं नेया हि तां मुक्त्वा कोऽप्युपायोऽस्ति नेतरः ॥ ३११ ॥

शरीरस्थितिपर्यन्तं त्यक्तुं शक्या न सर्वथा।
विषयास्तानवं तेषां सम्भवास्पदमोरितम् ॥ ३१२ ॥

तानवे सति कालेन प्रवृत्ता अपि ते बुधैः।
उपेक्ष्या एव नो द्वेषा(ष्या) उपेक्षा हि महाफला ॥ ३१३ ॥

विषयेभ्यो विनिष्कृष्य प्रमाणादपि वै तथा।
प्रमातुश्च प्रमामेतां शिवीकृत्या(कुर्या,दयत्नतः ॥ ३१४ ॥

तच्छिवीभावकाले तु प्रमाताऽपि शिवोभवेत्।
प्रमाभावं हि मातैव मानादिवशतो गतः ॥ ३१५ ॥

प्रमातुः शिवभावे तु मानं मेयं च किं भवेत्।
मृदभावे घटः कः स्यादिति निर्णीयतां बुधाः ॥ ३१६ ॥

शिवे विश्रान्तिमासाद्य न भूयः परितप्यते।
सच्छायोपवने स्थित्वा कस्तापं भजते नरः ॥ ३१७ ॥

विश्रान्तिर्यदि वा न कुत्रचिदियं यत्रैव विश्राम्यते
तत्राऽऽयान्ति बलाद्धि दोषनिचयाः जाड्यादिरूपाः क्षणाः।
तद्विश्रान्तिधियं विहाय निखिलं विश्रान्तिनाशास्पदं
यद्यादृग् भज तत्तथैव यदि वा तत्रापि सेवास्स्व भोः ॥ ३१८ ॥

एकत्रावस्थितिरिह दृढं यैव विश्रान्तिरुक्ता
सा योग्या स्यात् कथमिव शिवे स्वात्मरूपेऽतिसूक्ष्मे।
एकत्वं यत्परिमितपदं दृश्यते तन्न युक्तं
तस्मिंस्तत्त्वे स्थितिमपि दृढं को भजेद् द्वैतहानेः ॥ ३१९ ॥

अविश्रान्तिर्दूरे प्रथममिह कार्या तत इयं
विधेया विश्रान्तिर्भवसरणिसन्तापहरणी।
पदे शून्याख्येऽस्मिन् तदनु च निजोद्योगवशतः
ततोऽप्युक्ता ये तच्चतुरमिह मृग्यं चितिपदम् ॥ ३२० ॥

सदा लब्धं लब्ध्वा चितिपदमथो सन्मयमिदं
महानन्दे लीनो भवति ननु माता स्वयमयम्।

निरानन्दो भूत्वा तदनु च समस्तं जगदिदं
पुरो भातं पश्येच्चिदिति जगदानन्दकलितः ॥ ३२१ ॥
चिदम्भोधौ मग्नश्चिदितरदिदं नैव किमपी-
ह जानात्येवासौ स्वयमपि च तत्तामुपगतः ।
पुरा भातं सर्वं हसति जगदेतत् स्वमथवा
पुराऽभूवं कोऽहं किमिव ननु दृष्टं जगदिति ॥ ३२२ ॥
जगच्चित्रं पश्येच्चितिपदगतं चिन्मयतया
स्फुरद्रूपं सद्यो निजमपि च देहादिकमिदम् ।
न किञ्चित्स्थं जानात्यथ च सकलं पश्यति पुरः
स्वमेवासौ किञ्चिन्न तु समतयाग्रे स्थितमिदम् ॥ ३२३ ॥
तदेका सत्तास्थ स्फुरति परितो भावनिचयं
न कर्तारं तस्या अनुभवति वा स्वं परिमितम् ।
ततः सत्ताद्वैतं त्वयमुपगतो भाति तदलं
चिदद्वैताद्भेदो गगनकुसुमाद्यस्य न पृथक् ॥ ३२४ ॥
निर्णीतमेतच्चिन्मात्रपदं मातृतया स्थितम् ।
मुख्यतः शास्त्रदृष्ट्याऽथो गुरूणां सम्प्रदायतः ॥ ३२५ ॥
चिन्मात्रपदविश्रान्ता न श्रान्ताः स्युः कदाचन ।
श्रान्तिरपि हि तेषां सा विश्रान्तिपदरूपिणी ॥ ३२६ ॥
विश्रान्तिश्रान्तिभेदोऽपि विश्रान्तिपदमुत्तमम् ।
तेषां स्यादिति का श्रान्तिर्विश्रान्तिर्वा पृथक् स्थिता ॥ ३२७ ॥
विश्रमोऽथ श्रमो वास्तु विश्रान्तेर्हानिरेव का ।
सर्वं हि चिन्मयं सैव विश्रान्तिपदमुत्तमम् ॥ ३२८ ॥
देहादौ बुद्धिपर्यन्ते श्रान्तिरेव न संशयः ।
शून्ये विश्रान्तिरेवोक्ता चित्पदे का तयोः स्थितिः ॥ ३२९ ॥
विश्रान्तेस्तदभावाच्च गतं चिन्मात्रमाश्रयेत् ।
मातृत्वेन न शून्यादिरिति सारस्य संग्रहः ॥ ३३० ॥
भावनिर्भरितं तच्चेत् सद्यो ज्ञातं महाधिया ।
तदारोहो न कुत्रापि कर्तव्योऽस्ति न संशयः ॥ ३३१ ॥
इति चितिपदनिर्णयः कृतोऽयं स्फुटमिह शास्त्रदृशा महागुरूणाम् ।
समधिगतमहाकटाक्षपातार्जितविभवेन मया भृशं विशेषात् ॥ ३३२ ॥

इति श्रीमदाराध्यतमाचार्यवर्यश्रीगुरुवरराजानकभास्करकण्ठविरचिते चित्तानुबोधाख्ये महाशास्त्रे चिन्मात्रात्मकशिवरूपपरप्रमातृतत्त्वनिर्णायकं तृतीयं प्रकरणं सम्पूर्णम् ॥ इति शिवम् ॥३॥

## चतुर्थं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः ।
ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः ।
ॐ तद्द्वयसामरस्यरूपायै गुरुपादुकायै नमः ।
ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः ।

ॐ प्रकाशभावतो मातृभावे योग्यमिदं स्फुटम् ।
चिन्मात्रं चेत्यविरहाच्छून्यवत् तुच्छतापदम् ॥ १ ॥

शून्यताभावयोगेऽपि यदिदं शून्यकल्पताम् ।
श्रयत्येव ततोऽस्यैषा मातृता नैव युज्यते ॥ २ ॥

प्रतिबिम्बतया भानं दर्पणेऽपि हि दृश्यते ।
वस्तुनोऽत्र जडे तस्मात् तन्मात्रान्नास्य मातृता ॥ ३ ॥

प्रतिबिम्बे स्वसंक्रान्ते परामर्शक्रियां प्रति ।
शक्तिर्यस्यैव माता स्यात् स परं नान्यथा स्थितः ॥ ४ ॥

स एव च प्रकाशः स्यात् नान्यश्चिन्मात्रसंज्ञकः ।
चिन्मात्रं हि दृषत्कल्पं न प्रकाशपदे स्थितम् ॥ ५ ॥

चेत्यस्याभावतः किं स परामृश्येत् स्वयं स्थितः ।
स्वात्मास्य क्व गतो ब्रूहि किमसौ निःस्वभावकः ॥ ६ ॥

चेत्याभावोऽपि नो युक्तः सर्वदा सर्वसंस्थितेः ।
पूर्णे तत्त्वे यतः सर्वं सर्वदैव कृतस्थिति ॥ ७ ॥

चिन्मात्रतास्य संप्रोक्ता प्रकल्प्यैव बुधैः स्फुटम् ।
शिष्यान् बोधयितुं ते हि त(न) योग्याः पूर्णबोधने ॥ ८ ॥

स्वामर्षे शक्तता तस्येति चेत् का मात्रचः स्थितिः ।
व्यवच्छेदं करोत्येव स हि सर्वस्य चित्पदे ॥ ९ ॥

परामर्शश्चितो रूपमिति चेच्चेतनं तदा ।
व्यवच्छेद्यं चेतनं हि परामर्शाद् विभेदभाक् ॥ १० ॥

परामर्शेन युक्तं तु चेतनं यदि चिद्वपुः ।
भवत्वेव यतोऽस्माकं फलितं काङ्क्षितं चिरात् ॥ ११ ॥

सेयं परशिवावस्था तुर्यातीतपदात्मिका।
विश्रान्तिधामतां याता विश्रान्तेरपि वाऽगता ॥ १२ ॥

प्रतियोगिव्यवच्छेदरहिताहंस्फुरा तु या।
सा शक्तिः शिवगा ज्ञेया विकल्पेतररूपिणी ॥ १३ ॥

चिन्मात्रं शिव इत्युक्तं स्वविमर्शोऽस्य शक्तिभूः।
तयोर्योगः परं तत्त्वं किमप्येव निरुत्तरम् ॥ १४ ॥

अर्धनारीश्वरः सोऽयमर्धत्वं त्वत्र कल्पितम्।
द्वयोः सम्पूर्णभावेन स्थितत्वात् परमार्थतः ॥ १५ ॥

शक्त्यैक्यमाश्रितो देवः शिवः परशिवः स्मृतः।
तया विनाऽसौ शून्यो भोः! न किञ्चिद्रूपतामियात् ॥ १६ ॥

स्वातन्त्र्यरूपा सा शक्तिरहनामर्शरूपिणी।
शिवः प्रकाशमात्रात्मा शक्तिमानिति संस्मृतः ॥ १७ ॥

संघट्टोऽस्ति तयोर्यः स महासामान्यरूपकः।
ज्ञेयः परशिवः सद्भिस्तस्यैव मातृता परम् ॥ १८ ॥

मातृत्वाच्च गतः सोऽयं मेयभावेन च स्थितेः।
सर्वस्य नैकभावो हि युक्तो जात्वस्ति सत्यतः ॥ १९ ॥

चिदानन्दौ तथेच्छा च ज्ञानं चाथ क्रियाभिधा।
शक्तयो याः स्थितास्तासां पिण्डः परशिवः स्मृतः ॥ २० ॥

ज्ञातृत्वं ज्ञानकर्तृत्वं प्रकाशस्य निजं वपुः।
तत्तुष्टिरूपं कर्तृत्वमपि तस्यैव देहगम् ॥ २१ ॥

ज्ञानशक्तिमयः सोऽयं क्रियाशक्तिमयः स्थितः।
शिवः परशिवत्वस्य भाजनं समुदाहृतः ॥ २२ ॥

वृक्षभावं गतं बीजं महाबीजमिति स्मृतम्।
कर्तृत्वमागतस्त्वेव शिवः परशिवः स्मृतः ॥ २३ ॥

परात्परत्वं तस्यैव कार्यैः शक्यतया स्थितैः।
फलैर्महीरुहस्येव बीजराशिस्वरूपकैः ॥ २४ ॥

इच्छा ज्ञानं क्रिया चेति त्रयं सृष्टौ स्थितौ तथा।
संहारेऽनाख्यभावे च व्याप्य तं यत् स्थितं सदा ॥ २५ ॥

द्वादशारमिदं चक्रं शास्त्रेषु परिकीर्तितम्।
चिदानन्दौ शिवस्यास्य स्वरूपत्वेन संस्थितौ ॥ २६ ॥

न्यूनाधिकारभावोऽत्र चक्राणां यच्च कीर्त्यते ।
शास्त्रेषु तदिदं त्वस्य संक्षेपविस्तृती परम् ॥ २७ ॥

चक्रेऽस्मिस्तु स्फुटीभूते योगिनः सूक्ष्मदर्शिनः ।
स्फुटीभूतानि चक्राणि सर्वाणि स्युरसंशयम् ॥ २८ ॥

प्रसक्तानुप्रसक्त्यालं प्रकृतं ब्रूमहे पुनः ।
कर्तृत्वमागतः सोऽयं शिवः परशिवः स्मृतः ॥ २९ ॥

क्रियाशक्तिस्ततः सेयं परत्वापूरणात् परम् ।
पुष्टं रूपं शिवस्यास्य परस्य परमात्मनः ॥ ३० ॥

महाद्वैतमयी सेयं सत्ता द्वैतात् परा स्मृता ।
तज्ज्ञेषु बन्धयित्री तु मूढानां समुदाहृता ॥ ३१ ॥

[1]"सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी ।
बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका" ॥ ३२ ॥

इत्युक्तं स्पन्दशास्त्रे श्रीगुरुभिर्वसुगुप्तकैः ।
तस्मात् क्रियात्मिका शक्तिस्तुर्यातीतपदात्मिका ॥ ३३ ॥

विकल्पैः स्थौल्यरूपैस्तु कार्यैर्वद्धतया स्फुटम् ।
मूढेषु भाति जीवोऽयं तज्ज्ञानामन्यथास्थितः ॥ ३४ ॥

तज्ज्ञान् प्रति तु जीवोऽयं पुष्टः परशिवः स्थितः ।
विकल्पः परिवारोऽस्य शक्तिभावेन संस्थितः ॥ ३५ ॥

कार्याणि शक्यरूपाण्यहन्तामर्शतया स्थिता ।
भाति तज्ज्ञजने तस्मान्नासौ संसृतिभाजनम् ॥ ३६ ॥

बन्धस्तस्य महामुक्तभावो नान्यस्वरूपकः ।
द्वैतमेव महाद्वैतं सत्ताद्वैतागतस्य तु ॥ ३७ ॥

स्थौल्यं हि पुष्टिः सूक्ष्मस्य वस्तुनो नान्यरूपता ।
स्थौल्ये शिवोऽन्यथा भाति मूढानामिति का गतिः ॥ ३८ ॥

तस्मात् परशिवो माता न चिन्मात्रमिति स्थितम् ।
विभुः स एव भगवपा(वाना)श्रणीयो महात्मनाम् ॥ ३९ ॥

प्रकाशोऽस्य निजं रूपं भानमात्रस्वरूपकम् ।
विमर्शस्तस्य शक्तिः स्यादहमामर्शरूपिणी ॥ ४० ॥

---

१. स्पन्दकारिका ४८ ।

तयैक्यमाश्रितो देवः शिवः परशिवः स्मृतः ।
अन्यथा तु स चिन्मात्ररूपो न पूर्णतापदम् ॥ ४१ ॥

स्वातन्त्र्यमात्रं सा शक्तिर्ज्ञातृकर्तृत्वरूपिणी ।
तयाऽसावीश्वरः प्रोक्तस्तदभावे त्वनीश्वरः ॥ ४२ ॥

यद्यपि व्यभिचारोऽस्या नास्माद् युक्तः कदाचन ।
न ह्युष्णता पृथग् वह्नेर्दृष्टा स्वप्नेऽपि केनचित् ॥ ४३ ॥

तथापि शिष्यबोधार्थं प्रकल्प्यैवं तु कथ्यते ।
यक्षानुरूपो हि बलिः प्रोक्तः प्रज्ञाविभूषणैः ॥ ४४ ॥

एवं प्रमातृभावोऽयं स्वान्तःकृतजगद्गणे ।
मुख्यः परशिवेऽन्यत्र गौणः सममुदाहृतः ॥ ४५ ॥

मुख्योऽप्यस्तु स तेषां वा पदे तत्र निवासिनाम् ।
तद्भावेन महाहानिः का स्याद् दोषविधायिनी ॥ ४६ ॥

विषया अथ देहश्च प्राणो बुद्धिर्नभः शिवः ।
एतदन्तःस्थितं सर्वमेतन्मयतया सदा ॥ ४७ ॥

सर्वं सर्वतयैवास्ति तदा परशिवे स्थितम् ।
नैकचिन्मात्रभावेन चिन्मात्र इव सर्वदा ॥ ४८ ॥

सर्वं सर्वान्तरे भाति सर्वथा सर्वभावतः ।
यत्र सेयं परावस्था नैकं सर्वमिति स्थितिः ॥ ४९ ॥

एकं हि यदि सर्वं स्यादेकत्वं तत्र कीदृशम् ।
सर्वस्मिन् भ्रमतस्तच्चेत् सर्वत्वस्य कथा गता ॥ ५० ॥

भ्रमो न किञ्चिदेवैष इति चेत् काऽस्य शक्तता ।
असतो भासने यो न किं स कुर्यात् खपुष्पवत् ॥ ५१ ॥

सर्वाभावे किमेकं स्यादेकं हि सर्वमध्यगम् ।
नेतरत्र निजैकत्वभूषितं सर्वसिद्धिदम् ॥ ५२ ॥

एको राशिर्यतः सर्वमेके सर्वैकदेशकाः ।
एकाभावे द्वयस्यापि सिद्धिर्नास्ति स्वभावतः ॥ ५३ ॥

एके सर्वेण संविद्धाः सर्वं तैरिति युक्तिमत् ।
एतेषां नान्यथा सिद्धिरपेक्षामात्रसिद्धितः ॥ ५४ ॥

एको राशिस्तु यस्तत्र स सर्वसिद्धिदो मतः ।
यो यस्य सिद्धिदस्तस्मिन् स स्यादिति विनिश्चयः ॥ ५५ ॥

घटस्य सिद्धिदा मृद् हि सदा घटमुपाश्रिता ।
सर्वसिद्धस्तथा देवः सदा सर्वमयः स्थितः ॥ ५६ ॥

यद् यदा स्फुरत्येवेह स तदैव महेश्वरः ।
नास्माकं कोऽपि नियतः शिवोऽस्ति भवतामिव ॥ ५७ ॥

सर्वान्तर्नैकमिति चेत् किं सर्वमिति कथ्यताम् ।
एकैर्हि सर्वमारब्धं न सर्वं पृथगस्ति हि ॥ ५८ ॥

नैकजातीयवस्तूनां सङ्घः सर्गमिहोच्यते ।
भिन्नजातीयराशिर्हि सर्वमित्युच्यते बुधैः ॥ ५९ ॥

नाभावा वस्तुनो भिन्ना भिन्नजातीयताजुषः ।
भावाभावैर्नं सर्वस्यारम्भ इत्येव निश्चयः ॥ ६० ॥

यद्यत् स्फुरति तत्सर्वमेकपिण्डतया मतम् ।
सर्वं भवति नान्यत् स्यात् सर्वमित्येव निश्चयः ॥ ६१ ॥

चिन्मात्रं च स्फुरत्येव स्फुरणाख्येन सर्वदा ।
रूपेणेति तदप्येव सर्वान्तर्गतमित्यलम् ॥ ६२ ॥

घटस्यापि परत्वं स्याद् यत्र तत्रास्ति का कथा ।
चिन्मात्रे परताभावे निश्चितैवं प्रशास्यताम् ॥ ६३ ॥

नैवं परशिवोऽस्त्येको नियतः सर्वरूपकः ।
प्रत्येकं सर्वमेवास्ति स देवः परमेश्वरः ॥ ६४ ॥

पृथक् चास्त्वन्यथा सर्वं कथं तत्स्याद् यतः स्फुटम् ।
तथापि तस्य नैकेभ्यश्च्युतिः स्यादिति विद्महे ॥ ६५ ॥

एकबुद्धया गृहीतं च सर्वमेकमिति स्फुटम् ।
भासते ह्यन्यथा तत्र बहुत्वं निश्चितं भवेत् ॥ ६६ ॥
एकमेव ततः सर्वं सर्वं चैकमिति स्मृतम् ।
भेदोऽपि न मनागेकसर्वयोस्तज्ज्ञदृष्टिषु ॥ ६७ ॥

एकमेकतयैवास्तु सर्वं सर्वतया तथा ।
सत्यं भेददृगत्रास्ति न मनागपि दोषगा ॥ ६८ ॥

प्रतियोग्यथ धर्मी वा भेदस्यात्र न कश्चन ।
एकेभ्यः सर्वभेदे हि कुत्र सर्वं व्रजेत् स्थितिम् ॥ ६९ ॥

विशेष्ये व्यतिरिक्ते हि सामान्यं नैति संस्थितिम् ।
गोत्वमश्वस्य पिण्डे हि न स्थितिं क्वचिदीक्ष्यते ॥ ७० ॥

सर्वस्मादेकभेदेऽपि दोषोऽयं पुनरुज्ज्वलः ।
सामान्याद्धि विशेष्यो(षो ऽयं भिन्नो जातु न दृश्यते ॥ ७१ ॥

तदेके सर्वमेव स्युः सर्वं वाऽप्येकरूपभाक् ।
अभेदे सर्वमेके वा न किञ्चिदिति निश्चितम् ॥ ७२ ॥

न किञ्चित्त्वं च नो किञ्चिन्नो किञ्चिदपि वा तथा ।
तथाभावोऽपि कोऽस्य(स्त्य)त्र सर्वं चास्ति यथास्थितम् ॥ ७३ ॥

भावाः प्रत्येकं शक्तत्वात् स्वकार्ये परमार्थतः ।
रूपं परशिवस्यैव शक्तः परशिवो यतः ॥ ७४ ॥

स्वयं परशिवा एतेऽथवा रूपत्ववागियम् ।
प्रधानमेकमेवाह यतस्तच्च निवारितम् ॥ ७५ ॥

चिन्मात्रभावे नैकत्वं यदि युक्तं न भावगम् ।
सन्मात्रभावे नैनत् स्यादिति चेच्छ्रूयतां स्फुटम् ॥ ७६ ॥

सत्ता भावगणस्यास्ति प्रतिस्वं सर्वदा स्फुटम् ।
नैकरूपा तु सा युक्ता मेरुसर्षपभेदतः ॥ ७७ ॥

भावानां सा स्वरूपं चेत् तत्सामान्यं न सा भवेत् ।
भिन्नो धर्मोऽस्ति यदि वा तदाऽद्वैतकथैव का ॥ ७८ ॥

प्राधान्ये प्रतिभावं स्यात् कथमद्वैतसंभवः ।
एवं चेन्मास्तु हानिः स्यान्नास्माकं सर्ववादिनाम् ॥ ७९ ॥

महाद्वैते हि सर्वस्य सम्भवासम्भवौ सदा ।
मतौ सर्वं हि तत्रास्ति स्वाभावेन समाश्रितम् ॥ ८० ॥

द्वैतमप्यत्र युक्तं स्याददद्वैतमपि वा तथा ।
सर्वं सर्वतया तत्र महाद्वैते स्थितं यतः ॥ ८१ ॥

किन्तु चिन्मात्रसन्मात्रभावेनैवास्त्वभेदधीः ।
सन्निवेशकृतो भेदो भावानां क्वेव गच्छति ॥ ८२ ॥

सोऽयं त्वभेदभेदाभ्यां पूर्णो भेदो महान् भवेत् ।
अभेदः केवलो यो हि स न पूर्णोऽस्ति कर्हिचित् ॥ ८३ ॥

सन्निवेशो विकल्पोऽयमिति चेत् सत्यमीरितम् ।
कथं चिन्मात्रसन्मात्रभावस्य न विकल्पता ॥ ८४ ॥

ननु नात्र विकल्पत्वं युक्तं तत्रापि तत्कथम् ।
भ्रमेण भानादिति चेत् कथमत्रापि नास्ति तत् ॥ ८५ ॥

बाधाभावान्न तत्रैतत् सन्निवेशोऽपि बाधना।
नास्त्येव भ्रमता काऽतो भासतः सत्यभावतः॥ ८६॥
यस्त्वस्य भावी नाशोऽसौ रूपान्तरपरिग्रहः।
सन्निवेशं विना भावः कदाचिद् यन्न तिष्ठति॥ ८७॥
रूपान्तरं त्ववस्थाया भेदो नो तु स्वरूपतः।
सन्निवेशो ह्यवस्थासु स एवैकोऽस्ति नापरः॥ ८८॥
न जरापलितैर्मैत्रश्चैत्रोऽयमिति कथ्यते।
सन्निवेशस्य भेदो यः स औपाधिक इष्यते॥ ८९॥
अवस्थानं सन्निवेशो भावस्य परिकीर्तितम्।
अवस्थानं विना भावः कदाचिन्न समीक्षते॥ ९०॥
"नासन्निवेशं हेमास्ति नासर्गं ब्रह्म विद्यते"।
इत्युक्तं श्रीवशिष्ठेन यच्छास्त्रे मोक्षसाधने॥ ९१॥
सारश्च सन्निवेशश्च भावस्यैतद्द्वयं वपुः।
सारः शिवः स्वयं प्रोक्तः सन्निवेशस्य शक्तिता॥ ९२॥
शक्त्या युक्तः शिवः साक्षात् प्रोक्तः परशिवो बुधैः।
तद्भावाः परमार्थेन प्रत्येकं शिवरूपिणः॥ ९३॥
सन्निवेशेन भिन्नाः स्युर्भावाः सर्वे समन्ततः।
सारेणैकतया युक्ता भेदाभेदमयास्ततः॥ ९४॥
[1]"भिन्नेष्वपि न भिन्नं यत् छिन्नेष्वच्छिन्नमेव च।
नमामः सर्वसामान्यरूपं तत् पारमेश्वरम्"॥ ९५॥
भट्टनारायणेनापि प्रोक्तं ह्येवं निजे स्तवे।
सन्निवेशेन भेदस्तदभेदः सारभावतः॥ ९६॥
सारमात्रस्य शिवता भूतेर्भावस्थितेः स्फुटम्।
सन्निवेशेन परता तत्र सम्पाद्यते भृशम्॥ ९७॥
सन्निवेशेन हेम्नो हि परत्वमुपजायते।
कटकादिस्वरूपेण रम्येण जगति स्फुटम्॥ ९८॥
तस्मात् परशिवा भावाः प्रत्येकं समुदाहृताः।
शिवशक्तिमयत्वेन स्वप्राधान्येन च स्थितेः॥ ९९॥
[2]"विषयेषु च सर्वेष्विन्द्रियार्थेषु च संस्थितः।
यत्र तत्र निरूप्येत नाशिवं विद्यते क्वचित्"॥ १००॥

---

१. स्तवचिन्तामणिः ६। २. स्वच्छन्दतन्त्रम्।

इत्युक्तं हि महेशेन शास्त्रे स्वच्छन्दनामनि ।
तस्मात् परशिवाः सर्वे भावाः शक्ततया स्थिताः ॥ १०१ ॥

यद्यदाभाति तत्तस्मिन् काले परशिवः स्मृतः ।
न जीर्णोऽयं शिवः कश्चित् पुराणो नियतस्थितिः ॥ १०२ ॥

[1]"तेन शब्दार्थचिन्तासु न साऽवस्था न यः शिवः" ।
इत्युक्तं स्पन्दशास्त्रे हि वसुगुप्तैर्महात्मभिः ॥ १०३ ॥

अवस्थानां शिवत्वस्य कथनं भावगं स्मृतम् ।
अवस्था भावरूपं यत् कालेन तु विशेषितम् ॥ १०४ ॥

शिवः परशिवस्त्वत्र भासा न्यायेन संस्मृतः ।
शब्दार्थरूपा भावाः स्युश्चित्ता तत्प्राणदा स्मृता ॥ १०५ ॥

चिन्मात्रे नियते गेयं शिवत्वं नियतं बुधैः ।
शक्ते तत्त्वे त्वनियतं नवीनं रम्यसंस्थिति ॥ १०६ ॥

परत्वमत एवास्य शिवस्य पूर्णताजुषः ।
न तु चिन्मात्ररूपस्य न्यूनस्य शून्यरूपिणः ॥ १०७ ॥

भावसाम्येन चिन्मात्रे परत्वं यदि कथ्यते ।
कथ्यतां यत् स्वशक्येऽस्य भाववच्छक्तता स्थिता ॥ १०८ ॥

शक्यत्वं यत्तु भावेषु कथ्यते तन्न युक्तिमत् ।
स्वकार्ये शक्तता दृष्टेरित्यलं बहुचर्चया ॥ १०९ ॥

सत्ता सामान्यमात्रं तच्चिन्मात्रं समुदाहृतम् ।
सद्भावेनैव भावेषु स्थितिरस्य विशेषतः ॥ ११० ॥

महासामान्यरूपस्तु प्रोक्तः परशिवो बुधैः ।
सदसद्भावरूपेण स्थितत्वात् सर्ववस्तुषु ॥ १११ ॥
[2]"महासामान्यरूपाय सत्तामात्रैकरूपिणे" ।
इत्युक्तं बहुरूपाख्ये स्तोत्रे हि परमेष्ठिना ॥ ११२ ॥

आद्ये पादे शिवस्यात्र परस्य स्तुतिकल्पना ।
द्वितीये तु शिवस्यैव सच्चिन्मात्रस्वरूपिणः ॥ ११३ ॥

सर्वं परशिवो देवः सामस्त्येनैकभावतः ।
व्यस्तत्वेनापि नैकस्य भानेऽन्यस्यास्ति हि स्थितिः ॥ ११४ ॥

---

१. स्पन्दकारिका २९ । २. बहुरूपस्तोत्रे ।

देशकर्मकृताच्छेदाद् बहुत्वं नान्यथा भवेत् ।
तौ चापि भावमध्ये स्तः का ताभ्यां भेदकल्पना ॥ ११५ ॥

कल्पनेऽपि तयोः केन च्छेदः स्यादिति कथ्यताम् ।
नहि देशस्य देशोऽन्यः कालः कालस्य वा क्वचित् ॥ ११६ ॥

न च तस्यैव तेनैव च्छेदः स्यादिति युक्तिमत् ।
ततः परशिवोऽस्त्येक इति सिद्धं समीहितम् ॥ ११७ ॥

किञ्च द्वयोर्भावयोर्यदन्तरं तच्च तन्मयम् ।
विशेषेण ततः कोऽत्र भेदकः स्यात् तयोर्द्वयोः ॥ ११८ ॥

एकत्वमपि नो युक्तं तत्र किं कुर्महे वयम् ।
वाचो गतिर्हीदृशीयं स्वभावेनैव संस्थिता ॥ ११९ ॥

आकारभेदो योऽप्यत्र सोऽपि नैवोपपद्यते ।
आकारः सन्निवेशो हि तस्य चर्चा पुरा कृता ॥ १२० ॥

तेन सिद्धिर्महाद्वैतस्यात्र संकीर्तिता स्फुटम् ।
तं विना तद्धि सामान्याद्वैतभावं समाश्रयेत् ॥ १२१ ॥

सर्वथा सर्वमेवास्त्यद्वैते परशिवात्मके ।
नासनं चापि सर्वस्य तत्रास्ति तच्च नास्ति वा ॥ १२२ ॥

यद्भाति यच्च नो भाति भानं चाभानमेव यत् ।
तत्सर्वं स्वयमेवास्ति स देवो नास्ति चापि सः ॥ १२३ ॥

यद्वक्षि यच्च नो वक्षि यन्मौनं या च वाग्गतिः ।
यन्नाशनं साधनं वा तत्सर्वं शिव एव सत् ॥ १२४ ॥

सर्वंसहे महाद्वैते विशेषकथनैरलम् ।
सर्वस्य संभवस्तत्रासंभवोऽपि सदा स्थितः ॥ १२५ ॥

संविन्नाथः परं ह्येको भावैः स्वेनाथ संस्थितः ।
सामस्त्येनेतरत्वेन प्रोक्तः परशिवो बुधैः ॥ १२६ ॥

अलं वा यत्ननिचयैः सिद्धे का यत्ननिष्ठता ।
साध्ये हि यत्नः फलवान् साध्यमप्यत्र सिद्धवत् ॥ १२७ ॥

अलमित्यपि मैवास्तु माऽस्तु माऽस्तु च का क्षतिः ।
समुच्चयोऽपि मैवास्तु सर्वं वाऽस्तु यथास्थितम् ॥ १२८ ॥

यद् यथा तत्तथैवास्तु देहं तावदियं गतिः ।
देहान्ते यद् भवेदस्तु तत्तदा सर्वथा शिवम् ॥ १२९ ॥

यद्यप्यशिवमप्येष एव देवः सनातनः ।
तथापि शिवमेवातः प्रार्थनीयं प्रयत्नतः ॥ १३० ॥

सर्वं परशिवात्मैव युक्तायुक्तं जगद्गतम् ।
युक्तमादेयतां तत्र भजत्यन्यत्तु हेयताम् ॥ १३१ ॥

हेयताऽऽदेयतेऽप्येते शिव एव स्वयं परः ।
नान्यथात्र भ्रमः कार्यो विपर्यासप्रयोजकः ॥ १३२ ॥

प्रार्थनापि शिवः साक्षात् साऽप्यस्तु मास्तु वा न नः ।
क्षतिः कापि भवत्येव सर्वत्र शिवदर्शिनाम् ॥ १३३ ॥

यत् स्फुरेत् तत् स्फुरत्वेव यन्नो मैव तु तद् यतः ।
स्फुरणास्फुरणे साक्षात् शिवरूपे न संशयः ॥ १३४ ॥

मूर्त्यष्टकं शिवस्यैतद् यद् बाह्यैः गदितं बुधैः ।
जगत् तन्मात्रमेवास्ति तस्माच्छिवमयं जगत् ॥ १३५ ॥

अशिवं वापि यद् भाति तत्सर्वं शिव एव नः ।
नञर्थोऽपि शिवो यस्मात् कथं तेनैव तत्क्षतिः ॥ १३६ ॥

क्षतिर्वाऽप्यस्तु साऽप्येष शिव एव न संशयः ।
इत्यलं वाग्विकल्पैर्नो व्यर्थैः परशिवास्पदैः ॥ १३७ ॥

स्वभावेनैव यद्यत् स्यात् तत्र किं वाग्विकल्पनैः ।
प्रवृत्तिः साध्यमाने या तत्रैषां युज्यमानता ॥ १३८ ॥

साऽज्ञानां बोधनार्थं स्यादिति चेद् ब्रूहि निश्चितम् ।
कोऽज्ञोऽस्ति बोधनं तस्य किंरूपमिति सत्यतः ॥ १३९ ॥

शिलाया अपि यज्ज्ञानमस्त्येव परमार्थतः ।
कुत्राज्ञानमिदं तिष्ठेद् न जाने परमार्थतः ॥ १४० ॥

सा हि शक्ति भजत्येव स्वकार्ये नियतात्मनि ।
शक्तेश्चेतनताभावः स्फुट एव न संशयः ॥ १४१ ॥

बोधमात्रस्वरूपस्य ज्ञस्य बोधननिष्ठता ।
उष्णीकरणरूपं स्यादग्नेर्यत्नशतैः स्फुटम् ॥ १४२ ॥

ज्ञत्वमात्रं शिवस्येह रूपं तत्सर्वगं विदुः ।
तत्पुष्टिरूपं कर्तृत्वं बोधनं कारणं च किम् ॥ १४३ ॥

स्वभावेनैव यद्यत्र तदर्थं ननु कः श्रमः ।
नास्ति यद्यत्र तत्रापि को यत्नो निष्फलत्वतः ॥ १४४ ॥

सर्वे बोधमया भावा बोधनं तेषु कीदृशम् ।
तदप्येवं भवत्वेव का क्षतिर्ह्यत्र नः स्थिता ॥ १४५ ॥

व्यवहारो हि सर्वोऽयं पूर्णाद्वैते विराजते ।
तदर्थमेव शास्त्राणि प्रवृत्तानि स्थितान्यलम् ॥ १४६ ॥

अस्मिन् पदे प्रमातृत्वं देहादेरपि सत्यतः ।
घटादेरपि यत्तत्र मातृता सत्यभावतः ॥ १४७ ॥

"अहं घटात्मना वेद्मि स वा वेत्ति मदात्मना ।
सदाशिवात्मना वेद्मि स वा वेत्ति मदात्मना" ॥ १४८ ॥

इत्येवं शिवदृष्टौ च श्रीसोमानन्ददेशिकैः ।
प्रोक्तं वेत्तृत्वमेवैतन्मातृत्वं यत्प्रकीर्तितम् ॥ १४९ ॥

"यावन्न वेदका एते तावद्वेद्याः कथं प्रिये" ।
इत्युक्तं श्रीशिवेनापि परमाप्तेन निश्चितम् ॥ १५० ॥

भागे यत्तु प्रमातृत्वज्ञानं वेद्येषु मोहतः ।
तत् त्याज्यं सर्ववेत्तृत्वज्ञानं परदशा तु सा ॥ १५१ ॥

अवेत्तृता महावेत्तृभावमूलाऽत्र सत्यतः ।
स्वातन्त्र्यमात्रकार्यत्वात् संगजा पामरत्ववत् ॥ १५२ ॥

सेयं परशिवावस्था सर्वथाऽऽश्चर्यकारिणी ।
आश्चर्यं वास्ति किं तत्र लोकयात्रासमे पदे ॥ १५३ ॥

तत्रस्था हि बुधा नित्यं सामान्यजनवत् स्थिताः ।
प्रवाहागतकार्यैकनिष्ठा नातिशये रताः ॥ १५४ ॥

अन्येभ्योऽतिशयोऽस्त्येषामयमेव स्फुटं स्थितः ।
अन्यातिशयवाञ्छायां यद् गतास्ते महाशयाः ॥ १५५ ॥

अतृप्तास्तृप्तये वाञ्छां कुर्वन्त्येव प्रयत्नतः ।
तृप्तानां तत्र का वाञ्छा यत् सा तृप्तिविरोधिनी ॥ १५६ ॥

तृप्तिश्चापि न वा तत्र युज्यते भेददूषिता ।
कः केन तृप्तिमांस्तत्र वक्तुं शक्योऽद्वये पदे ॥ १५७ ॥

उभयं वापि तत्रास्तु पूर्णात्पूर्णे परे पदे ।
सममेव न हीनं हि केनाप्येतत् परं पदम् ॥ १५८ ॥

---

१. शिवदृष्टिः ५।१०५–१०६ ।

हीनत्वेनापि हीनं तन्न वक्तुं शक्यते यतः।
हीनत्वमपि तद् युक्तं तत्राहीने परे पदे ॥ १५९ ॥

अमहत्त्वं च तत्रास्ति महत्त्वस्य प्रसिद्धये।
व्यापकत्वं महत्त्वं ह्यमहत्त्वं व्याप्य तिष्ठति ॥ १६० ॥

सोऽयं परशिवो देवस्तत्त्वषट्त्रिंशकं स्फुटम्।
वक्ष्यभावं स्वयं व्याप्य सप्तत्रिंशः स्मृतो विभुः ॥ १६१ ॥

सप्तत्रिंशं स्मृतं तत्त्वं बुधैरेतदनन्तरम्।
अमेयं मेयतापाते त्वष्टत्रिंशमिदं स्मृतम् ॥ १६२ ॥

अत्रापि मेयतापाते सप्तत्रिंशं पुनः स्थितम्।
अनवस्थाऽपि वाऽत्रास्तु नेयार्था हि परे पदे ॥ ॥ १६३ ॥

दोषत्वमनवस्थाया लोकेषु समुदाहृतम्।
परे पदे स्थिता सा स्यादानन्त्यस्य प्रदीपिनी ॥ १६४ ॥

मूलक्षतिस्तु नास्त्यत्र मूलासिद्धिस्तु भाति या।
सा मूलाप्राप्तिरेव स्यात् सिद्धेऽनाप्त्या न साध्यता ॥ १६५ ॥

अनाप्तिः प्राप्तियोग्यत्वाभावमात्रेण संस्थिता।
स एव हि न तत्प्राप्तेर्विषयोभवति क्वचित् ॥ १६६ ॥

प्राप्तस्याप्तिश्च का वा स्यादप्राप्तत्वेऽपि का क्षतिः।
प्राप्त्यप्राप्ती मितगते मितत्वं तत्र कीदृशम् ॥ १६७ ॥

तत्त्वषट्त्रिंशकस्यासावधश्चोर्ध्वं च संस्थितः।
आरोहेऽप्यावरोहे चास्त्यतोऽष्टात्रिंशतां गतः ॥ १६८ ॥

काऽप्येषा भरितावस्था तुर्यातीतपदात्मिका।
सदेहैर्लेशतः स्पृश्या विदेहैः सम्यगाप्यते ॥ ॥ १६९ ॥

अस्यां दशायां त्यक्तं यत् पूर्वं शून्यादिकं स्वयम्।
पुनस्तद्व्याप्य भुङ्क्तेऽसौ परमात्मा शिवाभिधः ॥ १७० ॥

यथा चक्राणि सम्राजा जित्वा त्यक्तानि सर्वशः।
पुनरागत्य भुज्यन्ते शिवीभूयात्मना तथा ॥ १७१ ॥

विषयाः शून्यपर्यन्ता भुज्यन्ते पुनरेव च।
भोगस्तद्भावतः स्फूर्तिर्न भोगीकरणं पृथक् ॥ १७२ ॥

यथा तथा स्थितैर्यत्र तत्र वासिभिरेव च।
आस्वाद्यते सा परमावस्था सद्भिर्महाशयैः ॥ १७३ ॥

आत्मा ज्ञातृत्वकर्तृत्वमयः स्फुटमिह स्थितः ।
ईश्वरोऽपि तथा युक्तो भावसत्ताऽन्यथा कथम् ॥ १७४ ॥

अङ्कुरादौ हि तस्यैव कर्तृत्वमिह दृश्यते ।
न बीजादेस्तु तद् युक्तं जडस्यानीश्वरस्वरत्वतः ॥ १७५ ॥

कर्तृत्वं हि क्रियावेशः स्वतन्त्रस्यैव तद् भवेत् ।
स्वातन्त्र्यं चेतनस्यैव न जडस्य कदाचन ॥ १७६ ॥

योऽनुप्रवेशस्तत्रास्ति जडानामुपकारिणाम् ।
स युक्तो न च तेनात्र कर्तृत्वं तत्र गामि तत् ॥ १७७ ॥

अस्तु वा चेतने भागे तेषामपि तथा स्थितिः ।
बीजादेरपि चैतन्यं युज्यते दृश्यतेऽपि यत् ॥ १७८ ॥

अन्यथा कथमेतस्य भूमेरुक्ता न कर्तृता ।
युज्येत नहि जाड्ये सा युक्तांशेनाथ लेशतः ॥ १७९ ॥

शिलादेरपि यो नानाशक्तियोगस्तु दृश्यते ।
स चैतन्यं विना युक्तो नैव स्यात् परमार्थतः ॥ १८० ॥

देहेऽस्थिजातं रोमाणि यथा चैतन्यभाञ्ज्यलम् ।
शिलातृणादिकं चैवं भूमौ चैतन्यभाग्भवेत् ॥ १८१ ॥

अन्यथा पुष्टिहानी स्तः कथं तेषां स्फुटं स्थिते ।
निर्जीवानां हि तेनैव दृष्टे जात्वथ कुत्रचित् ॥ १८२ ॥

सत्तामात्रेण चैतन्यं शिलादीनां न कार्यतः ।
अग्निवन्न च तो(ते)नास्यासत्त्वं वक्तुं सुयुक्तिमत् ॥ १८३ ॥

केन ज्ञातं शिलान्तःस्थामान्तर्नानुभवोऽस्त्यलम् ।
दाहादेरिति तत्रापि यथायोगं दया शुभा ॥ १८४ ॥

भूमिरेषा महाप्राणिदेहः खेऽत्र स्वभावतः ।
स्थितस्तत्र जना यूका इव सीमन्तसंस्थिताः ॥ १८५ ॥

प्राणाभावे कथं त्वेष भूकम्पो युक्तिमान् भवेत् ।
नाड्यन्तर्गतवातेन स हि युक्तोऽस्ति नान्यथा ॥ १८६ ॥

बीजं विनापि मृद्भागे योऽयं दृष्टस्तृणोद्भवः ।
तेन भूमेश्चेतनता जायते प्राणिदेहवत् ॥ १८७ ॥

वर्षाकाले तु योत्पत्तिर्दृश्यते कीटजालके ।
द्रब्धाङ्गेभ्यस्ततस्तेषां चैतन्यमनुमीयते ॥ १८८ ॥

विमर्शनमान्तरं यत् तत् सर्वत्र समं स्थितम् ।
बाह्यं पुर्यष्टकेनैव व्याप्तं तत्र शिलादिषु ॥ १८९ ॥

जनाङ्गेभ्योऽपि कीटाः स्युर्वन्ह्यङ्गेभ्योऽपि भूरिशः ।
वायुः साक्षाज्जीवरूप आकाशोऽयं तरां तथा ॥ १९० ॥

न किञ्चिद्भावरूपोऽयमाकाशो ह्यवकाशभृत् ।
चिन्मात्रस्यादूरवर्ती भवतीति विनिश्चयः ॥ १९१ ॥

एतच्च पूर्वमेवोक्तमिति नाऽऽयस्यते पुनः ।
तस्मात् स्याच्चेतने भागे जडानां हेतुता स्थिता ॥ १९२ ॥

चेतनत्वं शिवस्यैव केवलं युक्तिमत्स्थितम् ।
तस्मात् कारणता लोके शिव एव प्रतिष्ठिता ॥ १९३ ॥

कुलालस्यापि कर्तृत्वं दृश्यते यद् घटादिषु ।
वस्तुतस्तच्छिवस्यैव ज्ञेयं नास्य कदाचन ॥ १९४ ॥

स एव भैरवो देवो जगद्भरणलक्षणः ।
सर्वमापूरयत्येव भावाभावात्मकं जगत् ॥ १९५ ॥

कर्तृत्वं च विना यस्माज्ज्ञातृत्वं नोपपद्यते ।
ज्ञातृत्वमपि तेनात्र स्फुटमस्ति महेश्वरे ॥ १९६ ॥

एवमात्मेश्वरैकत्वं ज्ञातृकर्तृतया स्थितम् ।
वेदान्तेष्वप्यसौ चर्चा दृश्यते परमार्थतः ॥ १९७ ॥

विषयस्य तु यो भेदो न ततो भिन्नता तयोः ।
स्वरूपे नहि काष्ठेऽग्निरन्योऽन्योऽथ तृणादिके ॥ १९८ ॥

विषयोऽपि स्वयं ताभ्यां स्पृष्टस्तन्मयतां व्रजेत् ।
अग्निस्पृष्टं हि काष्ठादि क्षणादग्नीभवत्यलम् ॥ १९९ ॥

स चाहमीश्वरोऽस्मीति प्रत्यभिज्ञैव सारतः ।
प्रत्यभिज्ञा महाशास्त्रे या प्रोक्ता सा महाफला ॥ २०० ॥

मेयानां यत्र युक्तं स्यादीश्वरत्वं स्वभावतः ।
मातुस्तत्त्वेऽत्र का शङ्का स्फुटं चैतन्यरूपिणः ॥ २०१ ॥

इति परशिवात्मैवं सर्वः प्रमातृगणः स्थितोऽ-
द्वयमथ च तद्रूपं सर्वं प्रमाणमथ प्रमा ।
विविधरचनं मेयं पूर्वं तथैव च साधितं
व्यवहृतिरियं तस्मात् सर्वा शिवैकमयी स्थिता ॥ २०२ ॥

व्यवहृतिपदे यः स्यात् तज्ज्ञः शिवैकमयः स्थितो
न स बुधवरः क्षोभाविष्टो भवेन्ननु जातुचित् ।
भवतु च मनाक् तत्कालेऽसौ स्वभाववशेन त-
त्क्षणमथ विधायैनं सद्यः शिवैकमयो भवेत् ॥ २०३ ॥

व्यवहृतिपरैर्मूर्खैरेवं कथंचन जातुचिद्
मनसि विभवो धर्तुं शक्यो न पेलवरूपिणि ।
ननु नहि रुजा ग्रस्तः शक्तः पुमानरुजः स्थितिं
परिकल्पयितुं देहे स्वस्मिन् सुतानवमाश्रिते ॥ २०४ ॥

प्रभुक्तमरिचः प्रौढो यथा नायाति दुःखिताम् ।
व्यवहारे तथा तज्ज्ञो नायाति क्षुब्धतामिह ॥ २०५ ॥

क्षोभेऽपि स्तोकमायातः शिवीकार्यः क्षणादयम् ।
तदशक्तावुपेक्षैव युक्ता न द्वेषणं मुहुः ॥ २०६ ॥

दार्ढ्यायातस्तु दोषोऽयं द्वेष एव पुनः पुनः ।
तानवं स्वयमागच्छेद् यावद् यत्नपरैर्नरैः ॥ २०७ ॥

स्वात्मैव त्वत्र साक्षित्वे स्थापनीयः प्रयत्नतः ।
स्वस्य वञ्चनमेव स्यादन्यथेति विनिश्चयः ॥ २०८ ॥

परार्थं क्षोभराहित्यं योऽभिनीय पुमान् स्थितः ।
उपायं तस्य को ब्रूयात् स्वात्मवञ्चकताजुषः ॥ २०९ ॥

वञ्चनापि शिवस्यैव रूपं यद्यपि संस्थितम् ।
तत्फलस्यातितापस्य तत्त्वं केन निवार्यते ॥ २१० ॥

यस्तापातापयोः साम्यं भजतीह पुमान् सदा ।
विना प्रयोजनं तस्मै नमोऽस्तु महतेऽनिशम् ॥ २११ ॥

असाम्यमपि नो तस्मात् परस्मादतिरिच्यते ।
त्यागेनैवात्र पूजा स्यात् प्रोक्तस्त्यागोऽपि यच्छिवः ॥ २१२ ॥

ग्राह्यं ग्राह्यं सदैव स्यात् त्याज्यं त्याज्यं तु सर्वदा ।
एषैव परमा पूजा श्रीशिवस्य परेशितुः ॥ २१३ ॥

असम्भवहतं कुर्वन्नुन्मार्गगमने नरः ।
दुखाद् दुःखमवाप्नोति पापात्पापं भयाद्भयम् ॥ २१४ ॥

उन्मार्गगमनं मार्गे वर्तनं च शिवः स्वयम् ।
आद्यं त्यक्त्वाऽन्यमाश्रित्य शिवपूजा कृता भवेत् ॥ २१५ ॥

त्यागादाने शिवो यस्मात् प्रादुर्भाव्य स्वयं स्थितः ।
विषयद्वयमप्यत्र पृथगेव शिवात्मकम् ॥ २१६ ॥

अद्वैतवाचः श्रवणाद् य उन्मार्गे स्थितिं भजेत् ।
द्वैतादपि च्युतं मूढं तं स्पृशेत् कः पुमान् पशुम् ॥ २१७ ॥

अद्वैतं यस्तु संश्रुत्य मार्गे दृढतरो भवेत् ।
स ऊर्ध्वं यातुमस्त्येव योग्यो नरवरो महान् ॥ २१८ ॥

तृष्णाद्वैतादधो यानं तत्त्यागस्तत्र निष्ठितिः ।
उन्मार्गे वर्तनं तृष्णा वैतृष्ण्यं मार्गनिष्ठता ॥ २१९ ॥

यद्यप्येषाऽपि तृष्णाऽलं शिवत्वेनैव संस्थिता ।
तथापि नैव ग्राह्याऽसौ शिवेन ननु निर्मिता ॥ २२० ॥

मा त्यजत्वेव तां लोकश्छिन्नं किं नोऽस्ति चित्त हे ।
त्वया त्याज्या तु यत्नेन त्यागेनास्या हि पूजनम् ॥ २२१ ॥

सर्वं पूजैव युक्तं यत् क्रियते सुखदं हि तत् ।
अयुक्तं क्रियते यत्तु तदपूजनमीरितम् ॥ २२२ ॥

स्वात्मप्रसादनं पूजा बुधैः प्रोक्ता सनातनैः ।
तत्तस्य जायते युक्तसेवनेनैव सर्वदा ॥ २२३ ॥

यस्त्वयुक्तेन मोहार्तो जानीयादात्मतोषणम् ।
दूरादेव स पूज्यः स्यात् तत्रापि हि शिवः स्थितः ॥ २२४ ॥

दूरादवस्थितिर्ह्येषा प्रभूनामग्रतस्तथा ।
युक्तैव न त्वनौचित्यदूषिता स्वसुखावहा ॥ २२५ ॥

कदाचिद्धि प्रभोरग्रे स्थेयमेव विनीतवत् ।
कालान्तरे तु दूरेण स्थेयं त्वतिविनीतवत् ॥ २२६ ॥

कालस्पर्शोऽत्र नास्त्येव देशस्पर्शस्तथैव च ।
सर्वत्र सर्वदा स्थेयमग्रे दूरे च हे बुधाः ॥ २२७ ॥

देहाद्रूपाद्विदूरे स्यादुपादेये तु सर्वदा ।
स्वासन्नस्तु महापूजा शिवस्यैषा प्रकीर्तिता ॥ २२८ ॥

यथा निमन्त्रिते राज्ञि तदश्वादेस्तृणादिकम् ।
दीयते न तु शाल्यन्नमयुक्तं तद्वदीश्वरे ॥ २२९ ॥

पूज्यमाने च सा कार्या पूजा तस्य विधानतः ।
या यस्य युक्ता सर्वे तु रूपं परशिवस्य यत् ॥ २३० ॥

मात्रादेस्तु नमस्कारः पत्न्यास्त्वालिङ्गनादिकम् ।
अन्येषां च यथौचित्यं सेवा पूजा बुधैः स्मृता ॥ २३१ ॥

वस्तूनां च यथायोगं पूजनं विनियोजनम् ।
बहुनात्र किमुक्तेन शास्त्रमत्र हि बोधकम् ॥ २३२ ॥

यथोक्तकरणं प्रोक्तं पराद्वैतस्य लक्षणम् ।
विपर्ययो महाद्वैतं तृष्णामूलतया स्फुटम् । २३३ ॥

उन्मत्तताकृतोन्मार्गप्रवृत्तिर्जाड्यपुष्टता ।
ज्ञात्वा यथोक्तकरणं महाद्वैतफलं स्मृतम् ॥ २३४ ॥

अद्वैतं द्वैतवद् भाति भातु का ह्यानिरत्र नः ।
तेनैवाद्वैतसत्ता हि स्थितिमासादयत्यलम् ॥ २३५ ॥

कर्माद्वैतेन येऽद्वैतं जानते मूढभावतः ।
द्वैतधीर्नैव तेषां सा जातु शाम्यति केनचित् ॥ २३६ ॥

शरावो घटकार्यं नो करोत्येव कदाचन ।
मृत्त्वमत्र द्वयेऽप्यस्ति स्थितमेकं स्वभावतः ॥ २३७ ॥

स्वभावाद्वैतमेवेह स्थितं भावेषु निश्चितम् ।
तच्च सत्तामात्रमेव नैककर्मकृतिः स्फुटम् ॥ २३८ ॥

न चित्रार्थक्रियाभावपूगं द्वैतं नयत्यलम् ।
स्वभावैक्ये यथैवैकं भावं वा शिवमेव वा ॥ २३९ ॥

सत्तामात्रं तदेकं स्याद्भावसारतया स्थितम् ।
नामरूपे कल्पिते द्वे भावेषु भेदभाजनम् ॥ २४० ॥

नामरूपकृतो भेदः परत्वं कुरुते बलात् ।
अभेदस्य ततो ते च निष्फले न कदाचन ॥ २४१ ॥

अद्वैतं तत्स्वभावेन सिद्धं भेदेषु विद्यते ।
साधनीयं न तज्जातु साधितं हि विनाशयुक् ॥ २४२ ॥

तत्साधनार्थमुन्मार्गप्रवृत्तिर्या तु दृश्यते ।
केषाञ्चिदस्तु तेषां सा किं नश्च्छिन्नं तु मूलतः ॥ २४३ ॥

मूलं हि शिव एकोऽस्ति शुद्धस्य मलिनस्य वा ।
तत्पूजा च क्रमेणैवमादानं त्याग एव च ॥ २४४ ॥

प्रसक्तानुप्रसक्त्याऽलं या ज्ञात्वा(ता)लोकवत् स्थितिः ।
शास्त्रानुरोधतः सेयं परावस्था प्रकीर्तिता ॥ २४५ ॥

सत्येवात्मनि चित्स्वभावमहसि स्वान्ते तथोपक्रियां
तस्मै कुर्वति तत्प्रचारविवशे सत्यक्षवर्गेऽपि च।
सत्स्वर्थेषु सुखादिषु स्फुटतरं यद्भेदवन्ध्योदयं
योगी तिष्ठति पूर्णरश्मिखचितस्तत्तत्त्वमाचीयताम् ॥ २४६ ॥

ज्ञात्वा गार्हस्थ्यकरणमपि श्रेयस्करं भवेत्।
"अज्ञात्वा धारणायोगोऽप्यस्ति दुःखकरो भृशम्" ॥ २४७ ॥

इत्युक्तं श्रीमहातन्त्रे तन्त्रालोकेति नामनि।
रश्मिर्हि ज्ञानमेवात्र पूर्णता तस्य पुष्टता ॥ २४८ ॥

ज्ञानं च शिवताज्ञानं सर्वत्र सत्यभावतः।
न भेदविषयं ज्ञानमज्ञानं तद्धयुदीरितम् ॥ २४९ ॥

उन्मार्गगमनं त्यक्त्वा प्रवाहागतकर्मणि।
या निष्ठा ज्ञानपूर्वं सा परावस्था निगद्यते ॥ २५० ॥

उन्मार्गगमनं तृष्णाहेतोः स्यादथ जाड्यतः।
द्वयमेतदसाधीयो यथेच्छसि तथा कुरु ॥ २५१ ॥

सर्वे हीच्छानुसारेण कर्म कुर्वन्ति मानवाः।
शास्त्रादिनियमस्तत्र न हेतुः पुष्कलः स्मृतः ॥ २५२ ॥

[1]"सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति" ॥ २५३ ॥

इत्युक्तं श्रीभगवता गीतासु स्वयमेव यत्।
प्रकृतिर्मूलमिच्छाया बुधैः प्रोक्ता पुरातनैः ॥ २५४ ॥

[2]"यत्र रुचिस्तत्र विधिर्यत्र च नास्ति तत्र निषेधः।
इत्यस्माकं विवेको हृदयपरिस्पन्दमात्रशास्त्राणाम्" ॥ २५५ ॥

इत्यप्युक्तं महादृष्टिनिष्ठैर्गुरुवरैः स्फुटम्।
विधिशब्दस्य करणं वाच्यं न करणीयता ॥ २५६ ॥

यत्रैव रुचिरेषास्य पुंसस्तत्कुरुते स्वयम्।
नान्यथेत्यत्र वाक्यार्थो न कार्यत्वं न भावना ॥ २५७ ॥

तत्त्वे ह्युन्मार्गनिष्ठत्वमादिष्टं स्यात् कदाचन।
न तद्युक्तं स्वभावेन प्रवृत्तौ का नियोजना ॥ २५८ ॥

---

१. गीता ३।३३। २. महार्थमञ्जरी ७।

रुचिः पर शिवाद् यत्र यथा प्रादुर्भवेत् तथा।
तत्र स्थिता भवेत् कस्य शक्तता तद्विनिग्रहे ॥ २५९ ॥

विनिगृह्णंस्तु यस्तिष्ठेत् तस्य सन्मुखताऽत्र सा।
स्वरुच्यैवास्ति नान्येन हेतुनेति विनिश्चयः ॥ २६० ॥

स्वरुच्या यततो(ते) भव्यो भव्ये कर्मणि सत्तमम्।
विपरीते विपरीतो नियोगावसरोऽत्र कः ॥ २.१ ॥

शास्त्रादौ नियमो यस्तु स पथो दर्शनं परम्।
प्रवृत्तौ वा निवृत्तौ वा स्वेच्छैवात्रास्ति निबन्धनम् ॥ २६२ ॥

गुणातीतसमाचारशास्त्रं नान्यत्तु किञ्चन।
गुणातीताः स्वभावेन यस्माच्छास्त्रोक्तकारिणः ॥ २६३ ॥

शास्त्रानुसारतस्तच्च कुर्वाणाः सात्त्विकाः स्मृताः।
लोभादिना प्रवृत्तास्तु राजसा परिकीर्तिताः ॥ २६४ ॥

यथा तथा तद्विरोधनिष्ठा ये तामसास्तु ते।
सामान्यस्पन्दनिष्ठेभ्यस्तस्माच्छास्त्रं समुत्थितम् ॥ २६५ ॥

सामान्यस्पन्दनिष्ठत्वं यदि जातं तदा स्वयम्।
विहिते रुचिरेव स्यादनुक्ते त्वरुचिः स्फुटम् ॥ २६६ ॥

विशेषस्पन्दग्रस्तानां विवशानां निजे हृदि।
इच्छानिच्छे विरुद्धे न शास्त्रतो भवतः स्फुटम् ॥ २६७ ॥

विशेषस्पन्दनिष्ठत्वं दूरीकार्यं प्रयत्नतः।
तन्नाशे हृदयं सत्यं स्फुटीभवति तत्त्वतः ॥ २६८ ॥

विधिस्तद्रुचिरेव स्यान्निषेधोऽरुचिरस्य च।
गुणैर्विवशतं चित्तं हृदयं ने(चे)ह कथ्यते ॥ २६९ ॥

तद् विगाल्यं प्रयत्नेन नानुवर्त्यं कदाचन।
तद्गालनं च हृदयस्पन्दकार्यं प्रकीर्तितम् ॥ २७० ॥

विशेषस्पन्दसम्भूतिर्यद्यप्येवास्ति सत्यतः।
सामान्यस्पन्दतोऽत्रापि दुःखदोऽसौ बुधैः स्मृतः ॥ २७१ ॥

भव्योऽसि चेच्छुभं कर्म स्वयमेव करिष्यसि।
अभव्यश्चेदशुद्धं तु नियोगो नात्र कारणम् ॥ २७२ ॥

क्रीडामात्रं शिवस्येदं वैषम्यासूत्रणं न तु।
स्वस्मिन् वैषम्यकारित्वं न युक्तं न च सम्भवि ॥ २७३ ॥

क्रीडामात्रेऽपि दोषोऽस्ति यद्यप्येव विनिश्चितम् ।
बालत्वादि तथाप्यत्रानुत्तरे किं नु कथ्यते ॥ २७४ ॥

मौनमप्यत्र नो युक्तं मौनान्मौनमथापि वा ।
तत्सर्वमस्तु सर्वं हि युक्तं सर्वं महे पदे ॥ २७५ ॥

केवलं कल्पनामात्रं ज्ञानाज्ञानादिरूपकम् ।
सन्त्यज्य स्थेयमेवात्र प्रवाहागतसेविना ॥ २७६ ॥

कल्पनापि कदाचिच्छा त्सा)याता परशिवात्मना ।
एकीकार्याऽथवोपेक्षा(क्ष्या) दूषणीया न दूषणैः ॥ २७७ ॥

ईदृश्येव स्थितिर्येषां नमस्तेभ्योऽस्तु सर्वदा ।
नमसेऽपि नमस्तस्मै तत्कारिभ्योऽपि वै नमः ॥ २७८ ॥

इति गुरुमुखात् प्राप्तं पूर्वं मया हि प्रकाशितं
स्फुटमिह मनाक् किञ्चित् स्मृत्वा रहस्यमनुत्तरम् ।
विविधकलनातल्पे सुप्तं प्रबोधयितुं निजं
हृदयमिह यन्नान्यस्तस्मात् प्रबोध्य इहास्ति मे ॥ २७९ ॥

सेयं परशिवावस्था कीर्तितेह पुरातनैः ।
परशब्दो हि तत्रास्त्यतद्व्यावृत्तिवारणे ॥ २८० ॥

चिन्मात्राख्ये पदे शैवे तद्व्यावृत्तिरिह स्थिता ।
परशब्दोऽत्र तस्याः स्याद् व्यावर्तनपरायणः ॥ २८१ ॥

स एवात्माऽस्ति सर्वस्य सर्वत्र तत्तया स्थितः ।
असर्वमपि तस्यैव रूपं स्वप्रतियोगिवत् ॥ २८२ ॥

अन्यथा सर्वता काऽस्य स्यात् सर्वस्येति विनिश्चयः ।
असर्वमेव सर्वस्य सिद्धिदं पण्डितैः स्मृतम् ॥ २८३ ॥

न बीजाङ्कुरन्यायश्च शङ्कनीयोऽत्र कुत्रचित् ।
महाबीजे स्थिते त्वस्मिन् सर्वत्र सर्वदैव च ॥ २८४ ॥

भवन् वा सोऽपि तत्रैव लीनो भवतु का क्षतिः ।
समस्तवस्तुपूर्णत्वं परत्वं तत्र तद् यतः ॥ २८५ ॥

यद्यप्यत्रापि नैवास्ति निष्कृतिः प्रतियोगिनः ।
किं कुर्मो यादृशो यक्षो बलिरप्यस्य तादृशः ॥ २८६ ॥

महाद्वैतेऽथवा सर्वं स्थितं स्यादन्यथा कथम् ।
महत्त्वं तस्य युक्तं स्यादद्वैतस्यैव हे बुधाः ॥ २८७ ॥

अवस्थेयं महामन्त्रप्राप्तनिष्ठेषु युज्यते ।
न सामान्यजने वाचां प्रागल्भ्येनैव केवलम् ॥ २८८ ॥

अत्र स्थिता महात्मानो द्वित्राः स्युर्नं च पञ्चषः ।
तेभ्यः श्रुत्वेदमस्माभिरुक्तं शास्त्रानुसारतः ॥ २८९ ॥

अस्मभ्यमपि वै दातुं शक्तोऽत्रानुभवं शिवः ।
स्वात्मा हि सर्वजन्तूनां स एव भगवान् स्वयम् ॥ २९० ॥

अयत्नसिद्धा तस्यास्ति महाभूतिरियं सदा ।
अज्ञानमात्रं यच्चात्र तदप्यस्यैव वैभवम् ॥ २९१ ॥

[1]"भारूपः सत्यसंकल्पस्त्वमात्मा यस्य सोऽप्यहम् ।
संसारीति किमीशैष स्वप्नः सोऽपि कुतस्त्वयि" ॥ २९२ ॥

भट्टनारायणेनापि ह्युक्तं स्तोत्रे निजे स्वयम् ।
स्वात्मा सदा युक्तरूपः सर्वेषां स्वयमित्यलम् ॥ २९३ ॥

चित्त मा विमुखीभूयाः सर्वाशापूरकात् ततः ।
तस्यैव कार्यं त्वत्कार्यं कः स्वकार्यं विनाशयेत् ॥ २९४ ॥

विनाशयतु वा किं ते क्रीडामात्रं हि तस्य तत् ।
भृत्यस्य प्रभुक्रीडासु कोऽधिकारोऽभियोजने ॥ २९५ ॥

तवापि कार्यं तत्कार्यं नहि त्वं कोऽपि तं विना ।
भृत्यकार्यं प्रभोः कार्यं बाह्योऽपि ननु दृश्यते ॥ २९६ ॥

केवलं तत्कार्यमेव साक्षिवत् पश्य चित्त हे ।
देहस्थितिं तावदेव तदन्ते त्वं स इत्यलम् ॥ २९७ ॥

अथवा सर्वकार्याणि स्वाभिमानेन गृह्यताम् ।
ईश्वरोऽस्मीति भावेन देहभावनिवारणात् ॥ २९८ ॥

तदुक्तं श्रीभगवता—

[2]"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान् मनुष्येषु स चोक्तः कृत्स्नकर्मकृत्" ॥ इति ।

देहोऽयमपि तस्यैव वशेऽस्ति सर्वदा स्थितः ।
यावत्कालं भवेत्तावद् भवत्वेव च का क्षतिः ॥ ३०० ॥

क्षत्याऽपि नैव काऽप्यस्ति क्षतिः काऽपि तयाऽपि वा ।
केवलं कल्पनामात्रं सर्वं तदपि नास्ति वा ॥ ३०१ ॥

१. स्तवचिन्तामणिः ८५ । २. गीता ४।१८ ।

नासनं चापि नो युक्तं तस्याश्चित्त कदाचन ।
प्रतियोगितया भाति तत्रासनमिदं यतः ॥ ३०२ ॥
सर्वं वा सर्वदैवास्तु मास्तु वापि कदाचन ।
विश्वोत्तीर्णे विश्वमये सदाऽस्मिन् परवस्तुनि ॥ ३०३ ॥

सर्वं सर्वमयं तत्र सर्वदा सर्वथा स्थितम् ।
सर्वत्रास्त्यथवा नास्ति परे वस्तुनि किञ्चन ॥ ३०४ ॥
तस्मात् सर्वमयं वस्तु किमप्यस्तु निरुत्तरम् ।
यत्र सर्वमिदं नास्ति तद्रूपत्वात् तदात्मकम् ॥ ३०५ ॥

यस्मात्तन्नो क्वचिदपि सदा तेन सर्वत्र तत्स्याद्
यस्मान्नाभून्न भवति तथा भावि वा क्वापि नैव ।
तत्सत्ता स्यान्नियतमनिशं तस्य भोः सर्वकालं
नो किञ्चिद्यद् भवति च ततः सर्वरूपाश्रितं तत् ॥ ३०६ ॥
यन्नो दृष्टेः परमिह भवत्येष सर्वस्य जातु
तत्प्राकट्यं बहुतरमिदं तस्य सिद्धं विनक्ति ।
यन्मूर्खाणां भवति नियतं वस्तुजातेऽप्यनर्घे
नैवाग्रस्थे ग्रहणमभितो नादृतेः सर्वगेऽपि ॥ ३०७ ॥
सा दृष्टिर्वा भवतु च ततोऽप्यस्ति का हानिरेषा
नादृष्टं स्वं भवति तु कदाप्येव दोषाय यस्मात् ।
दोषो वाऽयं भवतु च तथाप्येव दोषोऽस्ति को वा
दोषोऽदोषो भवति हि बुधा लौकिकेऽनुत्तरे नो ॥ ३०८ ॥
तत्रारूढोऽपि स ननु भृशं तन्मयीभावलीनो
दोषत्वं स्वं कथमिव भजेत् तत्प्रभावेण नष्टम् ।
नो नष्टं वा भवतु च न तत् तस्य हानौ समर्थं
यत् पूर्णत्वं स्वमथ वितरत् तत्र पुष्टीकरोति ॥ ३०९ ॥

यद्यत् पूर्णं स्फुरति सकले तेन तत्पूर्णता स्यात्
तत् पूर्णत्वं रचयति ततो पूर्णताऽप्येव सत्यम् ।
सर्वं तत्र स्फुरति सततं भावजातं तदेतत्
स्वाभावेनाश्रितपरिचयं भावजातैः प्रपूर्णम् ॥ ३१० ॥
भावाभावाः किमिव ननु तत् पूरणाकारिणः स्युः
किं वा तेषां तदिह ननु तां भावयत्येव तत्त्वम् ।
व्यस्तं पक्षद्वयमपि सदा द्वैतदृष्टं हि मृष्टं
तत्सामस्त्ये खलु समुदिता सा महाद्वैतचर्चा ॥ ३११ ॥

एतद्व्याप्यस्ति न समुचितं सर्वथा सर्वकालं
सर्वत्रैव स्थितवति सदा पूर्णरूपेऽद्वयेऽस्मिन् ।
किं रूपं तत्करणमिह वा भावनं वापि किं स्यात्
स्वस्मिन् कः कां वदत कुरुते पूरणां भावयेद् वा ॥ ३१२ ॥

आस्तां वै तद्द्वयमपि सदा पूर्णतापुष्टिहेतु-
र्हीनं केनापि न परमिदं तत्त्वमस्त्येव यस्मात् ।
किं शङ्काभिः परपद इह ब्रूत सर्वं महे स्याद्
यो यन्निष्ठो भवति स तु तन्निष्ठ एवास्तु सम्यक् ॥ ३१३ ॥

निष्ठाऽप्यत्रास्ति न समुचिता द्वैतदोषावहेयं
नानिष्ठा वा द्वयमपि तथा द्वैतदुष्टं न युक्तम् ।
सर्वं चैतद् भवतु विषयेष्वेव योग्येषु सम्यक्
पुष्टिं यात्येव हि परमतः सा महाद्वैतचर्चा ॥ ३१४ ॥

युक्तत्वं नो विषयनिचयस्यास्ति सन्मात्रभावात्
सत्ताद्वैते परमगहने सूक्ष्मसूक्ष्मस्वरूपे ।
सर्वश्चायं भवति तु महाद्वैतरूपे शिवोऽस्मिन्
पूर्णे स्वान्तःकृतधृतजगद्भावपूगे परस्मिन् ॥ ३१५ ॥

सर्वे भावा भवतु च तदन्तःप्रदेशे न काचिद्
हानिस्तेनापि हि खलु निजा पूर्णता तस्य सिद्धा ।
दाह्यं नो चेद् भवति दहनस्याथ किं नास्ति सोऽग्नि-
श्चिन्मात्रेऽस्मिन्नपि खलु ततः स्यान्महाद्वैतभावः ॥ ३१६ ॥

मा भावोऽसावपि च नियमे नाक्षिपत्येव सर्वं
भावैः सिद्धिं व्रजति हि सदा भावजातं स्वयं नो ।
तस्याभावेऽपि न समुचिता तत्र हानिर्ह्यभावा-
भावो भावो भवति न परा तुच्छता काऽप्यनिष्टा ॥ ३१७ ॥

तुच्छत्वं वा भवतु च ततोऽप्येति तत्पूर्णमेवा-
तुच्छत्वं यन्ननु समुचितं पूर्णताख्यं विदूरात् ।
तुच्छस्तुच्छीभवति न कदाऽप्येव यस्मान्न तुच्छो
तुच्छत्वार्हो नहि समुचितं तस्य तद्भावतोऽन्यत् ॥ ३१८ ॥

तुच्छत्वं तद् यदि खलु भवेत् तुच्छताभावयुक्तं
तद् युक्तं स्यात् परशिवपदे नो विरोधेन दुष्टम् ।
पूर्णे सर्वं भवति हि सदा नो भवेच्चापि तद्वत्
तत्रैवेयं भजति च पदं सा पराद्वैतचर्चा ॥ ३१९ ॥

किं ब्रूमोऽन्यद् भवति तु यथाऽन्योन्यवैरैकनिष्ठः
सम्राजोऽग्रे धृतपरिचये राजपूगः समन्तात् ।
भावाभावा अपि परशिवे स्युस्तथैवेह सर्वे
योऽत्राश्वासं भजति न पुमान् युक्तिसिद्धे स शोच्यः ॥ ३२० ॥

मग्ना यत्र सुधाम्बुधौ ननु जनास्तद्बिन्दुपानार्थिनः
सन्तो येन न सन्तमेव खलु तं जानन्ति मूढाशयाः ।
भाता येन च तस्य भानमथ ते काङ्क्ष्यापदं कुर्वते
पूर्णा येन च पूर्णताख्यविभवे नैवास्य हीनाः स्थिताः ॥ ३२१ ॥

लयः सुप्तिः प्रोक्ता लयमिव भजेद् यत्र तु जगद्
द्विरूपं संप्रोक्तं प्रलय इह तुर्यं खलु बुधैः ।
व्रजेत् संस्कारोऽपि प्रथममथ यत्रास्य नियतं
महांस्तुर्यातीतं प्रलय इह सेयं परदशा ॥ ३२२ ॥

पिण्डं जाग्रत्पदमथ भवेत् स्वप्न एषोऽत्र सुप्ती-
रूपं तुर्यं ननु निगदितं शास्त्रसारेषु दक्षैः ।
रूपातीतं जगति परमा या दशा सर्वरूपा
तुर्यातीता परशिवदशा सैव तज्ज्ञैः प्रदिष्टा ॥ ३२३ ॥

विश्वं भावाः पर इव गताश्चित्स्वरूपोऽथ तस्मा-
दुत्तीर्णोऽयं ननु निगदितः शास्त्रसारेषु दक्षैः ।
द्वावेतौ स्तः स्फुरणविषयौ यत्र कुत्रापि तत्त्वे
तत्तत्त्वं स्यात् परशिव इदं विश्वभावेऽपि विश्वम् ॥ ३२४ ॥

विश्वोत्तीर्णं भवति च पदं विश्वमेतच्च तद्वत्
सम्पूर्णेऽस्मिन् खलु परपदे विश्वरूपे निमग्नम् ।
विश्वोत्तीर्णं फलमिव भवेत् तत्र बीजं च विश्वं
शाखारूपं कलयति महांस्तस्य तां तत्र शक्तिः ॥ ३२५ ॥

विश्वोत्तीर्णं न भवति कदाप्येव विश्वं तथाऽहो
उत्तीर्णं वा नहि समुचितोऽन्यस्य जात्वन्यभावः ।
रूपं तस्मिन् परशिव इहास्त्येव विश्वैकरूपं
विश्वातीतं च खलु सहजं शक्तितद्वत्स्वभावात् ॥ ३२६ ॥

तत्र स्थित्या द्वयमपि भवेद् द्वैधमेतच्च यस्मा-
दब्धौ नीरे सममपि बुधैः क्षुब्धताऽक्षुब्धता च ।
क्षुब्धाक्षुब्धे विततवितते भागभेदेन नित्यं
सामान्येन व्यवहृतिपदं नीयते निर्विशङ्कम् ॥ ३२७ ॥

केयं वापि स्थितिरिह भ्रमं द्वैतदोषेण दुष्टा
कः कुत्रेमां भजति हि महाद्वैतलीने समस्ते ।
नीरे नीरं भवति न कदाप्येव भङ्गैः स्थितं यद्
ह्यादेयत्वं श्रयदिह महातज्ज्ञदृष्ट्यैकतार्हम् ॥ ३२८ ॥

विश्वं विश्वोत्तीर्णे तच्चाप्यथ तन्मये भवति ।
लीनं लयश्च तद्वद् भवेत्तु तत्र स्थितिर्महताम् ॥ ३२९ ॥

तत्रस्थानां सर्वं यथा स्थितं तद् भवेत्तत्त्वम् ।
तत्त्वं तद्वा सर्वं नोभयरूपं चोभयं वापि ॥ ३३० ॥

विश्वं भावप्रपञ्चो विश्वातीतं भवति चिन्मात्रम् ।
विश्वमयः परमेशो विश्वातीतोऽपि पूर्णः स्यात् ॥ ३३१ ॥

विश्वावस्थाभेदस्तदुत्तीर्णस्त्वभेदरूपः स्यात् ।
विश्वमयः परमेशः पूर्णभिदात्मतां भजति ॥ ३३२ ॥

विश्वातीतो विश्वं कथमिति चेद् ब्रूहि को दोषः ।
तत्त्वं तदतीते यद्युक्तं नो तत्तयाऽऽक्रान्ते ॥ ३३३ ॥

दोषो दोषो लोकेऽनुत्तरे दोषता काऽस्य ।
पूर्णं सर्वमयं यन्नो चेत् सा पूर्णता नास्य ॥ ३३४ ॥

विश्वं त्यक्त्वा ग्राह्यं तदतीतं चिन्मयं धाम ।
तत् त्यक्त्वाऽथो ग्राह्यो विश्वमयः परशिवस्तज्ज्ञैः ॥ ३३५ ॥

मूढा विश्वे लीनास्तज्ज्ञोऽतीते जनस्तस्मात् ।
अतितज्ज्ञे विश्वमये लीनत्वं तत्तया स्फूर्तिः ॥ ३३६ ॥

येनानुवृत्तमेवास्ति सर्वं देवेन वैभवात् ।
सोऽयं विभुः परशिवो निर्णीतोऽत्र मया स्फुटम् ॥ ३३७ ॥

इति श्रीमदाराध्यतमाचार्य-श्रीगुरुवरभास्करकण्ठविरचिते
चित्तानुबोधाख्ये महाशास्त्रे विभुपरशिवनिर्णायकं
चतुर्थं प्रकरणं सम्पूर्णम् । इति शिवम् ॥ ४ ॥

## पञ्चमं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः ।

ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः ।

ॐ तद्द्वयसामरस्यरूपायै गुरुपादुकायै नमः ।

ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः ।

ॐ विषयादिभ्य उत्तीर्णः स्वान्तःकृतजगद्गणः ।
प्रोक्तः परशिवः सोऽयं सर्वोत्कृष्टतया परम् ॥ १ ॥

स एवाऽऽत्माऽस्ति सर्वेषां महासामान्यरूपकः ।
सत्तासामान्यमेतस्य भागो भागस्य कीर्तितः ॥ २ ॥

असत्ताऽपि हि तत्रैव सत्तावत् सर्वदा स्थिता ।
अन्यथा सा कथं भायाच्छशशृङ्गादिगोचरे ॥ ३ ॥

यथा सत्ता निर्विशेषा सन्मात्रे प्राणतां गता ।
सत्ताऽसत्ताद्वयं तद्वद् रूपं परशिवे स्थितम् ॥ ४ ॥

विशेषा अपि तत्रैते महासामान्यरूपिणः ।
प्रत्येकं संस्थिता नित्यं प्राधान्येन समाश्रिताः ॥ ५ ॥

तथापि नात्र भेदस्य गन्धो भात्येव कश्चन ।
भातो वा सोऽपि स्रामान्यरूप एव न भेदभाक् ॥ ६ ॥

उत्कृष्टत्वं तु शक्तत्वादस्यैव पण्डितैः स्मृतम् ।
शक्तिमान् हि स्फुटं लोके उत्कृष्ट इति कथ्यते ॥ ७ ॥

शक्तिः स्वातन्त्र्यमात्रं स्यादहमामर्शरूपिणी ।
ज्ञातृत्वस्य परा काष्ठा कर्तृत्वस्यापि सा स्मृता ॥ ८ ॥

शक्यमात्रं जगत् कृत्स्नं शक्तः परशिवः स्मृतः ।
संग्रहोऽयं तु शिष्टं स्याद् विस्तरोऽस्यैव सत्यतः ॥ ९ ॥

यद् भाति परमे व्योम्नि तस्मिन् परशिवात्मके ।
तत् स एव स्वयं साक्षात् स्वकार्ये शक्तिभाग् यतः ॥ १० ॥

शक्तः परशिवोऽस्त्येष नान्येषां शक्तता भवेत् ।
भावे ते चापि शक्तत्वात् स एव न तु ते स्फुटम् ॥ ११ ॥

यः शक्तः स परः साक्षात् शिव एव न संशयः ।
नाशक्तः कोऽपि सकले दृश्यतेऽत्र जगत्त्रये ॥ १२ ॥

श(शू)न्यादन्यत्र याऽशक्तिर्भावानां दृश्यते बहिः ।
साऽपि शक्तिर्महाशक्तेर्विशेषत्वेन संस्थितेः ॥ १३ ॥

वह्नेः कणस्य या शक्तिर्महाशीतनिवारणे ।
अशक्तिरेव सा ज्ञेया विशेषप्रतियोगिनी ॥ १४ ॥

सामान्यशक्तेर्याऽशक्तिः प्रतियोगितया स्थिता ।
सा स्वं नैवोपलभते नञर्थासङ्गतेः स्फुटम् ॥ १५ ॥

नञर्थोऽपि हि शक्तः स्यात् स्वकार्ये शक्यनामनि ।
प्रतियोगिव्यवच्छेदे प्रसिद्धे जगति स्फुटम् ॥ १६ ॥

शक्तः शक्तेर्व्यवच्छेदं न करोति कदाचन ।
तद्युक्तेन व्यवच्छेदस्तस्य कोऽयं न वो मतः ॥ १७ ॥

तस्मान्नञर्थभेदेन स्थित एव न संशयः ।
तथा च शक्तिमात्रं स्यात् सिद्धं नाशक्तिरित्यलम् ॥ १८ ॥

अशक्तेरपि वा वाच्यं शक्तमेव च किञ्चन ।
तच्छक्यमपि लोके हि भवेदकरणादपि ॥ १९ ॥

तत्सम्बन्धेऽपि भावस्याशक्ततापादनं कथम् ।
शक्त्याधारस्य शक्त्या हि रहितत्वं न युज्यते ॥ २० ॥

महाशक्यत्वमेतस्य वक्तुं युक्तं न शक्तता ।
तेन वाऽशक्तताख्यानं महामौढ्यविजृम्भितम् ॥ २१ ॥

यदि वा शक्तता याऽत्र दृश्यते भावदेहगा ।
सा स्वातन्त्र्यप्रयुक्ता स्यादिति जानीमहे वयम् ॥ २२ ॥

अन्यथा शक्तता तस्य स्वशक्येऽपि कथं भवेत् ।
अघटत्वं घटे युक्तं नहि स्वप्नेऽपि दृश्यते ॥ २३ ॥

तस्मात् स्वातन्त्र्यमात्रेणाशक्तता भावगा स्मृता ।
अशक्येषु कथं त्वेतदिति चेन्नोच्यतां पुनः ॥ २४ ॥

स्वतन्त्रे नाभियोगोऽयं युक्तोऽस्ति योग्यतासहः ।
प्रभवोऽपि समर्थत्वं दर्शयन्ति यतः स्वयम् ॥ २५ ॥

कथं स्वातन्त्र्ययोगः स्याज्जडानां स्वसमापिनाम् ।
इति चेत् स्वगृहे कार्या चर्चेयं नान्यसद्मनि ॥ २६ ॥

स्वातन्त्र्येण महामौनं श्रिता भावाः कथं जडाः।
अन्यथा तेऽपि चैतन्यं न युक्तं स्यात् कदाचन ॥ २७ ॥

यथा त्वमुक्तितस्तस्मात् तथा तेऽपि विनिश्चितम्।
स्वानुभूतिः प्रमाणं ते भवत्यत्र न संशयः ॥ २८ ॥

त्वं स्वतन्त्रो न वा ब्रूहि मम निश्चित्य चेतसि।
यदि नासि तदा सेयं त्वया सह कथैव का ॥ २९ ॥

त्वन्मुखेनान्य एवायं कोऽपि वक्त्यत्र कोऽसि भोः।
तूष्णीं भवामः कैवास्ति शिलया सह संकथा ॥ ३० ॥

स्वतन्त्रश्चेत् तदा ब्रूहि भावाः स्वातन्त्र्यभाजनम्।
कथं न स्युः स्वतन्त्राद्धि स्वतन्त्राणां समुद्भवः ॥ ३१ ॥

स्वातन्त्र्येण यथा त्वं स्याच्चेतनस्ते तथा जडाः।
स्वातन्त्र्येण प्रयुक्तं तु जाड्यं नो जाड्यमुच्यते ॥ ३२ ॥

अस्माभिः सह संवादं किं न कुर्वन्ति ते तदा।
किं कुर्मः प्रभवो योग्या न चोद्येषु भवन्ति हि ॥ ३३ ॥

शान्तं ब्रह्मापि चिद्रूपं कथं संवादभाजनम्।
नास्ति सत्यतया ब्रूहि यद्वदेतेऽपि का क्षतिः ॥ ३४ ॥

कीटाः कथा न कुर्वन्ति त्वया सह कदाचन।
सर्वे तेनाचेतनता किं तेषामपि युज्यते ॥ ३५ ॥

अङ्गचालनमात्रेण न चैतन्यस्य कल्पना।
युक्ता वातेन कम्पन्ते वृक्षा अपि जडा यतः ॥ ३६ ॥

चेतनं च किमेतत् स्यादपूर्णं तेऽभिमानकृत्।
विकारमात्रं हीदं स्याद् धातूनां सन्निवेशतः ॥ ३७ ॥

रेतोभावे त्वमप्यासीज्जड एव न संशयः।
नाभिमानस्त्वया कार्यश्चेतनोऽस्मीति कश्चन ॥ ३८ ॥

अहमेव न किञ्चित् स्यामिति चेद् मा शुचो बहु।
तवाभिमाननाशार्थमेवमुक्तं विशेषतः ॥ ३९ ॥

या हि शुद्धा चेतनता सा सर्वत्र समास्थिता।
अन्यथा जीवभावोऽयं जडेऽत्राण्डरसे कथम् ॥ ४० ॥

एवं स्वातन्त्र्ययुक्तं स्याच्चेतनाचेतनं जगत्।
अशक्तत्वं न कस्यापि तस्मादित्येव निश्चयः ॥ ४१ ॥

सर्वं परशिवात्मैवं चेतनाचेतनात्मकम् ।
तस्मिन् परशिवे स्थास्नु तरङ्गादीव वार्मयम् ॥ ४२ ॥

यदाश्रयेण नीचानामप्युत्कर्षो महान् स्थितः ।
तस्योत्कर्षे तु का शङ्का परत्वात् परतोजुषः ॥ ४३ ॥

अनुत्कर्षोऽपि तस्यायं कल्प्यमानो यथा तथा ।
उत्कर्षमेव परतां नयेत् तां यत्र वागियम् ॥ ४४ ॥

विषये भवने योग्या मनसा सह सर्वदा ।
भवेन्नैव भवन्ती वा निवृत्तेः केवलं पदम् ॥ ४५ ॥

अभेदोऽयं यथा तत्र भेदेन कृतसौहृदः ।
पराभेदं जनयति तथोत्कर्षोऽपि का क्षतिः ॥ ४६ ॥

भावाः सर्वेऽपि तत्रैते स्वाभावेनान्विताः सदा ।
स्फुटं सन्त्यथवा सोऽपि भवत्यस इतीष्यताम् ॥ ४७ ॥

भावाभावा देशकालवशतो भिन्नतापदम् ।
इह तौ तत्र नैव स्तो भेदचर्चा तु का भवेत् ॥ ४८ ॥

भेदोऽप्यस्ति पृथग्भानात् सर्वेषामिति साधितम् ।
सोऽयमस्ति पराभेदो महदद्वैतमेव च ॥ ४९ ॥

देशः कालश्च वा सत्यो भवत्वेव च नो क्षतिः ।
भानमात्रं त्वभेदस्य पुष्कलं किं न कारणम् ॥ ५० ॥

सन्निवेशवशेनास्ति भावानां भेदकल्पना ।
अभेदः सारभावेन सर्वं चिन्मात्रमेव यत् ॥ ५१ ॥

भानं त्वनुगतं तत्र स्फुटमेवास्ति स्वस्थितम् ।
द्वयेऽपि तेन तस्यैव पराभेदतया स्थितिः ॥ ५२ ॥

विषयाणां विभेदेन या भाने द्वैतकल्पना ।
तच्छुक्लतादिगुणतो गोजातेर्भेदकल्पनम् ॥ ५३ ॥

भानमात्रं हि वस्त्वस्ति गोजातिरिव गौः स्फुटम् ।
व्यक्तिभेदो न किञ्चित् स्याद् देशकालकृतस्थितिः ॥ ५४ ॥

अस्त्वत्र सोऽपि तेनैव महाभेद इहैव यत् ।
बहुधा साधितो नात्राधिकारी सुलभोऽस्ति नः ॥ ५५ ॥

यैः श्रुतं तैः श्रुतं किं नो श्राव्यश्रावणयत्नतः ।
तैश्चापि श्रुतमेवास्ति तद्भावेन स्वयं स्थितेः ॥ ५६ ॥

यदज्ञानं तु तत् क्रीडामात्रमेव न मूढता ।
ज्ञेया तेन स्वतन्त्रा हि नानाक्रीडासु संस्थिताः ॥ ५७ ॥

एवं परशिवोऽस्त्येको बहवोऽपि तदात्मकाः ।
जगत्यत्र जयत्येकः स महोत्कर्षबृंहितः ॥ ५८ ॥

बाह्योत्कर्षे तु या प्रीतिरस्माकं बाह्यदृष्टितः ।
साऽज्ञानमूला क्रीडा वा स्वातन्त्र्येण प्रसारिता ॥ ५९ ॥

अनुत्तरेऽनुत्तरं तु सर्वं स्यान्न तु लौकिकम् ।
लोकचर्याऽपि तत्रास्त्यनुत्तरैव सदा बुधाः ॥ ६० ॥

यथा स्त्रीपुंसयोर्द्वन्द्वाद् भूतिः स्त्रीपुंसयोस्तथा ।
शिवशक्तिमयाद् द्वन्द्वात् तद्रूपमिथुनस्थितिः ॥ ६१ ॥

शिवशक्तिस्वरूपत्वं प्रतिभावं च साधितम् ।
सन्निवेशो हि भावस्य शक्तिः सारः शिवस्तथा ॥ ६२ ॥

अलं सिद्धेषु साध्यत्वकल्पनाभिरिहाथवा ।
भरितं शिवशक्तिभ्यामेतत् साक्षाज्जगद् यतः ॥ ६३ ॥

"न चक्राङ्का न वज्राङ्का दृश्यन्ते मानवाः क्वचित् ।
भगलिङ्गमयं विश्वं तेन माहेश्वरं जगत्" ॥ ६४ ॥

इत्युक्तं हि महाशास्त्रेष्वेवास्ति विभुना स्वयम् ।
स्त्रीवर्गः शक्तयः साक्षात् पुंवर्गः शिव एव च ॥ ६५ ॥

संस्थितिः स्थावराणां च द्वन्द्वयोगेन युज्यते ।
निदर्शनं च खर्जूरादयो वृक्षा भवन्ति हि ॥ ६६ ॥

द्वन्द्वयोगं विना येऽपि स्थिताः स्युर्जगति स्फुटम् ।
स्वरूपमात्रे तेषां स्यादान्तरी द्वन्द्वकल्पना ॥ ६७ ॥

तथैक्यं ते स्वयं शक्त्या गताः स्युर्येन तद्गतः ।
द्वन्द्वयोगो न दृश्यः स्यात् परेषां स्थूलदर्शिनाम् ॥ ६८ ॥

आनन्दसत्ता याऽस्त्यत्र द्वन्द्वयोगे तु साऽपि न ।
परेषां गोचरे तेन किं सा नास्तीति युक्तिमत् ॥ ६९ ॥

तस्यास्त्वनुभवोऽस्त्येव सर्वेषां निजसंविदि ।
अन्यथा द्वन्द्वयोगं कः क्षोभोत्पादकमर्थयेत् ॥ ७० ॥

जनः सर्वो द्वन्द्वयोगे स्वानन्दार्थं प्रवर्तते ।
सन्तानोत्पत्तिरत्रैव फलत्येषा स्वभावतः ॥ ७१ ॥

अहो भगवता कामो महानधिकृतः कृतः।
सर्वोत्पादे जना यस्मादत्र तत्प्रेरणाद्रुताः॥ ७२॥

यथा द्वन्द्वस्य सन्तानोत्पत्तौ स्वादः प्रयोजकः।
शिवशक्त्योस्तथा स्वादनिष्ठा विश्वस्य भावने॥ ७३॥

तत्रास्वादे सदोद्युक्तः शिवोऽनुत्तरतापदम्।
लौकिकस्तु कदाप्येव तच्छक्त्या प्रेरितः स्फुटम्॥ ७४॥

[1]"रेवतीसङ्गविश्रम्भसमाश्लेषविलासिने।
नमः समरसास्वादपरानन्दोपभोगिने" ॥ ७५॥

इत्युक्तं बहुरूपस्य स्तोत्रे भगवता स्वयम्।
भगवत्याः स्फुटं स्वानुभवतः परमार्थतः॥ ७६॥

त्रिकोणद्वयसंघट्टाद् यः स्यादानन्दसम्प्लवः।
स एव शिवशक्त्यैक्यास्वादो जगति कीर्त्यते॥ ७७॥

तत्रानन्दे तु ये शब्दाः स्फुटं रसमयाः स्थिताः।
साक्षान्मन्त्रास्तु ते प्रोक्ताः परानन्दैककारिणः॥ ७८॥

विसर्गकाले याऽस्त्यत्रानन्दसत्ता महोज्ज्वला।
तस्याः स्मृत्यैव यात्येष तन्मयीभावपूर्णताम्॥ ७९॥

[2]"आनन्दनाडीयुगलस्पन्दनावहितौ स्थितः।
एनां विसर्गनिष्यन्दसौधभूमिं समाश्रयेत्" ॥ ८०॥

इत्येवं तन्त्रसारे हि स्मृतेरानन्दहेतुता।
कीर्तिता न तु क्षोभस्यावहितिर्हि स्मृतिः स्फुटम्॥ ८१॥

क्षोभस्य तस्मिन् काले तूद्रेकान्नैव तु कल्पते।
तां परामष्टुमीशोऽपि योग्योऽन्यस्य तु का गतिः॥ ८२॥

[3]"लेहनामन्थनाकोटैः स्त्रीसुखस्य भरात् स्मृतेः।
शक्त्यभावेऽपि देवेशि भवेदानन्दसंप्लवः" ॥ ८३॥

विज्ञानभैरवेऽप्येवं प्रोक्तं भगवता स्वयम्।
स्मृतिश्च धारणा प्रोक्तास्त्यत्र नो लौकिकी स्मृतिः॥ ८४॥

गृहस्थान् प्रति सैषोक्ता धारणा प्रभुणा स्वयम्।
स्वशक्त्या सह सङ्गे स तैर्ह्यानन्दोऽनुभूयते॥ ८५॥

---

१. बहुरूपस्तोत्रम्। २. तन्त्रालोकः ५।७०। ३. विज्ञानभैरवः ७०।

ब्रह्मचारी स्वभावेन सदानन्दपरायणः ।
न चेच्चाञ्चल्ययुक्तः स्यान्निजे चेतसि सुस्थिरे ॥ ८६ ॥

न तस्य धारणैषाऽस्ति युक्ता परिचयासहा ।
तथा हि क्षोभमेवासौ याति चित्ते निजे स्फुटम् ॥ ८७ ॥

आनन्दच्युतिरत्रास्ति नैव जातूर्ध्वरेतसाम् ।
तेन का विषयापेक्षा तेषां स्यात् पूर्णताजुषाम् ॥ ८८ ॥

अपानवाहरोधेनाधोद्वारेऽपानयोगिनाम् ।
भवेदेवोर्ध्वरेतस्त्वं गुरुशिक्षाप्रभावतः ॥ ८९ ॥

नाधिकारो गृहस्थानामत्र योगे कदाचन ।
स्वधर्मनिष्ठा तेषां स्याद् युक्ता तत्त्वज्ञताजुषाम् ॥ ९० ॥

गृहस्थस्य निजा शक्तिर्नियतास्ति स्फुटं स्थिता ।
यथा विमर्शरूपाऽस्ति शिवस्य परमात्मनः ॥ ९१ ॥

तस्यापि च तया सङ्गे य आस्वादः प्रजायते ।
तदामर्शेन काप्येव निष्ठा सञ्जायते भृशम् ॥ ९२ ॥

एतच्छ्रुत्वा य उन्मार्गप्रवृत्तिं भजते नरः ।
तस्य दण्डस्ताप एव भावी किं तत्र वच्महे ॥ ९३ ॥

महाश्रमेषु नैतस्याधिकारोऽस्ति कदाचन ।
गृहस्थधर्मसंत्यागाद् धार्यते धारणाऽस्य सा ॥ ९४ ॥

कार्यः स्तोकं शमोऽप्यस्य युक्तितो न(र)हणाद् बहु ।
धारणादार्ढ्यमात्रार्थं चित्तं हि क्षोभभाजनम् ॥ ९५ ॥

अन्यशक्त्या महासङ्गे यः क्षोभोऽस्य प्रजायते ।
बहिरन्तश्च तत्रास्य मन एवास्ति साक्ष्यभाक् ॥ ९६ ॥

योगिनीवक्त्रचर्चेयं कर्तुं न युज्यते यतः ।
विस्तरेण ततः किञ्चित् स्तोकमुन्मील्यते तु नः ॥ ९७ ॥

क्षोभ्यक्षोभकयोगे स्याद् याऽमृतोद्भूतिरुत्तमा ।
सेयं परशिवावस्था पण्डितैः समुदाहृता ॥ ९८ ॥

"शाक्ते क्षोभे कुलावेशे सर्वनाड्यग्रगोचरे ।
व्याप्तौ सर्वात्मसंकोचे हृदयं प्रविशेत् सुधीः" ॥ ९९ ॥

इत्येवमुक्तो गुरुभिरयमर्थः समाहितैः ।
क्षोभ्यक्षोभकयोगो हि शाक्तः क्षोभः प्रकीर्तितः ॥ १०० ॥

मथ्यमन्थकभावोऽयं योगिनीहृदयद्वये ।
स्थितो यः सोऽमृतोद्गारी महामेघः प्रकीर्तितः ॥ १०१ ॥

त्रिकेणाद्वयसंश्लेषाद् या हृद्देशे स्फुरा स्मृता ।
स्वभावेनैव चेत् सा स्यात् तत्परात्मग्रहः स्थितः ॥ १०२ ॥

त्रिकेणाद्वयसंश्लेषात् षडरं चक्रमुच्यते ।
महारहस्यशास्त्रेषु गोप्यं तत् सर्वदा बुधैः ॥ १०३ ॥

इत्यलं चर्चया बह्वया रहस्योद्घाटनोत्कया ।
सर्वथा गोप्यमेवैतद् रहस्यं सद्भिरीरितम् ॥ १०४ ॥

मद्यादेरपि वाऽऽनन्दसत्ताप्रादुर्भवोऽस्ति यः ।
सादृश्यमात्रतः सोऽयमत्र ग्राह्यो न रूपतः ॥ १०५ ॥

तत्सेवनेन पुंसां हि क्षोभमात्रे प्रदृश्यते ।
नानन्दे लीनता तत्र लीनः शान्तिपरो भवेत् ॥ १०६ ॥

न च सादृश्यमात्रेण भ्रमितव्यं तु सेवने ।
केन गुञ्जाफलं वह्निसादृश्याद् गृह्यतेऽर्थिना ॥ १०७ ॥

"[1]जग्धिपानकृतोल्लासरसानन्दविजृम्भणात् ।
भावयेद् भरितावस्थां महानन्दस्ततो भवेत्" ॥ १०८ ॥

शिवोपनिषदि प्रोक्तमित्येवं विभुना स्वयम् ।
भावनं स्मरणं प्रोक्तं तच्च सादृश्यमात्रतः ॥ १०९ ॥

यस्त्वानन्दस्य लेशोऽत्र संस्थितः स्वस्वभावतः ।
सोऽशुद्धतोयसम्मिश्रगङ्गोदशीकरोपमः ॥ ११० ॥

नमस्कारे सुयोग्यः स्यान्न तु पाने यथैव सः ।
तथैवानन्दसत्ताऽसौ मद्यगा नात्र संशयः ॥ १११ ॥

ये तु द्रव्यैकनिष्ठाः स्युर्मनुजा भ्रान्तिसेविनः ।
दृश्येष्वासक्तमतयस्ते त्याज्या दूरतो बुधैः ॥ ११२ ॥

स्वानन्देनैव ये स(म)त्ता भवेयुर्घूर्णिता जनाः ।
पीतमद्या इव सदा ते सेव्या यत्नतो बुधैः ॥ ११३ ॥

मधुपानरता ये तु परस्त्र्यादिरतास्तथा ।
क्षुद्रभोगैः समाक्रान्ता योगिनीभक्ष्यतां गताः ॥ ११४ ॥

---

१. विज्ञानभैरवः (शिवोपनिषद्) ७१ ।

तेषां सङ्गेन ये दोषास्तदुक्तौ कस्य शक्तता।
सर्वथा स्मृतिमार्गेऽस्मिन् रतिः सुखकरी स्मृता ॥ ११५ ॥

ये स्युश्चित्ते महाद्वैतनिष्ठाः स्वानन्दघूर्णिताः।
बहिः सर्वसमाचारास्ते जना मुक्तियोगिनः ॥ ११६ ॥

गृहे मद्यादिनिरताः बाह्ये स्वाचारनिष्ठिताः।
दाम्भिकास्तु समाख्याताः पण्डितैस्तत्त्वदर्शिभिः ॥ ११७ ॥

कौलमार्गरतिः सेयं मयोक्ता परमार्थतः।
कुलं शक्तिः समाख्याता कौलाः स्युस्तत्परायणाः ॥ ११८ ॥

वाह्यशक्तौ तु लग्ना ये देहे स्वात्मत्वनिश्चयात्।
देहः साक्षाच्छिवो येषां तेऽशक्ता मूढबुद्धयः ॥ ११९ ॥

स्वात्मामर्शस्वरूपायां शक्तौ ये निरताः स्थिताः।
प्रकाशश्च शिवो येषां ते शक्ताः सूक्ष्मदर्शिनः ॥ १२० ॥

मैथुनं शिवशक्त्यैक्यतन्मयीभाव उच्यते।
मद्यं तु परमानन्दरसासवमहामृतम् ॥ १२१ ॥

मांसस्य भक्षणं देहग्रासो युक्त्या तु साधितः।
मीनाशनं चञ्चलानामिन्द्रियाणां समाहृतिः ॥ १२२ ॥

मुद्राश्चैव समाख्याता बाह्यान्तर्वृत्तिरोधनम्।
न द्रव्यासक्तचित्तत्वं प्रोक्तं श्रेयस्करं बुधैः ॥ १२३ ॥

प्रवाहागतवस्तूनां देशकालाविरोधिनाम्।
भोगीकृतिस्तया दृष्ट्या नैव दोषकरी स्मृता ॥ १२४ ॥

विरुद्धसेवनं नैव जातु कार्यं हितेप्सुभिः।
अनर्थः केवलं तेन भवेन्नानन्दजृम्भणा ॥ १२५ ॥

आनन्दः सहजो यः स्यात् स आनन्द उदाहृतः।
द्रव्यैः कृतस्तु सः प्रोक्तो विषयानन्द इत्यलम् ॥ १२६ ॥

एवं चानुत्तरे धाम्नि श्रेष्ठे परशिवात्मनि।
लोकचर्चानुत्तरैव युज्यते न तु बाह्यवत् ॥ १२७ ॥

एवं शक्तः परशिव उत्कृष्टो नेतरे क्वचित्।
तद्भावेन तु तेऽप्येत उत्कृष्टा इति मन्यताम् ॥ १२८ ॥

उत्कर्षो(र्षे) नैरपेक्ष्यं स्यान्न बाह्या भूतिरुच्यते।
बाह्यभूतौ ह्यपेक्ष्यास्ति दूषणं साऽत्र किं भवेत् ॥ १२९ ॥

बाह्यभूतौ च यस्तापः स नापद्गण इष्यते ।
मुखस्य दीनता याऽत्र तत्राढ्याः स्युर्निदर्शनम् ॥ १३० ॥

यस्तापस्तत्र मनसि तत्र तत्साक्ष्यभाजनम् ।
मु(सु)खभ्रान्तिस्तु या तत्र मोहमात्रं निबन्धनम् ॥ १३१ ॥

यद् दुःखं भूतिसम्प्राप्तौ तद्वक्तुं नैव शक्यते ।
जनाश्चित्रं तत्र रता धिङ् मौर्ख्यं काऽत्र नो गतिः ॥ १३२ ॥

नैरपेक्ष्यं महानन्द उत्कर्षः परमो मतः ।
तत् केवलं परे धाम्नि विद्यते नान्यगोचरे ॥ १३३ ॥

नैरपेक्ष्यस्य याऽपेक्षा सापि तापप्रदा स्मृता ।
तत्रापि नैरपेक्ष्यं यत् सा परा तृप्तिरुच्यते ॥ १३४ ॥

तदुत्कृष्टतया प्रोक्तमन्ये तद्धेतुभावतः ।
उपचारेण सम्प्रोक्ता न स्वरूपेण ते तथा ॥ १३५ ॥

तन्नैरपेक्ष्यं युक्तं स्यात् परं परशिवे सदा ।
सर्वान्तःकरणात् स्वस्मिन् स तृप्तो यत्सदा स्थितः ॥ १३६ ॥

सर्वस्योर्ध्वे तथाऽधश्च स्थितत्वात् सोऽथवा बुधैः ।
उत्कृष्टः प्रोच्यते काष्ठाद्वयं हि परमं मतम् ॥ १३७ ॥

सर्वमेव जितं तेन यतोऽस्ति स ततोऽथवा ।
उत्कृष्टः प्रोच्यते सद्भिर्जयो हि सर्वतोऽधिकः ॥ १३८ ॥

अतः परं तु नो किञ्चित् परं प्राप्यं स्थितं यतः ।
सर्वोत्कृष्टस्ततोऽप्यस्ति सोऽयं परशिवः सदा ॥ १३९ ॥

अनुत्कर्षोऽपि तत्रैव यतो लीनोऽस्ति सर्वदा ।
महोत्कृष्टस्ततः सोऽयं विभुः स्यात् परमः शिवः ॥ १४० ॥

शक्तत्वादपि तस्यैव सर्वोत्कृष्टा स्थितिर्मता ।
लोके हि शक्ते राजादावुत्कृष्टत्वं निगद्यते ॥ १४१ ॥

सदाशिवान्तं क्षित्यादि त्वशक्तं सर्वमुच्यते ।
शिवः शक्तिसमायुक्तः शक्त इत्युच्यते बुधैः ॥ १४२ ॥

न केवलौ तु तौ चापि शक्तौ स्त इति बुध्यताम् ।
एकीभूतौ तु तौ प्रोक्तं शक्तं तत्त्वमिति स्थितिः ॥ १४३ ॥

तच्छून्यत्वेन शक्तत्वं परेषामिति निश्चयः ।
कार्यं कारणरूपं हि नान्यत्किञ्चित् कदाचन ॥ १४४ ॥

यस्मिन् काले तु यद्वस्तु भाति पूर्णदृशामिह ।
तदा तदेव तेषां स्यात् स्वात्मा परशिवः स्वयम् ॥ १४५ ॥

देहादिकं चित्पदान्तं वस्तुजातं च तद्दृशा ।
बाह्यं लोष्ठं चैकमेव स्वाङ्गभावेन संस्थितम् ॥ १४६ ॥

यद्यथैव तथैवैतत् स्वयं परशिवो विभुः ।
नान्यभावमुपागत्य महादृष्टिदृशा सदा ॥ १४७ ॥

परः शिवः परः प्रोक्तः सर्वोत्तीर्णतया तथा ।
पूर्णत्वादथ सर्वेभ्यो ज्येष्ठत्वादिति बुध्यताम् ॥ १४८ ॥

परत्वयोगस्तस्यैष सर्वोत्कृष्टतया मतः ।
जयतादिति शब्दोऽयं परं तत्र प्रवृत्तिभाक् ॥ १४९ ॥

विभुत्वमपि तत्रैव स्थितिं यातं महापदे ।
सर्वत्र व्यापकं यद्यद् विभुर्व्यापक उच्यते ॥ १५० ॥

व्यापकत्वं सर्वतया स्थितत्वान्न तु भेदतः ।
सर्वान्तःकरणाच्चापि द्विविधं तत्र संस्थितम् ॥ १५१ ॥

व्याप्याभावे व्यापकत्वं परं युक्ततया स्थितम् ।
व्याप्यसान्निध्यकाले हि व्यापकस्य कुतः स्थितिः ॥ १५२ ॥

सन्निवेशः परं व्याप्यो व्यापकः सार उच्यते ।
नास्ति भेदस्य गन्धोऽपि सन्निवेशस्य सारतः ॥ १५३ ॥

तत्सर्वान्तःस्थितं यत् स्यात् सर्वं चान्तःस्थितं यतः ।
पदे परशिवाख्येऽत्र ततस्तद्व्यापकं महत् ॥ १५४ ॥

व्याप्यव्यापकभावेन वा स्थितिः सेयमुच्यते ।
महाव्यापकता पूर्णा विभुता सेयमुच्यते ॥ १५५ ॥

[1]"यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति" ॥ १५६ ॥

इत्युक्ता श्रीभगवता विभुता सेयमेव हि ।
अस्मत्तदोर्भेदवृत्ति मूढार्थं परिकल्प्य तु ॥ १५७ ॥

प्रणाशो व्यापकत्वं स्याद् व्याप्यव्यापकभावतः ।
तद्व्यावृत्तिर्नं शब्देन प्रोक्ता स्फुटतया भृशम् ॥ १५८ ॥

---

१. गीता ६।३० ।

तच्छब्देनात्र निर्देशः कृतः परशिवस्य तु ।
बुद्ध्वाऽर्थं ते हि तावन्नो तत्रारूढा निरन्तरम् ॥ १५९ ॥

अस्मच्छब्देन निर्देशः प्रबुद्धान् प्रति कल्पितः ।
ते हि तत्र समारूढा अहंविश्रान्तिभावतः ॥ १६० ॥

षष्ठीद्वयं च भेदस्य द्योतकं त्वत्र कल्पितम् ।
भेदबुद्धिसमाविष्टशिष्यं प्रत्येव केवलम् ॥ १६१ ॥

दर्शनं चात्र भामात्रं न चक्षुर्भ्यां निरीक्षणम् ।
एवं विभुः परशिवः केवलं नेतरे स्मृताः ॥ १६२ ॥

अहो परानन्दमयं स्थानं तत् परमेशितुः ।
पुरा भेदमयं भातं मध्येऽभेदमयं ततः ॥ १६३ ॥

अधुना तन्महाऽभेदरूपं ज्ञानं महाधिया ।
तत्राभेदोऽथ भेदश्च न भेदमर्हतः स्फुटम् ॥ १६४ ॥

पुरा तापमयं ज्ञातं जगदेतच्चराचरम् ।
मध्ये शीततयाऽद्येदं कथं तदुभयाद् गतम् ॥ १६५ ॥

उभयात्मकमध्ये तन्नोभयात्मकतां गतम् ।
भात्यनुत्तरभावेन पानकं योजनाद् यथा ॥ १६६ ॥

किमेतत् स्यान्महास्थानं यत्र कीटो निजं वपुः ।
भजन्नेव तथा भाति यथा परशिवः स्वयम् ॥ १६७ ॥

शिलादिकं कथं भातं पुराऽचेतनभावतः ।
चिन्मात्रात् तत्कथं भात्यधुना स्वातन्त्र्यभाजनम् ॥ १६८ ॥

किं ते भावा अमो न स्युर्दृष्टिर्मे वाऽन्यतां गता ।
किं रोगोऽभून्मम पुरा येन दृष्टमिदं तथा ॥ १६९ ॥

रागादयोऽपि ते कुत्र याता यैर्मथितः पुरा ।
अथवा कृपया तेऽमी अद्य भूताः सुखप्रदाः ॥ १७० ॥

सा तृष्णा चित्रमन्येव महातृप्तिमयी स्थिता ।
सर्वं किमिव पश्यामि तदेवातद्दिव स्थितम् ॥ १७१ ॥

किं भ्रमः पूर्वमासीन्मे किं मध्येऽभूत् स ईदृशः ।
किमद्यैवास्त्यसौ येन सर्वं भाति ततोऽन्यथा ॥ १७२ ॥

भ्रमस्य कैव सत्ताऽद्य भ्रमत्वासंस्थितावपि ।
सोऽयं परशिवो भाति सन्नप्यस्त्वथवाऽस्त्वसन् ॥ १७३ ॥

यदन्ते भाति तत्रैषा भ्रमता काऽथवा यतः ।
आपाते भ्रमता युक्ता मध्ये वाऽनन्ततः स्फुटम् ॥ १७४ ॥

जगत् तदेव भातीदं नान्यदित्येव निश्चयः ।
महाभेदतया भानमात्रमद्याधिकं स्थितम् ॥ १७५ ॥

न तावता विभिन्नं तज्ज्ञेयं भेदो हि दूरतः ।
व्यक्तो भेदेऽपि च तथा पराभेदप्रभावतः ॥ १७६ ॥

भेदोऽप्यभेदभावेन भात्यद्येति महानयम् ।
कोऽभेदो भ्रमताशङ्कारूपोऽयं व्यक्तमुत्थितः ॥ १७७ ॥

सोऽप्यस्तु हानिरत्रास्ति कैव वा मोहदायिनी ।
यद्यद् येनैव रूपेण भाति तद्धि तथा शिवः ॥ १७८ ॥

भानस्य विषयो भानं नाभानं भातुमर्हति ।
भातो वा भानमेव स्यादभानेऽप्यस्य भानता ॥ १७९ ॥

भानं हि स्वात्मनो रूपं नह्यात्मा भानमात्रतः ।
पृथक् कोऽपि स एवेह प्रोक्तः परशिवः स्वयम् ॥ १८० ॥

अथवा स्वयमेवास्ति भावानां शिवता परा ।
ज्ञातृकर्तृत्वधर्मत्वादीश्वरत्वेन संस्थितेः ॥ १८१ ॥

एतेन भरितास्ते हि तैरयं भरितस्तथा ।
अयं ते वा त एवायं केयं वा भेदकल्पना ॥ १८२ ॥

ते वा हि केवलं सन्त्ययम्भावेन स्फुरत्त्विषः ।
अयं वा केवलोऽस्तीह तद्भावेन स्फुरद्वपुः ॥ १८३ ॥

त्वमेव सर्वमेवात्रायम्भावस्तेऽत्र कल्पना ।
अहमेवाथवा सर्वं त्वम्भावोऽपि हि भेदयुक् ॥ १८४ ॥

अहम्भावोऽपि कोऽयं वा प्रतियोगिविनाकृतः ।
विभिन्नवाचकाः सर्वे शब्दाः केऽत्र परे पदे ॥ १८५ ॥

अलं वा भेदचर्चाभिरभेदे हि कृतस्थितिः ।
योग्येऽभेदकथास्वस्ति न भेदविवशो यथा ॥ १८६ ॥

एवं निश्चित्य ये शान्ताः स्थिताः सर्वहिते रताः ।
न शोचन्ति कदाऽप्येव शोचन्तोऽपि हि ते बहिः ॥ १८७ ॥

बाह्यापेक्षा न काऽप्येषां स्वात्ममात्रेण तृप्तितः ।
उपेक्षाऽपि च सा तेषामुपेक्षाविषयस्थिता ॥ १८८ ॥

उपेक्षा वाऽप्यपेक्षा वा तेषां शिवतया स्थिता ।
यद्यप्येव तथाप्येषामप्येषा सर्वथा स्थिता ॥ १८९ ॥

स्वभाववशतः स्तोकमपेक्षान्ते समागताम् ।
क्षणादुपेक्षाविषयीकुर्वन्त्येव न संशयः ॥ १९० ॥

प्रवाहेण यदायाति गच्छत्येव च यत् स्वयम् ।
तत्रावधानं तेषां नो चलत्येव ततः पदात् ॥ १९१ ॥

चलनं वापि तत् तेषां कदाचित् स्फूर्तिमागतम् ।
साक्षात् परशिवोऽस्त्येव भानमात्रेण सिद्धितः ॥ १९२ ॥

अशिवत्वस्य भानं नो शिव एवास्ति तद्दृशा ।
सामान्यजनवत् तेषां तेन स्थितिरिहोच्यते ॥ १९३ ॥

नापूर्वोऽतिशयोऽस्त्येषां नभोगत्यादिकः स्फुटम् ।
आकाशगमने नास्ति पक्षिणां योगिताऽत्र किम् ॥ १९४ ॥

प्रयोगवशतः पूर्वं साधितः सोऽपि नाधुना ।
अपेक्षाविषयः किन्तु विस्मार्यत्वेन संस्थितः ॥ १९५ ॥

स्मृतिं चोपागतो वैष भावितश्च विशेषतः ।
नान्तःस्पर्शे क्षमः को हि तृणे मार्गस्थिते ग्रहः ॥ १९६ ॥

अपूर्वोऽतिशयस्तेषां चित्तशीतलतामयः ।
न शक्यते जनैर्ज्ञातुं सोऽयं शान्तिस्वरूपकः ॥ १९७ ॥

मुखप्रसादतः सोऽयं बाह्यहेतुविनाकृतात् ।
यदि वा ज्ञायते स्तोकं नान्यथाऽस्य ग्रहो भवेत् ॥ १९८ ॥

निजां शीतलतां तापयुक्ता अपि वदन्ति यत् ।
बहिः कौटिल्यतो मूढाः स्ववञ्चनपरायणाः ॥ १९९ ॥

मुखप्रसादः सततं भवत्येव महात्मनाम् ।
विना हेतुं बाह्यमेव चित्तशीतलताकृतम् ॥ २०० ॥

[1]"ग्लानिर्विलुण्ठिका देहे तस्याश्चाज्ञानतः सृतिः ।
तदुन्मेषविलुप्तं चेत् कुतः सा स्यादहेतुका" ॥ २०१ ॥

इत्युक्तं स्पन्दशास्त्रेऽस्ति गुरुभिस्तत्त्वदर्शिभिः ।
मुखप्रसादस्तज्ज्ञानं तस्माज्जातु न नश्यति ॥ २०२ ॥

---

१. स्पन्दकारिका ]४० ।

नष्टेऽप्यसौ क्षणादेव स्वयं तत्रोपतिष्ठते ।
ज्ञातज्ञेयस्य चित्तं हि न दीर्घमलभाजनम् ॥ २०३ ॥
मुखप्रसादो मूढानां दृश्यते जातुचित् तु यः ।
अभीष्टप्राप्तिमात्रेण सन्ततोऽसौ न दृश्यते ॥ २०४ ॥
योऽभिनीय तु तं सत्यस्तिष्ठत्येव सदा सुखम् ।
स व्याधिरुग्णोऽपि चिरं निर्व्याधिरिव तिष्ठतु ॥ २०५ ॥
निर्व्याजं यदि वा स स्यात् तथासौ ननु तद्भवेत् ।
महोद्योगग्रहः सद्भिः पूजितो मोक्षसाधकः ॥ २०६ ॥
सव्याजं तु कृतः सोऽत्र न संभवसहः स्मृतः ।
संभवेऽपि क्षणं तिष्ठेद् विषयाश्रयणात् स्फुटम् ॥ २०७ ॥
सेयं सन्तत एवास्ति महादृष्टियुतेषु यत् ।
तृप्ताः केनापि ते नित्यं न बाह्येनैव हेतुना ॥ २०८ ॥
स्वात्मैव सर्वदा साक्षी कार्यो नान्यः कदाचन ।
स्वं को वञ्चयतेऽन्यस्य वञ्चनेऽपि कृतस्थितिः ॥ २०९ ॥
वञ्चयन्तु जनाः स्वं वा का ते हानिरुपस्थिता ।
वञ्चनेऽपि हि तत्रास्ति शिवस्यैव निजं वपुः ॥ २१० ॥
महात्मानः स्थिता ये तु ज्ञात्वा तत् परमं पदम् ।
व्यवहारेषु ते प्रोक्ता जीवन्मुक्ता महाधियः ॥ २११ ॥
समावेशस्य गन्धोऽस्ति तेषामनुभवे स्थितः ।
देहपाते भवेत् तेषां शिवतैव स्वयं स्थिता ॥ २१२ ॥
सर्वेषामविशेषेण साऽवस्था भाविनीति यत् ।
तदस्तु वासनानाशे यतितव्यं यथा तथा ॥ २१३ ॥
सवासना हि बुद्ध्यैतत् तृष्णाग्रस्ताः स्वशत्रवः ।
स्वात्मानं हन्युरेवेह शान्तेर्हि परमोदयः ॥ २१४ ॥
समावेशरता ये स्युर्योगिनस्तेषु केचन ।
बाह्यैश्वर्यसमायुक्ता भवेयुः स्वस्वभावतः ॥ २१५ ॥
[1]"अतो बिन्दुरतो नादो रूपमस्मादतो रसः ।
प्रवर्तन्तेऽचिरेणे"ति प्रोक्तं हि स्पन्दशासने ॥ २१६ ॥

---

१. स्पन्दकारिका ४२ ।

तृणवत्तां विभूतीनां सम्पत्तिं तु महाशयाः ।
पश्यन्ति परमास्वादतृप्ते विस्मारयन्ति वा ॥ २१७ ॥

येषां स्पृहा तु तासु स्याद् योगिनां मितताजुषाम् ।
अवान्तरैकनिष्ठास्ते विश्रान्तौ संशयास्पदम् ॥ २१८ ॥

जन्मान्तरेऽथवा तेषां सा विश्रान्तिः प्रजायते ।
योगभ्रष्टा हि ते प्रोक्ताः सद्भिः परमदैशिकैः ॥ २१९ ॥

अवस्थाभेद एवोक्तः कैश्चिज्जन्मान्तरं बुधैः ।
अवस्थामात्रमेवासौ पुरुषो नहि देहकः ॥ २२० ॥

कैश्चित् पुत्रादिभावेन तत् प्रोक्तं ज्ञानशालिभिः ।
पुत्रो हि पितृरूपोऽस्ति तदंशत्वेन संस्थितेः ॥ २२१ ॥

रोपिता वृक्षशाखाऽस्ति काले वृक्षान्तरं यथा ।
पिताऽपि बीजभावेन पुत्ररूपस्तथा स्थितः ॥ २२२ ॥

महादृष्टिभिरन्यैस्तु मृतस्य जन्म संस्मृतम् ।
अन्यजन्मवशेनैव सर्वत्रैकत्वभावनात् ॥ २२३ ॥

अब्धौ क्षिप्तं जलं भूयोऽप्युद्घृतं पुनरुद्धृतम् ।
कथ्यते हि न तस्यैव तत्राप्युद्धृतिसम्भवः ॥ २२४ ॥

अतोऽपि श्रेष्ठैः कैश्चित्तु त्यक्ता जन्मकथाऽखिलम् ।
अस्यापि जन्मनोऽसत्तां ज्ञात्वा चिन्मात्रभावतः ॥ २२५ ॥

स्मृतौ साक्षात्तु जन्मोक्तं केनाप्येव विशेषतः ।
अभिप्रायेण तच्चर्चाविस्तरो न सुखावहः ॥ २२६ ॥

पञ्चमाहुतिभावेन तत्र जन्म प्रकीर्तितम् ।
स्वर्गादिभोगतः पश्चात् स्वकर्मवशतो बुधैः ॥ २२७ ॥

सर्वं सत्यं तथाऽसत्यं चास्त्येव परमार्थतः ।
अधिकारिविभेदेन नैकनिष्ठाऽत्र शोभना ॥ २२८ ॥

परलोकस्य चर्चाऽथैतत्प्रसङ्गेन तन्यते ।
परो लोकः सेव्यमानादन्यो लोकः प्रकीर्तितः ॥ २२९ ॥

स चास्त्येव यथैवायमस्याभावे तु सोऽपि नो ।
एतद्भावे तु तस्यापि भावः केन निवारितः ॥ २३० ॥

वासनामात्ररूपोऽसाविति चेदस्तु का क्षतिः ।
लोकोऽप्यमपि तन्मात्रमस्त्येव परमार्थतः ॥ २३१ ॥

निर्वासनानां लोकोऽयमसत्योऽस्ति तथापरः ।
सवासनानां सत्यं तु द्वयमेव सदा भवेत् ॥ २३२ ॥
निर्वासनानां लोकोऽयमसन्नैवास्ति सर्वतः ।
उपेक्षावशतोऽपेक्षा यस्माद् भवनिबन्धनी ॥ २३३ ॥
परलोकाद् भयं कार्यं सर्वैरेव सवासनैः ।
नास्ति चेत् कैव हानिः स्यादस्ति चेन्नास्तिको हतः ॥ २३४ ॥
भोगत्यागेन ये दुष्टा वञ्चनां स्वस्य जानते ।
कथा तैः सह नो युक्ता विधिस्तेषां परायणम् ॥ २३५ ॥
वासनात्याग एवास्माद् यतितव्यं प्रयत्नतः ।
भोगत्यागं विना तस्य सिद्धिरस्त्येव दूरतः ॥ २३६ ॥
निर्वासनत्वे स्वस्यैतन्मनः स्वं साक्षिभावतः ।
स्थापनीयं प्रयत्नेन स्वहिताचरणे रतैः ॥ २३७ ॥
गताऽपि वासना यस्मात् पुनरायाति दूरतः ।
गोनासेव ततस्तत्र नोपेक्षा योग्यतासहा ॥ २३८ ॥
गमनं चापि तस्यास्तच्छङ्कनीयं विजानता ।
अगताऽपि गताऽस्तीति ज्ञायते भ्रान्तियोगतः ॥ २३९ ॥
नष्टाया अपि नाशोऽस्याः पुनर्या यत्ननिष्ठता ।
श्रेयस्करी बुधैः प्रोक्ता सापेक्षा तु विनाशकृत् ॥ २४० ॥
मृताऽपि भुजगी शङ्क्या शोतार्तेति बुधैर्यथा ।
नष्टाऽपि वासना तद्वन्नावहेलाऽत्र शोभना ॥ २४१ ॥
अयं लोकस्तु सत्यं स्यान्न येषां स्वविवेकतः ।
परोऽपि तेषां नो सत्य इतरेष्वन्यथा स्थितिः ॥ २४२ ॥
भोगापेक्षापि तेषां का सर्वत्रासत्त्वदर्शिनाम् ।
प्राप्तेषु तेषु न त्यागो मते तेषां च विद्यते ॥ २४३ ॥
एतल्लोकस्य सत्यत्वे परलोकस्तथा मतः ।
तत्सत्यत्वे च श्राद्धादेः कार्यत्वमिह युज्यते ॥ २४४ ॥
पित्राद्युद्देशतस्तस्माद् ब्राह्मणदेस्तु भोजनम् ।
युक्तमेवास्ति यत् स्नेहो ब्रह्मरूपः स्मृतो बुधैः ॥ २४५ ॥
स्नेहेन चर्तुं यत् सद्य एव तस्योपतिष्ठते ।
पित्रादेः सूक्ष्मभावेन तद्भावेनैव तस्थुषः ॥ २४६ ॥

पुत्रेण भुक्तमन्नादि पितुस्तृप्तिकरं यथा।
पुत्रेणापि तथा चर्तुं तस्य तृप्तिकरं भवेत् ॥ २४७ ॥

पितृजीवे भावनाऽस्ति पुत्रदेयस्य निश्चितम्।
तथैव तस्य सा तृप्तिर्जायते शुद्धभावतः ॥ २४८ ॥

ऐक्यमेवास्ति पुत्रस्य पितुश्चापि परस्परम्।
स्नेहो निदर्शनं तत्र स्नेहो ह्यैक्यस्य लक्षणम् ॥ २४९ ॥

न दीयते चेत् पुत्रेण पितृनाम्ना तु किञ्चन।
मा दीयतां पिता सोऽयं भावनेनैव तृप्तिमान् ॥ २५० ॥

पुत्रस्तु नैव पुत्रात् स्वात् स किञ्चित् प्राप्तुमर्हति।
"नादत्तं लभते कश्चिदि"त्युक्तं हि पुरातनैः ॥ २५१ ॥

वासनामात्रतस्तस्मात् पित्रादेः समुदाहृता।
परलोके सदा तृप्तिः पुत्रादेर्दानतः स्फुटम् ॥ २५२ ॥
न मह्यं दीयते किञ्चित् केनचिदिति यो भ्रमः।
स प्रेतभावहेतुः स्यात् सर्वथैव न युज्यते ॥ २५३ ॥

आशा जलाञ्जलेश्चित्ते सर्वेषामेव विद्यते।
म्लेच्छादीनां च सा ह्यस्ति निजशास्त्रानुसारतः ॥ २५४ ॥

भोक्ता च ब्राह्मणस्तत्र यदि ब्रह्मैक्यमागतः।
सम्भवेत् तत् सदा तृप्तिः पित्रादेर्जायते स्फुटम् ॥ २५५ ॥

स हि सर्वस्वरूपः स्यात् स्वयमेव स्वयोगतः।
अन्यस्तु भक्तिमात्रेण पुत्रेणैवं प्रकल्पितः ॥ २५६ ॥

पुत्रो यथा तथा स्नेहमात्रेणैवाधिकारवान्।
ब्राह्मणस्य गुणास्तत्र भोक्तुर्वीक्ष्यास्तु निश्चितम् ॥ २५७ ॥

अभक्तिश्चेद् ब्राह्मणे स्याद् कुशब्राह्मणकल्पनम्।
प्रशंसन्ति सदा सन्तः शुद्धभावेन निश्चितम् ॥ २५८ ॥

ऐक्यद्वारा स्नेहद्वारा द्रव्यद्वारा विशेषतः।
तृप्तिः स्यात् परलोके तु पित्रादीनामसंशयम् ॥ २५९ ॥

अस्नेहस्य तु या तत्र प्रवृत्तिः सा निरर्थिका।
स्मृतौ च स्नेहयोगोऽयं प्रोक्तः श्रेष्ठतया स्फुटम् ॥ २६० ॥

सर्वथा तदभावोऽपि न सम्भवसहः स्मृतः।
केनापि हेतुना स स्यादंशत इत्यलं बहु ॥ २६१ ॥

स्मृतिशास्त्रं प्रमाणं स्यादधिकारिनिरूपणे ।
युक्तिमाश्रित्य किञ्चित्तु प्रोक्तं गुरुमुखाच्छ्रुतम् ॥ २६२ ॥

वासनारहितानां तत् स्वपितॄणां कदाचन ।
श्राद्धादिकं न कार्यं स्यादिति चेच्छृणु सुस्फुटम् ॥ २६३ ॥

तेषां च वासनाभावे कथमेषां विनिश्चयः ।
तदुक्त्यैवेति चेदस्तु श्राद्धादेः किं न कार्यता ॥ २६४ ॥

व्यर्थत्वादिति चेद् व्यर्थभावः कोऽत्र निरर्थकः ।
पित्रादीनां यतो भक्तिर्महाफलप्रदायिनो ॥ २६५ ॥

धनहानिभयात् त्यागं ये कुर्वन्ति जडाशयाः ।
तेषां चर्चेह नास्त्येव विमुखानां विशेषतः ॥ २६६ ॥

"दारिद्र्ये तृणमूलादिदानादेव प्रजायते ।
पितॄणां तृप्ति"रित्येवं स्मृतौ प्रोक्तं पुरातनैः ॥ २६७ ॥

पित्रादिभिरकरणं यदि वैषां भवेत् स्वयम् ।
आज्ञापितं तदा तेषां किं कार्यमिति चेच्छृणु ॥ २६८ ॥

तदा तेषां स दोषः स्यान्नैषा(षां) भक्तिमतां स्फुटम् ।
एतत्कुर्वन्ति तत्कर्म शास्त्रानुसारतो भृशम् ॥ २६९ ॥

पित्राद्याज्ञालङ्घनं तु न दोषमुपपादयेत् ।
ईश्वरेण कृतं शास्त्रं लङ्घनीयं न जानता ॥ २७० ॥

ज्ञानिभिर्नाज्ञविषये भ्रष्टता कर्मणः कृता ।
[1]"जोषयेत् सर्वकर्माणि"त्युक्तं भगवता यतः ॥ २७१ ॥

देशकालादि संवीक्ष्य यदि किञ्चित्तु तैर्भवेत् ।
आज्ञापितं तदेतत् तु श्रोतव्यं स्वहितेप्सुभिः ॥ २७२ ॥

सर्वथा नैव संत्यागः कर्मणां सुसुखावहः ।
निर्वासनास्तु तत्त्यागं नाऽऽदिशन्ति कदाचन ॥ २७३ ॥

त्यागापेक्षा हि या सेयं वासनाकार्यमुच्यते ।
उपेक्षैव तु सर्वत्र तेषां धनमनुत्तरम् ॥ २७४ ॥
पितृनाम्ना तु यत्कर्म पुत्रस्यैव तदुच्यते ।
पिता निर्वासनोऽप्यस्य कर्म किं नाशयेत् ततः ॥ २७५ ॥

---

१. गीता ३।२६ ।

नाशयन् वासनायास्तु वशं यातः स उच्यते ।
पुत्रेण दयया तस्य कर्मं कार्यं विशेषतः ॥ २७६ ॥

निर्वासनः पितुः कर्म न कुर्याच्चेन्महान् भ्रमः ।
तस्य पुत्रस्य विज्ञेयो वासनामूल इत्यलम् ॥ २७७ ॥

पितुराशा स्थिता चित्ते कर्मं मेऽयं करिष्यति ।
अकुर्वन्नयमत्रैव पश्चात्तापेन युज्यते ॥ २७८ ॥

पश्चात्तापमकुर्वाणो महापापिष्ठ उच्यते ।
पश्चात्तापो बुधैर्यस्मात् प्रायश्चित्तमुदीरितम् ॥ २७९ ॥

योपेक्षा साऽन्यथा किञ्चिन्महापुरुषलक्षणम् ।
मूढेषु नैव सा युक्ताऽपेक्षाग्रस्तेषु सर्वदा ॥ २८० ॥

द्वयोर्निर्वासनत्वेऽपि कर्म कार्यं विपश्चिता ।
लोकसंग्रहणं यस्माद् बुधैः श्रेष्ठतरं स्मृतम् ॥ २८१ ॥

न कर्मरहितो देही स्थातुं शक्नोति जातुचित् ।
शास्त्रोक्तं किं न कुर्वीत दृब्धं सत्पुरुषैर्हि तैः ॥ २८२ ॥

प्राणस्पन्दं विना तिष्ठेद् यस्तु विश्रान्तिमान्नरः ।
न तस्य कोऽपि नियमो विश्रान्तस्य परे पदे ॥ २८३ ॥

शैथिल्यमात्रं तस्मात् स्यात् कर्मजाले सुलक्षणम् ।
निर्वासनानां जन्तूनां न कार्यकरणं भृशम् ॥ २८४ ॥

[1]"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्" ।
इत्युक्तं यद् भगवता गीतासु विभुना स्वयम् ॥ २८५ ॥

तस्माच्छास्त्रानुसारेण सर्वं कर्म समाचरेत् ।
शैथिल्येनैव देहस्य यात्रार्थं स्वहितेच्छुभिः ॥ २८६ ॥

शैथिल्यं चात्र हेवाकराहित्यं तु बुधैः स्मृतम् ।
दैवाधीने कर्मजाले को ग्रहो विदुषां भवेत् ॥ २८७ ॥

फलाऽऽकाङ्क्षा तु या साऽपि विदुषां नैव विद्यते ।
तृप्तत्वादन्यथा तेषां महोपेक्षा कथं भवेत् ॥ २८८ ॥

विद्वत्त्वं तदभावे तु किंरूपं स्याद् विपश्चिताम् ।
तत्र साक्षि मनः स्वं स्यान्नान्यः कश्चिन्मनीषिणाम् ॥ २८९ ॥

---

१. गीता ३।५ ।

फलाकाङ्क्षाविरहितं कर्म नो कर्म संस्मृतम् ।
महोपेक्षा तु सा प्रोक्ता महातृप्तिस्वरूपिणी ॥ २९० ॥

[1]"त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः" ॥ २९१ ॥

इत्युक्तं श्रीभगवता शास्त्रे गीतेतिविश्रुते ।
तस्मात् कर्मफलाऽऽकाङ्क्षां विना कर्म न विद्यते ॥ २९२ ॥

किं तत् कर्मेति चेत् तस्य निर्णयोऽग्रे भविष्यति ।
प्रसङ्गेन तु लेशेन किञ्चिदत्र प्रकाशितम् ॥ २९३ ॥

अलमप्रस्तुताख्यानैः प्रस्तुतं त्वभिधीयते ।
योगिनो ज्ञानिनश्चैव देहपाते शिवाः स्थिताः ॥ २९४ ॥

स्वकर्मवशतस्त्वन्येऽवस्थाभेदैकभागिनः ।
जन्मान्तरेषु संभ्रान्ता भवन्त्येव निरन्तरम् ॥ २९५ ॥

तेऽपि कालेन महता यास्यन्त्येव तु तत्पदम् ।
स्थिता अपि स्वभावेन तत्रैवेति विनिश्चयः ॥ २९६ ॥

अदृढापि यथा भूमिर्दार्ढ्यमायाति कालतः ।
वर्षादिवशतस्तद्वत् तेऽपि तद्रूपतां भृशम् ॥ २९७ ॥

सर्वमुक्तिस्तु यैः प्रोक्ता सामान्येनैव सर्वदा ।
यदि ते भोगसंसक्तास्तर्हि धिक् तान् विभेदिनः ॥ २९८ ॥

यदि तत्त्यागनिष्ठाः स्युरुपेक्षाभूषितान्तराः ।
तर्हि मुक्तैकरूपांस्तान् प्रति सर्वे तथा स्थिताः ॥ २९९ ॥

अस्तु वा सर्वमोक्षोऽयं भोगत्यागेन का क्षतिः ।
तदभावे महाँल्लाभ इति निर्णीयतां बुधाः ॥ ३०० ॥

ये भोगत्यागतः स्वस्य वञ्चनां जानते जडाः ।
सह तैर्नास्ति चर्चेयं तद् वयं मौनमास्थिताः ॥ ३०१ ॥

इह भोगैकनिष्ठत्वं सर्वमोक्षप्रवादिनाम् ।
यदि स्यात् तर्हि ते शोच्या भोगाकाङ्क्षा हि बन्धनम् ॥ ३०२ ॥

वैमुख्यं यदि तेषां स्यात् स्वभाववशतस्ततः ।
तर्हि ते परमाः प्रोक्ताः भोगाऽऽकाङ्क्षा हि दीनता ॥ ३०३ ॥

---

१. गीता ४।२० ।

न त्यागो भोगसंत्यागः काङ्क्षात्यागो हि स स्मृतः ।
स्वात्मैव तत्र साक्षी स्यात् तया सन्ताप्यते तु यः ॥ ३०४ ॥

देशकालाविरोधेन युक्तस्य भुञ्जनं स्वयम् ।
प्राप्तस्य भोगजातस्य त्यागोऽन्यस्य विमुक्तता ॥ ३०५ ॥

त्यागग्रहौ न वा योग्यौ भवतः शान्तचेतसः ।
द्वावप्येतौ क्षोभरूपौ दृश्येते हि स्वभावतः ॥ ३०६ ॥

तत् तौ त्यक्त्वा प्रशान्तः स्यादिति ज्ञानिविनिश्चयः ।
किं तयो रूपमेवं चेच्छ्रूयतां परमार्थतः ॥ ३०७ ॥

प्राप्तस्य त्यागस्त्यागः स्यादप्राप्तस्य ग्रहो ग्रहः ।
"त्यागग्रहौ न मुक्तेषु" श्रीवशिष्ठवचो यथा ॥ ३०८ ॥

शान्तैर्न गृह्यते किञ्चिन्न च सन्त्यज्यतेऽपि च ।
त्यागदाने न जानन्ति तेऽतस्तैः शान्तमास्यते ॥ ३०९ ॥

त्यागात्यागपदस्त्याग उपेक्षामात्ररूपकः ।
सान्तस्तृप्तिस्वरूपैव तृप्तिः स्वास्थ्यं स्वभावतः ॥ ३१० ॥

प्राप्तस्य ग्रहणेनाथ त्यागतोऽप्राप्तवस्तुनः ।
स्वात्मानं पूजयन्त्येव महापूजारताः सदा ॥ ३११ ॥

हेयस्य हानं पूजा स्याच्छिवस्य परमात्मनः ।
उपादानमुपादेयस्यापि पूजा महाफला ॥ ३१२ ॥

हेयस्य हानं नो हानमुपादेयग्रहोऽग्रहः ।
नैव स्यादिति मुक्तस्य त्यागादाने न कर्हिचित् ॥ ३१३ ॥

स्वात्मप्रसादनं पूजा फलं स्यादितरत् तु न ।
आत्मैवेहेश्वरस्तस्य प्रसादो युक्तसेवनात् ॥ ३१४ ॥

पुष्पाद्यैर्याऽपि पूजोक्ता चित्तशोधनकारिणी ।
तस्याः फलं तु पूर्वोक्ता पूजैवास्ति निरन्तरम् ॥ ३१५ ॥

अशुद्धचित्तो नैवास्ति तस्यां योग्यो हि सर्वदा ।
अशुद्धदेहः पुष्पाद्यैः पूजने मानवो यथा ॥ ३१६ ॥

स्नानं त्वत्र शुद्धबोधदग्धविश्वेन्धनोद्गते ।
सिते भस्मनि देहस्य मज्जनं न तु मीनता ॥ ३१७ ॥

मध्यधामसु चित्सूर्योपासनं सान्ध्यमुच्यते ।
अग्निहोत्रं प्रमात्रग्नितर्पणं बाह्यवस्तुभिः ॥ ३१८ ॥

प्राप्तनिष्ठोऽत्र पुरुषो बाह्यपूजाविधौ भृशम् ।
आन्तरे पूजने योग्यो नान्यथेति विनिश्चयः ॥ ३१९ ॥

पूजनस्यान्तरस्यापि मध्ये बाह्याङ्गभावतः ।
भवन्ती युक्तता योगाद् योग्या स्यादिति निश्चयः ॥ ३२० ॥

अकृतापि न दोषाय यद्यसम्भवदूषिता ।
सम्भवासम्भवौ तत्र स्फुटं विधिवशे स्थितौ ॥ ३२१ ॥

बाह्यपूजां विनाऽप्येके शक्तिपातवशेन तु ।
आन्तरे पूजने शक्ता भवन्त्येव न संशयः ॥ ३२२ ॥

पुष्पाद्यैरधमा पूजा मध्यमा स्यात् तु भावनम् ।
निर्विकल्पस्य तत्त्वस्य तदुक्तं परमेष्ठिना ॥ ३२३ ॥
[1]"पूजा नाम न पुष्पाद्यैर्या मतिः क्रियते दृढा ।
निर्विकल्पे परे व्योम्नि सा पूजा ह्यादराल्लयः" ॥ ३२४ ॥

उत्तमा तृप्तिरूपा स्यात् पूजा स्वात्मप्रसादिनी ।
प्रवाहागतवस्तूनां ग्रहणादविकल्पतः ॥ ३२५ ॥

महापूजाविधिश्चैष द्विविधोऽपि महात्मना ।
वशिष्ठेन विनिर्णीतो मोक्षोपायेषु धीमता ॥ ३२६ ॥
आत्मने यः प्रसादोऽसावेव पूजा महाफला ।
न बाह्यो ह्रीश्वरोऽस्त्यन्यस्तस्मात् कश्चिद्विभेदतः ॥ ३२७ ॥

तृप्तिः स्वयं प्रसादः स्यादात्मनस्त्वितरत् स्वयम् ।
तत्साधकं स्वयं द्वारेणापि तृष्णा त्वपूजनम् ॥ ३२८ ॥
स्वात्मप्रसादनं भोगैः साधितैर्हेतु मन्वते ।
तेषां स्वात्मप्रसादे स्यात् साक्षी स्वात्मेव किं बहु ॥ ३२९ ॥

सत्त्वैकनिष्ठा ये ते स्युर्भोगोपेक्षारताः सदा ।
ज्ञानेन तमसा ग्रस्ता मोहादालस्यदूषिताः ॥ ३३० ॥
रजोयुक्ता भवन्त्येव भोगसाधनतत्पराः ।
तदतीतास्तु पुरुषा यथा प्राप्तानुवर्तिनः ॥ ३३१ ॥
महातृप्तिश्च सा तेषां सर्वान्तःकरणा स्थिता ।
अतृप्तिरपि यत्रैषा पूर्णताऽऽपादिनी परम् ॥ ३३२ ॥
त एव तृप्ताः प्रोच्यन्ते महापूजारताः सदा ।
अतृप्ताः सर्वदैवात्माऽवमाननपरायणाः ॥ ३३३ ॥

१. विज्ञानभैरव १४४ ।

बाह्यभोगैस्तु या तृप्तिः सा क्षणादेव नश्वरी।
अतृप्तिं वर्धयत्येषा भाविनीं हि स्वभावतः॥ ३३४॥

भोगैरपि तु ये नित्यतृप्ताः योगिवराः स्थिताः।
ते महावीरशब्देन शास्त्रेषु पठिता बुधैः॥ ३३५॥

[1]"ये ये भावा ह्लादिन इह दृश्याः सुभगसुन्दराकृतयः।
तेषामनुभवकाले स्वस्थितिपरिपोषण[णं सता]मर्चा"॥ ३३६॥

इत्युक्तेरिह भोगानां महातृप्तौ तु हेतुता।
परे तु यदि तन्नाशे न दुःखं बाधते महत्॥ ३३७॥

नैरपेक्ष्ययुता एव सर्वोत्कृष्टा बुधैर्मताः।
न बाह्यभूतियुक्ता यत् तेषां दारिद्र्यमुत्तमम्॥ ३३८॥

अपूर्वदर्शनाच्चैषां विस्मयो नैव जायते।
महाविस्मयमग्ना हि ते स्युर्दृष्ट्वा परं पदम्॥ ३३९॥

महाविस्मयनिष्ठस्य कोऽपूर्वोऽसौ प्रजायते।
हस्तस्थितनिधानस्य काकिण्यां किं प्रयोजनम्॥ ३४०॥

विस्मयस्य पराकाष्ठा महायोगः स्मृतो बुधैः।
तदुक्तं शिवसूत्रेषु [2]"विस्मयो योगभूमिकाः"॥ ३४१॥

संसारनाट्ये सर्वस्मिन् प्रेक्षकास्ते सदा स्थिताः।
स्वयं कृतेऽपि तत्रस्थमातृनर्तकभावतः॥ ३४२॥

न हृष्यन्ति न कुप्यन्ति भावाभाववशेन ते।
तत्रापि शक्तिता लोककृताद् विस्मयवैभवात्॥ ३४३॥

हर्षशोकौ च तेषां स्तः कदाचिद् देहभावतः।
स्फटिकस्येव रागाप्तिर्लाक्षाद्यग्रस्थतावशात्॥ ३४४॥

न भस्त्रारागवत् तेषां हर्षशोकौ कदाचन।
भवेतां दोषकर्तारौ दोषः संस्कारतः स्थितिः॥ ३४५॥

ते जडा इव तिष्ठन्ति सर्वं ज्ञात्वाऽपि सत्यतः।
विवादाद् विमुखीभूय तापाधिक्यकरात् स्फुटम्॥ ३४६॥

प्रवाहेनाऽऽगते तस्मिन्नन्तस्तापविवर्जिताः।
साम्मुख्यं च भजन्त्येव न तु मूकत्वसंस्थितिम्॥ ३४७॥

---

१. प्रशस्तभूतिपादानामियमार्या। २. शिवसूत्रे १।१२।

विवेकैकरतास्ते स्युः समलोष्ठाश्मकाञ्चनाः ।
वस्तुजातं प्रपश्यन्ति शिवभावेन यत् परम् ॥ ३४८ ॥
सर्वं सर्वतया पश्यन्त्येव वा बीजभावतः ।
सर्वस्य भावजातस्य सर्वभावेषु संस्थितेः ॥ ३४९ ॥
सर्वं सर्वं न सर्वं च स्फुटं सर्वत्र सर्वदा ।
सर्वथा ते प्रपश्यन्ति पूर्णं दृष्टिप्रभावतः ॥ ३५० ॥
प्रतियोगी च धर्मे च भेदसत्को न तद्दृशा ।
कश्चिदेव विभात्येव भातो वा भेदभाक् स्फुटम् ॥ ३५१ ॥
भिन्नौ भातौ च वोपेक्षाविषये भावतः स्फुटम् ।
न स्थिताविव तौ तेषां भवेतां तृणपूलवत् ॥ ३५२ ॥
अपेक्षाविषयत्वेऽपि परदृष्ट्याऽवलोकनात् ।
महाद्वैतप्रभावेण भातः परतयैव तौ ॥ ३५३ ॥
अपरत्वं च लोकेषु तयोर्व्यवहृतस्तु वा ।
परापरमिदं तेषां परमेव हि संस्थितम् ॥ ३५४ ॥
परं वाऽप्यपरं वाऽपि परे परतया स्थितम् ।
भवत्येव रुमाप्राप्तकाष्ठादिलवणैक्यवत् ॥ ३५५ ॥
परापरमिदं तेषु न सामान्यजनेष्विव ।
प्रतियोगितया सिद्धं प्रत्येकं स्वात्मनि स्थितेः ॥ ३५६ ॥
किन्तु सर्वं सर्वतया पश्यन्तः सर्वदेव ते ।
प्रतियोगिकथास्पर्शभाजनं नैव कर्हिचित् ॥ ३५७ ॥
प्रतियोग्यपि तद्दृष्ट्या स एव परमेश्वरः ।
सामान्यजनमध्ये तु तद्भावेनापि सूचितः ॥ ३५८ ॥
तावता भेददर्शित्वं नैषु योग्यं कदाचन ।
योग्यं वापि महाद्वैतदर्शित्वं तत्र साधयेत् ॥ ३५९ ॥
अभेदो भेदवत् तेषु परा(पार)मित्येन दूषितः ।
तत्कोऽप्यभेदस्तद्दृष्ट्या यत्र भेदोऽपि संस्थितः ॥ ३६० ॥
अभेदो वाऽस्तु भेदो वा न भेदस्तत्र कोऽप्यलम् ।
भेदाभेदविभागो हि लौकिके न त्वनुत्तरे ॥ ३६१ ॥
अनुत्तरं गता ये च सन्त्येव पुरुषाः पदम् ।
न लोकालोचनास्तेषु योग्याः सन्ति कथञ्चन ॥ ३६२ ॥

यत्किञ्चित् कथयत्वेव लोकस्तेनास्ति का क्षतिः।
तेषां कुत्रापि परमे पदे स्थितवतां सदा ॥ ३६३ ॥

सम्राट्पदस्थितं कोऽपि दरिद्रो यदि निन्दति।
स्तौति वा तेन का तस्य हर्षामर्षमयी स्थितिः ॥ ३६४ ॥

हर्षामर्षादिरागोऽयं भवेद् बहिरिह क्षणम्।
तेषां स्फटिकरीत्यैव न शुक्लपटवच्चिरम् ॥ ३६५ ॥

भोगारुचिश्च तेषां स्यात् सदा लक्षणमुत्तमम्।
तदुक्तं श्रीवशिष्ठेन मोक्षोपायेषु निश्चितम् ॥ ३६६ ॥

"अज्ञानज्वरमुक्तस्य बोधशीतलितात्मनः।
एतदेव भवेच्चिह्नं यद् भोगाम्बु न रोचते" ॥ ३६७ ॥

भोगानामरुचिश्चैषा लोकेऽत्र द्विविधा स्थिता।
एका व्याध्यादिदोषेण विचारवशतोऽपरा ॥ ३६८ ॥

प्रथमाऽस्त्यविशेषेण तत्र देहभृतां स्फुटम्।
मिष्टं चैतदमिष्टं स्याद् व्याध्यादिवशतो भृशम् ॥ ३६९ ॥

द्वितीया तु भवत्येषा महात्मस्वेव केवलम्।
सापेक्षक्षणनाशित्वविचारवशतः स्फुटम् ॥ ३७० ॥

दोषा(ष)जालानुसन्धानात् स्त्रां रुचिं तत्र नित्यशः।
शमयन्त्येव यन्नित्यं महोद्योगपरायणाः ॥ ३७१ ॥

शान्ताया अथ तस्यास्तु कदाचित् स्फुरणं मनाक्।
अनादरप्रभावेण सद्यः संशमयन्ति च ॥ ३७२ ॥

प्रवाहेनागतान् भोगान् देशकालाद्यदूषितान्।
महास्वादेन भुञ्जाना भवन्त्येव महाशयाः ॥ ३७३ ॥

मूढास्तु भोगसमय एव भोगान्तरास्पदम्।
अपेक्षां कलयन्नै(न्त्ये)व तदास्वादस्य भाजनम् ॥ ३७४ ॥

महात्मानस्तु भोगं तं भुक्त्वा तृप्तियुताः स्वयम्।
न पुनस्तं स्मरन्त्येव तृप्तः को भोगतत्परः ॥ ३७५ ॥

अभुक्ता अपि तेषां ते भुक्ता इव पुरो गताः।
तृप्तिदा एव सर्वं हि स्वात्मन्येव स्थितं सदा ॥ ३७६ ॥

तदुक्तं श्रीवशिष्ठेन चूडालामुखतः स्वयम्।
"भोगैरभुक्तैस्तुष्यामि भुक्तैरिव पुरोगतैः" ॥ ३७७ ॥

देशकालादिसर्वं च तेषां हस्तगतं सदा।
भवत्येवेति सर्वज्ञभावस्तेषां स्वभावतः॥ ३७८॥

समस्तदेशकालस्तु मातृभावेन संस्थितेः(तः)।
तेषां सर्वज्ञता सेयं परमार्थेन विद्यते॥ ३७९॥

स्वाभिमानगृहीतैकदेहमातृगतं तु यत्।
सर्वज्ञत्वं जडाभीष्टं तदसम्भवदूषितम्॥ ३८०॥

तत्सम्भवः सर्वथा हि न युक्तः सत्यतः स्फुटम्।
धारणादिप्रभावेण लेशतः सम्भवेन्न वा॥ ३८१॥

सोऽपि नास्त्येव केषाञ्चिज्ज्ञानमात्रे विनिष्ठितेः।
न चासर्वज्ञतादोषो महासर्वज्ञतावशात्॥ ३८२॥

समस्तदेशकालस्तु वस्तुज्ञानस्य सम्भवः।
नैकमातरि युक्तः स्याद् देहाद्यावृतिदोषतः॥ ३८३॥

विदेहमुक्ता ये तेऽमी अचेत्यचित्त्वमागताः।
शिवा एव न बाह्यास्तु प्रपञ्चकथनोन्मुखाः॥ ३८४॥

तस्मात् सर्वज्ञतारूपशिवभावेन केवलम्।
परमार्थेन सर्वज्ञभावो युक्तो महात्मसु॥ ३८५॥

धारणादिप्रभावेण तस्यापि यदि लेशतः।
सम्भवः स्याद् भवेदेव तदभावेन हीनता॥ ३८६॥

देशदैर्घ्यं तथा कालदैर्घ्यं नैतेषु विद्यते।
व्यापकत्वाद् द्वयोरेव शुद्धचिन्मात्रभावतः॥ ३८७॥

यस्य यस्यैव साक्ष्येण सत्ता सिद्ध्यति नान्यथा।
यस्य तं प्रति दैर्घ्यं किं भावे वा भ्रमता स्फुटा॥ ३८८॥

अत एव वसिष्ठेन सर्वज्ञेन महर्षिणा।
लीलोपाख्यानसमये विवेकोऽत्र महाकृतः॥ ३८९॥

ब्राह्मणस्य गृहांशे हि सर्वं ब्रह्माण्डमण्डलम्।
दिनाष्टके च कल्पान्तनिचयस्तेन कीर्तितः॥ ३९०॥

महापुरुषदृष्ट्या तत्क्षणः कल्पाधिकः स्थितः।
कल्पस्तथा क्षणान्न्यूनो भानमात्रविभेदतः॥ ३९१॥

परमाणूदरेऽप्यस्ति ब्रह्माण्डानां परम्परा।
आभासेषु न किं युक्तमिन्द्रस्तत्र निदर्शनम्॥ ३९२॥

ब्रह्माण्डस्योदरेऽप्येको न मात्येवाणुरुज्ज्वलः ।
चिदणुर्हि ततो बाह्योऽप्येष व्यापक इष्यते ॥ ३९३ ॥

आभासमात्रतः सिद्धौ देशकालौ स्थितौ सदा ।
आभासो नैव किञ्चित् स्यात् किञ्चिद्वा शुद्धचिद्वपुः ॥ ३९४ ॥

चिन्नाभेः कालचक्रस्यान्तरे सूक्ष्मतया स्थितिः ।
बाह्ये स्थूलत्वकलनात् कुलालचक्रवत् स्फुटम् ॥ ३९५ ॥

चक्रस्य बाह्यतो दैर्घ्यमन्तरे ह्रस्वता स्थिता ।
निरंशभावो नाभौ तु महासूक्ष्मत्वरूपकः ॥ ३९६ ॥

सूर्यचारे दीर्घताऽस्ति प्राणचारे तु सूक्ष्मता ।
निरंशभावः कालस्य चिन्मात्रत्वे स्फुटं स्थितः ॥ ३९७ ॥

देशस्यापि दशाऽस्त्येषा बाह्ये पर्यन्ततो हि सः ।
अतिदीर्घोऽस्यान्तरे तु सूक्ष्म एष तथा स्थितः ॥ ३९८ ॥

नाभिस्थाने स्थितं तस्य सन्मात्रमतिसूक्ष्मकम् ।
सूक्ष्मा सृष्टिः सूक्ष्मरूपं स्थूला स्थूलं तु कीर्तितम् ॥ ३९९ ॥

देशचक्रं कालचक्रं त्वग्रे निर्णेष्यते स्फुटम् ।
विस्तरेणेति नात्रैतच्चर्चा बहुतरा कृता ॥ ४०० ॥

एवं गुरुमुखाच्छ्रुत्वा रहस्यं प्रकटीकृतम् ।
आभासमात्रतः सिद्धौ देशकालौ सदा स्थितौ ॥ ४०१ ॥

आभासोऽसत्यमिति चेदस्तु सर्वं जगत् तथा ।
आभासेन विना कस्य सत्ता दृष्टा जगद्गता ॥ ४०२ ॥

स्वप्नोऽपि तर्हि सत्यः स्यादिति चेत् तस्य सत्यता ।
हृता केनेति मे ब्रूहि भासमानस्य सुस्फुटम् ॥ ४०३ ॥

तत्र दृष्टाः पदार्था नो दृश्यन्ते जाग्रता बहिः ।
जाग्रद्देशगता भावा केन स्वप्ने निरीक्षिताः ॥ ४०४ ॥

यस्मिन् काले यदाभाति तत्र काले तु सत्यता ।
तस्य केन हृता ब्रूहि भानमेव हि सत्यता ॥ ४०५ ॥

अन्यकाले त्वभानेन याऽन्यस्यासत्यताकृतिः ।
जाग्रद्देशगतानां च भावानां सा प्रसज्यते ॥ ४०६ ॥

स्थैर्यास्थैर्ये तु ये तत्र कल्प्येते तन्न युज्यते ।
अस्थैर्यं हि द्वयोर्दृष्टं न तु स्थैर्यं कदाचन ॥ ४०७ ॥

स्वकाले स्थिरताभासस्तुल्य एव द्वयोः स्फुटम् ।
तस्मादाभासमात्रं स्याद् वस्तु नान्यत् कदाचन ॥ ४०८ ॥

जाग्रति स्वप्नदृष्टस्य लाभाद् ये सत्यताजुषः ।
तैरियं न कथा यस्माद् बुधैस्तेऽज्ञतराः स्मृताः ॥ ४०९ ॥

स्वप्नदृष्ट्या तु ये जाग्रदसत्यत्वे विनिश्चिताः ।
तैरियं शोभते चर्चा चित्रा स्वाश्चर्यकारिणी ॥ ४१० ॥

द्वयोर्वा सत्यतां ब्रूहि परमार्थेन संस्थिताम् ।
भानं हि मूलं सर्वस्य तच्च साक्षाच्छिवात्मकम् ॥ ४११ ॥

क्षणदृष्टं तु जाग्रत् स्यात् स्वप्न एव न संशयः ।
स्वप्नात् स्वप्नान्तरेऽपूर्वस्वप्नो जाग्रत्स्थितः स्फुटम् ॥ ४१२ ॥

अनयोः कोऽपि नो भेदो भानमात्रशरीरयोः ।
इति ज्ञात्वा महात्मानः सौषुप्तं मौनमाश्रिताः ॥ ४१३ ॥

अथवा तुर्यनिष्ठास्ते सदा स्युर्ग्लानिवर्जिताः ।
स्वातन्त्र्येण प्रयुक्तं हि सुषुप्तं तुर्यमुच्यते ॥ ४१४ ॥

निद्रादोषेण या सुप्तिः सामान्यजनवत् स्थिता ।
तेषामपि भवेत् सेयमुपेक्षां तत्र ते गताः ॥ ४१५ ॥

तुर्यातीतदशालम्भात् तेषां यात्रा स्फुटं स्थिता ।
तुर्यातीतं तथा जाग्रत्सादृश्यं हि गतं सदा ॥ ४१६ ॥

सादृश्यस्य भ्रमेणैव जाग्रन्निष्ठोऽपि यो भजेत् ।
तुर्यातीतभ्रमं तस्य स्वात्मैवात्र परायणम् ॥ ४१७ ॥

तुर्यातीतदशामध्ये सर्वं व्यवहृतेः पदम् ।
भासते परभावेन न भावत्वेन कर्हिचित् ॥ ४१८ ॥

परं च भावभावेन स्फुरत् तत्र न संशयः ।
न भावाभावभावेन परं परतया तथा ॥ ४१९ ॥

व्यवहारस्य काले च ज्ञानिनां तु सहस्रशः ।
युक्तयः सन्ति तेनैते सावधानाः स्थिताः सदा ॥ ४२० ॥

अथवा सर्वयुक्तीनामेकं मूलतया स्थितम् ।
स्वबलाक्रमणं तेन व्यवहारेऽपि ते तथा ॥ ४२१ ॥

स्वबलाक्रमणेनैव बाह्यज्ञानं प्रवर्तते ।
स्फुटता च विशेषेण तेन ज्ञानस्य जन्यते ॥ ४२२ ॥

[1]"यथा ह्यर्थो स्फुटो दृष्टः सावधानेऽपि चेतसि।
भूयः स्फुटतरो भाति स्वबलोद्योगभावितः" ॥ ४२३ ॥
इत्युक्तं स्पन्दशास्त्रेऽपि वसुगुप्तेन धीमता।
ज्ञानस्य स्फुटताकाले तत् परीक्ष्यं विजानता ॥ ४२४ ॥
बुभुक्षाया विरोधश्च कर्तुं तेनैव शक्यते।
[2]"आच्छादयेद् बुभुक्षां चे"त्युक्तं तत्रैव।यत् स्फुटम् ॥ ४२५ ॥

दुर्बलस्य बलोद्भूतिरभ्यासेन च या भवेत्।
स्वबलाक्रमणेनैव सापि ज्ञेया मनीषिभिः ॥ ४२६ ॥

राजाद्यग्रे स्थितौ चापि स्वबलाक्रमणं भवेत्।
स्वभावेनान्यथा तत्र नैर्विकल्प्यं कथं भवेत् ॥ ४२७ ॥
महाक्रोधाद्यवस्थासु स्वबलोद्भूतिरुच्यते।
[3]"अतिक्रुद्धः प्रहृष्टो वे"त्युक्तं हि स्पन्दशासने ॥ ४२८ ॥
शान्तस्य मर्दनं यत् तत् स्वबलोद्भावनं विदुः।
देहस्य मर्दनं यस्माच्चितः प्रोन्मज्जनं स्मृतम् ॥ ४२९ ॥
मन्त्रादीनां प्रयोगश्च स्वबलाक्रमणं स्मृतम्।
[4]"तदाक्रम्य बलं मन्त्राः" इति तत्रैव भाषितम् ॥ ४३० ॥

बहुनाऽलं प्रपञ्चेन या क्रिया जगति स्थिता।
ज्ञानं वा तत्र सर्वत्र स्वबलाक्रमणं स्थितम् ॥ ४३१ ॥
प्रबुद्धा एव शक्ताः स्युरत्राभ्रष्टुं बलं तु तत्।
भुक्तखण्डो यदास्वादं लभते मृद्गतस्य तु ॥ ४३२ ॥

एतदेव बलं ब्रह्मगायत्र्या समुदीर्यते।
आत्मा हि सविता प्रोक्तो बलं भर्गः प्रकीर्तितम् ॥ ४३३ ॥
प्रेरकं ह्यात्मनो वीर्यं ज्ञाने कर्मणि न स्मृतम्।
[5]"यतः करणवर्गोऽयमि"त्युक्तं स्पन्दशासने ॥ ४३४ ॥
इति निश्चित्य तज्ज्ञाः स्युर्व्यवहारेऽपि तन्मयाः।
श्रीमन्त्रराजनिर्णीतवस्तुमात्रैकतत्पराः ॥ ४३५ ॥

समाधिकाले तत्रास्ति संशयः को नु तद्दृशा।
समाधिकालस्तन्मात्रमय एव हि नान्यथा ॥ ४३६ ॥

---

१. स्पन्दकारिका ३६। २. स्पन्दका० ३८। ३. स्पन्दका० २२। ४. स्पन्दका० २६।
५. यतः करणवर्गोऽयं विमूढो मूढवत् स्वयम्।
सहान्तरेण चक्रेण प्रवृत्तिस्थितिसंहृतीः ॥ —स्पन्दकारिका ६।

एषां काळद्वयं चैतद् यद्यप्येव समं स्थितम् ।
तथापि व्यवहारे ते शैथिल्येनैव संयुताः ॥ ४३७ ॥

शैथिल्यं नैव येषां स्याद् व्यवहारे बहिःस्थिते ।
सेकीकुर्वन्ति तेऽज्ञानं चित्तवृक्षस्य दुर्धियः ॥ ४३८ ॥

मूढानां व्यवहारैकनिष्ठानां त्वत्र निश्चितम् ।
स्वबलाक्रमणं सिद्धमपि नानुभवे स्थितम् ॥ ४३९ ॥

अन्यथा मूढता का स्यात् तेषां सा हि बुधैः स्मृता ।
सम्यग् ज्ञानस्य राहित्यं शिलान्यायेन न स्थितिः ॥ ४४० ॥

मूलं विज्ञाय तज्ज्ञास्तु व्यवहारमयत्नतः ।
प्रवाहेण गतं कुर्युर्न तु यत्नेन साधितम् ॥ ४४१ ॥

एवं परशिवाख्यं तत् पदमासाद्य धीबलात् ।
परमोत्कृष्टतां याता भवन्त्येव बुधाः स्फुटम् ॥ ४४२ ॥

यत्नमाश्रयतो(न्तो) नीचा अपि यान्त्येव सुस्फुटम् ।
परमोत्कृष्टतां सद्यस्तस्यौत्कृष्ट्ये तु का कथा ॥ ४४३ ॥

सर्वथा परमं तत्त्वं तदेवोत्कृष्टतां गतम् ।
सप्तत्रिंशतया प्रोक्तं शैवे शास्त्रेऽस्ति यत् स्फुटम् ॥ ४४४ ॥

सप्तत्रिंशः परशिवस्तत्त्वोत्तीर्णतया भवेत् ।
तत्त्वशब्दप्रयोगोऽत्रोपचारेणैव संस्थितम्(तः) ॥ ४४५ ॥

भूयस्तस्यैव चर्चेयं तन्यतेऽतिस्फुटं यतः ।
अतिरम्याद्धि विरतिर्वस्तुनो नैव युज्यते ॥ ४४६ ॥

उत्कृष्टं तत् परमिह ततो ग्राह्यमेवास्ति नातत्
तद्ग्राह्यत्वेऽपि च ननु बुधास्तद्ग्रहः स्यादयत्नम् ।
भङ्गा लब्धा यदि खलु तदा लब्धमेवास्ति यस्मात्
तोयं नान्यस्य जगति तथा भावभावे हि शक्तिः ॥ ४४७ ॥

एको भावोऽपि जगति तु तच्छक्तिभावेन भात-
श्चेद्भानं स्यादविकलमिदं तस्य तत्त्वस्य सद्यः ।
रूपेणैकेन हि यदि परं भासते वस्तु नान्यै-
र्गन्धाद्यैस्तत्किमिह भवेन्नो गृहीतः कदाचित् ॥ ४४८ ॥

शक्त्या लाभो भवति सहसा शक्ततत्त्वस्य कामं
शक्याच्छक्तेर्ग्रहमिह सदा पण्डिताः कीर्तयन्ति ।

शक्यं सर्वं भवति च परो भासमानार्थजातं
तद्वस्तुस्थः परशिव इहास्त्येव सर्वस्य नित्यम् ॥ ४४९ ॥

शक्यं शक्तेनं भवति पृथग्भावयोग्यं समस्तं
शक्तिः शाक्तान्न भवति तथा भिन्नरूपा शिवाच्च ।
भावा दृष्टा यदि खलु तदा दृष्टमेवास्ति देवो
देवी चेयं तदुभयगता द्वैतमेतच्च सद्यः ॥ ४५० ॥

दाहात् काष्ठाद् भवति सुगमा दाहकत्वं स्वशक्ति-
र्वह्नेर्यद्वद् भवति च तदेवास्य पुष्ट्यै च वाढम् ।
चेत्यं तद्वत् परशिव इहास्त्येव चिच्छक्तिलिङ्गं
पुष्टीभावं नयति न तथामुं परत्वं यतोऽस्य ॥ ४५१ ॥

दृष्टेः कौटिल्यत इह यथा दीपबिम्बात् प्रवृत्तं
रेखाचक्रं स्फुटमिव सदा दृश्यते सत्यमेव ।
तद्वत् सर्वं स्फुटमिव सदा दृश्यते शक्तिचक्रं
सर्वाकारे परमगहने शक्तिपिण्डे शिवेऽस्मिन् ॥ ४५२ ॥

पिण्डं वैतत् स्फुटमिह सदा केवलं सत्यभूतं
शक्तीनां स्यात् किमिव कलना शक्तिमत्साधनीयम् ।
अग्निः कः स्याद् वदत विबुधाः शक्तिपिण्डादमुष्माद्
भिन्नो दाहादिकक्षतिपराच्छक्यनिष्ठादजस्रम् ॥ ४५३ ॥

एको वा स्यात् परशिव इहैषास्ति वा शक्तिरेका
यद्वाऽद्वैतं भवति च तयोः सामरस्यैकरूपम् ।
दृष्टो यस्माज्जगति सकले बाह्यचर्याक्रमेषु
द्वन्द्वेष्वेतत् परपरमहास्वादजं सामरस्यम् ॥ ४५४ ॥

यद्वद् गुप्तो भवति सहजैः पिण्डभूतैर्वृतोऽयं
माणिक्याख्यो निजतनुगतै रत्नमुख्यो मयूखैः ।
तद्वद्देवः परशिव इहास्त्येव गुप्तः स्वरुच्या
स्वस्मिन् देहे ननु रतिजुषा शक्तिपिण्डेन नित्यम् ॥ ४५५ ॥

यच्चैतत् स्याज्जगदिह पुरोभातभावैकरूपं
प्रादुर्भूतिर्भवति तु ततो द्वन्द्वयोगादमुष्य ।
स्त्रीपुंसाभ्यां भवति हि महास्वादमूला प्रसूतिः
सन्तानानामिह कुलकरी काङ्क्षणीया सदैव ॥ ४५६ ॥

स्त्रीपुंसाभ्यां भवति च तथा तत्स्वरूपस्य भूति-
स्तद्द्वन्द्वस्यैव च न तु ततो भिन्नरूपस्य जातु ।
तद्वद् द्वन्द्वाद् भवति शिवयोस्तत्स्वरूपं जगत् तत्
केयं मूढैर्ननु परिगता द्वैतशङ्का वृथाऽत्र ॥ ४५७ ॥

बीजाद् बीजं भवति हि सदा नैव बीजादबीजं
जातं दृष्टं क्वचिदपि॰ कदाचिच्च केनापि नित्यम् ।
एकीभावात् परशिवमयात् सर्वमेतत् तथैव
जातं विश्वं परशिवमयं नान्यथा शङ्कनीयम् ॥ ४५८ ॥

प्रादुर्भूतिर्भवति ननु या द्वैतशङ्कासु बीजं
सा चाप्येषा स्वविषयवदेवास्ति तद्रूपभूता ।
तस्मात् तस्यैव तु कथमिवास्त्वेष तेनैव भेदो
युक्तः सोऽप्यस्तु च न तु भवेत् तत्स्वरूपाद्विभिन्नः ॥ ४५९ ॥

भिन्नोऽप्येवास्तु च स किमिहास्त्येव हानिर्हि भेदो
भिन्नोऽद्वैतं प्रथयतितरां नैव भेदं कदाचित् ।
धर्मो नान्यः स्थित इह कदाप्येव यत् स्वोपरागं
कर्तुं शक्तो भवति तु महायत्नतोऽन्यत्र जातु ॥ ४६० ॥

शिवः शक्तिः शक्यं त्रयमिदमहो भेदविषयः
कदाचिन्नैव स्याद् भवदपि चतुर्थं च खलु तम् ।
करोत्याप्त्वैवैतत् परपरपरत्वं ननु शिवे
स्वशक्त्या शक्येन स्फुटमथ च भेदेन नियतम् ॥ ४६१ ॥

परत्वं विश्रान्तं भवति न शिवे जातु न ततो
न भावानां छेदस्तदवधितया ख्यातवपुषाम् ।
तदेकां शक्तिं तत्प्रभवनकरीं वीक्ष्य विबुधैः
प्रयोज्यैकं तत्त्वं शिवपदगतं संस्थितमिह ॥ ४६२ ॥

परत्वं पूर्णत्वं यदि भवति तत्रापि नियमो
न योग्यः स्याद् यस्मात् सततमिह वृद्धिः प्रतिदिनम् ।
भवेद् भावैस्तैस्तैरथ च तदभावैर्ननु ततोऽ-
स्त्वियं शक्तिर्युक्तीकरणचतुराऽत्रापि नियतम् ॥ ४६३ ॥

अपूर्णं पूर्णं स्यादिति ननु कथा लोकविदिता
कथं तत्रारूढिं भजति गहनेऽनुत्तरपदे ।
भजन्ती दोषं कं भवति निपुणा कर्तुमिह यद्
न पूर्णत्वं चैतत् कृतपदमिवास्त्येव सततम् ॥ ४६४ ॥

शक्त्या युक्तीकृतं चैतच्छिवेनैव कृतं भवेत् ।
यच्छक्तितद्वतोर्भेदो युक्तो नैवास्ति जातुचित् ॥ ४६५ ॥

सर्वोत्कृष्टत्वमेतस्य शक्तत्वेनैव कल्प्यते ।
शक्त्या युक्तो हि लोकेऽस्मिन्नुत्कृष्ट इति कथ्यते ॥ ४६६ ॥

अन्येषां शक्तयो यास्ता अपि तस्यैव तत्त्वतः ।
तेषामुत्कृष्टताऽपीयं तस्यैवेति विनिश्चयः ॥ ४६७ ॥

स वा ते ते च वाऽप्येष इति का भेदकल्पना ।
तदाख्यमपि चैतन्नो युक्तं भेदावहं स्फुटम् ॥ ४६८ ॥

ऐक्यपक्षविनिष्ठ(निविष्ट)त्वं नापि युक्तं कदाचन ।
द्वितीयस्यापि पक्षस्यापातादपि प्रशाम्यताम् ॥ ४६९ ॥

यद् यथाऽस्ति तथैवास्तु तदित्येव विनिश्चयः ।
प्रशान्तिरपि जाड्येन यतो दुष्टाऽत्र दृश्यते ॥ ४७० ॥

जयतादितिशब्देन सर्वोत्कृष्टतया स्थितिः ।
योक्ता साऽत्र विनिर्णीता मया परशिवास्पदा ॥ ४७१ ॥

इति श्रीमदाराध्यतमाचार्यवर्य-श्रीगुरुवरराजानकभास्करकण्ठविरचिते चित्तानुबोधाख्ये महाशास्त्रे शास्त्रारम्भश्लोकस्थजयतादितिशब्दसूचितसर्वोत्कृष्टत्वनिर्णायकं पञ्चमं प्रकरणं सम्पूर्णम् । इति शिवम् ॥ ५ ॥

## षष्ठं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः ।
ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः ।
ॐ तद्द्वयसामरस्यरूपायै गुरुपादुकायै नमः ।
ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः ।

ॐ सर्वोत्कृष्टतया क्षिप्तो नमस्कारोऽत्र युज्यते ।
नान्यत्रात्र कृतस्त्वेष पशुत्वस्य प्रकाशकः ॥ १ ॥

लोभादिना कृतस्त्वेष बाह्येऽथ परमेश्वरे ।
कौटिल्यमथ दीनत्वं कर्तुर्व्यञ्जयति स्फुटम् ॥ २ ॥

यथोचिताचारकृतो दोषदो नैव स स्मृतः ।
यथोचिताचारनिष्ठा सद्भिः पूर्वतरैः स्तुता ॥ ३ ॥

गुर्वादौ वा तु भक्त्या स्याद् या नमस्कृतिभावना ।
अयुक्तत्वं न तस्याः स्यादनौचित्येऽपि संस्थिते ॥ ४ ॥

लोभान्मौढ्येन हास्याद् वा या नमस्कृतिभावना ।
अनौचित्येन राजादौ दूषिता सा सदा बुधैः ॥ ५ ॥

सर्वं ब्रह्मेति सर्वत्र श्रुत्वैव नतिकृत् तु यः ।
तस्य सिद्धि न यात्येव सा कदाचिदिति स्थितिः ॥ ६ ॥

देहनिष्ठस्य सर्वत्र नमस्कारो न युज्यते ।
युक्तायुक्ततया युक्ते जन्तुजाते कदाचन ॥ ७ ॥

स्मृत्याचारस्य हानिर्हि स्फुटं तेनास्य जायते ।
स्मृतिप्रमाणतस्तस्मान्नमस्कारोद्यतो भवेत् ॥ ८ ॥

अन्यथा दोष एव स्याद्धास्यं वापि सुदुःसहम् ।
स्मृतौ तन्निल(र्ण)योऽस्त्येव विस्तरेण कृतो बुधैः ॥ ९ ॥

सर्वं ब्रह्मेति मत्वा यो सर्वं ब्रह्मतया मतम् ।
यथोचिताचारमयैर्नमस्कारैः प्रपूजयेत् ॥ १० ॥

स ज्ञानी स सुखी नान्यः स्वाचारोल्लङ्घने रतः ।
एतत् पूर्वं विनिर्णीतमिति नायस्यते पुनः ॥ ११ ॥

यस्त्वावेशस्य समये यत्र कुत्रापि भावितः।
नमस्कारः स शस्तः स्यादावेशो नहि दोषदृक् ॥ १२ ॥

आवेशः सर्वदा नैव सम्भवी किन्त्वसौ क्षणम्।
स्फुरेत् समाधिकाले तु केषाञ्चित्त्वेव कर्हिचित् ॥ १३ ॥

तत्रापि प्रौढिभाजो ये तस्मिन् कालेऽपि ते भृशम्।
यथोचिताचारपरा न तु स्युर्विवशाः स्थिताः ॥ १४ ॥

सर्वदा विवशत्वं यदुन्मत्तेषु तु दृश्यते।
तदावेशासहत्वं स्यान्न काष्ठा परमा तु सा ॥ १५ ॥

य आवेशं समुद्यन्तं संस्तभ्य स्वयमात्मना।
तिष्ठते वाऽन्यजनवत् स पूर्णत्वस्य भाजनम् ॥ १६ ॥

यथोचिताचारपरा एव नो विवशाः स्थिताः।
शिवभावेन पश्यन्ति जगन्मौनमुपाश्रिताः ॥ १७ ॥

प्रवाहेनागतं सर्वं कुर्वन्ति न च वा ततः।
कस्तेषु नियमोऽप्येव नमस्कारपदो भवेत् ॥ १८ ॥

नमस्काराद् गतास्ते हि भेदहानेरसंशयम्।
स्वयमेव नमस्कार्या भवेयुर्नात्र संशयः ॥ १९ ॥

विश्रान्तानां नमस्कारे यत्नो न युज्यते यतः।
शिवस्तेभ्यो नमस्कारं स्वयं साक्षात् करोति हि ॥ २० ॥

अनुपाये परे तत्त्वे ते स्थिताः कृतबुद्धयः।
उपायोऽयं नमस्काररूपः कस्तेषु प्रोच्यताम् ॥ २१ ॥

नमस्कार्यो नमस्कारो नमस्कर्तेति संस्थिता।
त्रिपुटीयं त्वेकतया तेषां भाति महात्मनाम् ॥ २२ ॥

सिद्धः कोऽपि नमस्कारस्तेषां दृष्ट्या स्थितोऽस्ति वा।
करणं नैव यस्यास्ति स्वयंसिद्धतया स्थितेः ॥ २३ ॥

नमस्कर्तापि नो कश्चित् तत्र सम्भवति स्फुटम्।
नमस्कारः स एवात्र यस्मात् तद्भावतः स्थितेः ॥ २४ ॥

य एव स्यान्नमस्कारो नमस्कार्योऽपि यो भवेत्।
नमस्कर्ताऽपि योऽस्त्यत्र स शिवः परमो मतः ॥ २५ ॥

कः कं नमस्करोत्यत्राद्वैते सत्यस्वरूपिणि।
अनुपाय उपायानां न स्थितिः पण्डितैर्मता ॥ २६ ॥

उपायानां सिद्धिदेऽत्र कोपायानां प्रकल्पना।
पितृपादेऽपि पुत्रोऽत्र जनोऽन्वेष्यत्यहो भ्रमः॥ २७॥

स्वयंसिद्धे नमस्कारो नमस्कारः स्मृतो बुधैः।
कृतो यस्तु नमस्कारः स नो स इति मन्यताम्॥ २८॥

अनुपायेऽनुपायोऽयं नमस्कारोऽस्ति शोभनः।
अहमामर्शनं रूपं प्रोक्तं तस्य पुरातनैः॥ २९॥

अहंपरामर्श एषोऽहमित्येवंस्वभावकः।
स्वरूपाव्यभिचार्यस्य शिवस्य परमात्मनः॥ ३०॥

सोऽयं शिवः स्वमेवैवं स्तौत्युत्कृष्टं स्वभावतः।
स्तोतीति कथनं वास्ति न युक्तं परमार्थतः॥ ३१॥

सिद्धे हि साध्यता दोष एवायाति विशेषतः।
अनेनेति गतिर्नात्र विद्यते करवाम किम्॥ ३२॥

यथा शिवः स्वयंसिद्धो नमस्कारोऽपि वै तथा।
तस्य सिद्धौ न काऽप्यत्र साध्यता युज्यते स्फुटम्॥ ३३॥

कारशब्दोऽत्र लोकस्य प्रसिद्ध्याऽस्ति तु योजितः।
नमःशब्दः केवलोऽयमत्र युक्तिसहः स्मृतः॥ ३४॥

रूढिमाश्रित्य सोऽप्यस्तु सा हि सर्वंसहा स्मृता।
नमःशब्दोऽपि योगेन नात्र युक्तो यतो भवेत्॥ ३५॥

नमो हि लीनता साऽत्र न युक्ता परमार्थतः।
उद्घुरीकार एवाहमिति स्वस्य न लीनता॥ ३६॥

उत्कर्षं नैव शक्येषु नमःशब्दो यतः स्फुटम्।
तद् रूढ्याऽस्यापि युक्तत्वं न योगेन कदाचन॥ ३७॥

स्वोत्कर्षार्थं जनः सर्वो नमस्कारपरायणः।
महादेवे परशिवे तद्रूढिरत्र शोभना॥ ३८॥

लीनता लीयमानस्य लयाधारः शिवः स्फुटम्।
उत्कर्षयेत् तमिति चेत् सत्यं नात्र तथा स्थितिः॥ ३९॥

योऽयं परशिवं नौति स स एव निरन्तरम्।
लयस्य तु कथा काऽत्र तस्मिस्तस्य लयः कथम्॥ ४०॥

शिवोऽहमिति यन्नौति स्वमेव तत्र का कथा।
लयस्येति कृतं भेदद्योतकैर्लयनिर्णयैः॥ ४१॥

तस्माद् रूढ्या प्रयुक्तोऽयं नमस्कारोऽत्र युज्यते ।
महोत्कर्षमयं प्राह न प्रह्वीभावमित्यलम् ॥ ४२ ॥

अहमामर्शरूपोऽपि महोत्कर्षपरायणः ।
मुख्यस्य फलभूतोऽस्ति घृतस्यायुष्ट्ववत् स्फुटम् ॥ ४३ ॥

उच्चारो नात्र कोऽप्यस्ति करणाभावतः स्फुटम् ।
इत्यनाहतसंज्ञोऽयं पण्डितैः समुदाहृतः ॥ ४४ ॥

आन्तरी स्तुतिरेषैव महामन्त्रोऽयमीरितः ।
एतयोर्वीर्यमथवा सैष प्रोक्तः पुरातनैः ॥ ४५ ॥

[1]"आदिमान्त्यविहीनास्तु मन्त्राः स्युः शरदभ्रवत्" ।
इत्युक्तं हि महातन्त्रे तन्त्रालोकेऽस्ति दैशिकैः ॥ ४६ ॥

अकार आदिभूतोऽत्र वर्णानां सन्ततौ स्फुटम् ।
हकारस्त्वन्त्यभूतोऽथ प्राधान्यमुभयोः स्मृतम् ॥ ४७ ॥

अकार आदिभूतोऽस्ति हकारोऽन्त्योऽहमि स्मृतः ।
स्वप्रत्ययस्वरूपं त्वमिति संस्कारसिद्धये ॥ ४८ ॥

अमित्यत्राथवान्तेऽस्यानुत्तरो बिन्दुसंयुतः ।
सम्पुटीकृतिरेषाऽस्य सर्वत्रैव हि संस्मृता ॥ ४९ ॥

प्रत्याहारस्वरूपं तदहमित्येतदीरितम् ।
सर्वे वर्णा मध्यगाः स्युरत्रेति खलु निश्चयः ॥ ५० ॥

मन्त्रवीर्यत्वमस्योक्तमिति पूर्वैर्महात्मभिः ।
मन्त्रा वर्णैः समारब्धा भवन्त्येव यतः स्फुटम् ॥ ५१ ॥

अकारोऽनुत्तरं वस्तु वक्ति संकेतितत्वतः ।
हकारोऽयं विसर्गत्वाच्छक्तिवाचक इष्यते ॥ ५२ ॥

शिवशक्तिसमायोगात् सोऽयं परशिवात्मकः ।
शब्दो भात्येवाहमिति स्वान्तःकृतजगद्गणः ॥ ५३ ॥

प्रत्याहारः शब्दशास्त्रे सर्वान् वर्णानशेषतः ।
स्फुटं स्वान्तःकरोत्येव नात्र कापि विकल्पना ॥ ५४ ॥

वाच्यवाचकभावाभ्यां शब्दोऽयं पररूपभृत् ।
सर्वमन्त्रेषु वीर्यं स्यात् सर्वसारतया स्थितः ॥ ५५ ॥

अस्मच्छब्दप्रयोगत्वेऽप्यस्य श्रेष्ठतया स्थितिः ।
स हि संकेतितः पूर्वैः कुत्राप्यान्तरवस्तुनि ॥ ५६ ॥

---

१. तन्त्रालोकः ४।१९३ ।

अलं शब्दार्थचिन्ताभिरथवाऽयं कृतस्थितिः ।
अहंशब्दस्तु विश्रान्तौ स्वात्ममात्रे यतः स्थितः ॥ ५७ ॥
परोऽयं तु नमस्कारोऽहमामर्शस्वरूपकः ।
स्वयंसिद्धे परशिवे स्वयंसिद्धः स्थितोऽस्ति तत् ॥ ५८ ॥
अत्रारूढो महायोगी स्वयं परशिवः स्थितः ।
कं नमेन्नमयेत् कं न परोत्कर्षेण संयुतः ॥ ५९ ॥
अहमामर्शरूपोऽयं महाव्याप्तिस्वरूपकः ।
नमस्कारो बुधैः प्रोक्तः परोत्कर्षप(प्र)दः सदा ॥ ६० ॥
नात्र यत्नस्तु कोऽप्यस्ति स्वयंसिद्धतया स्थिते ।
महाव्याप्तेर्हि साध्यत्वं न युक्तं न च संभवि ॥ ६१ ॥
सोऽयं शिवः स्वमेवैतन्नौति का तत्र साध्यता ।
नमनं वाऽपि किं तत्र पूर्णाद्वैते परात्परे ॥ ६२ ॥
अवधानं परं युक्तमत्र प्राहुर्मनीषिणः ।
यत्नपक्षे न तत् प्रोक्तं महाविश्रान्तिभावतः ॥ ६३ ॥
अवधानं च नात्रास्ति युक्तं पूर्णतया स्थिते ।
अपूर्णो ह्यस्य विषयः साध्यत्वेन स्फुरद्वपुः ॥ ६४ ॥
अनुपायदशा सेयं स्वभावेन स्फुरद्वपुः ।
स्थिता सर्वस्य हृद्देशेऽहमामर्शस्वरूपिणि ॥ ६५ ॥
तदधोवर्तिनो ये तु शाम्भवोपायनिश्चिताः ।
निर्विकल्पस्थितिस्तैश्च नमस्कारतया श्रिता ॥ ६६ ॥
[1]"न किञ्चिच्चिन्तनं ह्यत्र स्फुरत्येव मनीषिणाम् ।
महाविस्मृतिसामर्थ्यादि"त्यूचुर्गुरवः स्वयम् ॥ ६७ ॥
अत्रापि न लयोऽस्त्येव नमःशब्देन सूचितः ।
लयो हि शून्यभावोऽस्ति चिन्मात्रे तस्य का कथा ॥ ६८ ॥
विकल्परहिता सेयं स्थितिः सद्भिः प्रकीर्तिता ।
द्वारभूताऽनुपायस्य साक्षान्न व्यवधानतः ॥ ६९ ॥
नैतया त्वनुपायत्वहानिः परशिवे भवेत् ।
न हि तस्यैव तत्रैवोपायता युज्यते स्फुटम् ॥ ७० ॥
केवलं शक्तिप्राकट्यमात्रमत्र विशिष्यते ।
एतावता तु सिद्धस्य का साध्यत्वप्रकल्पना ॥ ७१ ॥

१. मालिनीविजये पाठान्तरेण प्राप्यते ।

नैर्विकल्प्यदशायां च परमार्थेन विद्यते ।
अहमामर्शनं किन्त्वनादृतेर्नास्ति भावभाक् ॥ ७२ ॥

आदृतं तु तदेवास्य शिवस्य चितिरूपिणः ।
परत्वं प्रकटीकुर्वन् प्रोद्भूत इति कथ्यते ॥ ७३ ॥

सेयं परशिवावस्थाऽनुपाया सर्वदा स्थिता ।
उपायः कल्प्यमानोऽपि तस्माद् यन्न पृथक्त्वभाक् ॥ ७४ ॥

उपायत्वं च कः कुत्र भजेदत्र महाद्वये ।
भजन् वाऽपि महाद्वैते पूर्णतामेव भावयेत् ॥ ७५ ॥

उपायः कल्प्यमानोऽयं चित्त्वे साक्षाच्छिवः स्थितः ।
अचित्त्वे तस्य का शक्तिस्तत्स्वरूपप्रकाशने ॥ ७६ ॥

किं घटे न विभात्येष सूर्यः सर्वप्रकाशकः ।
तद्दीप्तिर्भासमानाऽत्र स्वाधारं वक्ति भासकम् ॥ ७७ ॥

अवस्थितिः पूर्णतयाऽहमेवेति परात्परा ।
अनुपायस्थितिर्ज्ञेया स्वयंसिद्धा शिवात्मिका ॥ ७८ ॥

स्थितिश्चिन्मात्रभावेन निर्विकल्पतया भवेत् ।
शाम्भवोपायसम्प्राप्तिः पूर्वद्वारतया स्थिता ॥ ७९ ॥

नमस्कारोऽद्वयेऽत्रास्ति पूर्णताभावनात्मकः ।
पूर्णतौन्मुख्यमात्रं च क्रमेणैव बुधैः स्मृतः ॥ ८० ॥

नहि कस्यापि कुत्रापि नमनं तत्र संस्थितम् ।
बाह्यरीत्या प्रयुक्तं च विश्रान्तं तत्र नान्यतः ॥ ८१ ॥

द्वितीयः प्रथमस्यात्रोपायः संपरिकीर्तितः ।
प्रथमो नैव कस्यापि परोपेयतया स्थितः ॥ ८२ ॥

द्वयस्यास्य परत्वं स्यादमनोगोचरत्वतः ।
मनोगोचरभावे हि शक्तत्वं तस्य कथ्यते ॥ ८३ ॥

मनसा नास्मिभावस्य भावना या सदा स्थिता ।
सेयं मानसिका(की) शाक्तोपायसंज्ञा नमस्कृतिः ॥ ८४ ॥

शून्यभावो न भावार्हो भावनाऽपि च वाऽत्र या ।
साऽपि नो सम्भवत्येव वस्तुतः कल्पितत्वतः ॥ ८५ ॥

मानसोऽयं नमस्कारः प्रह्वीभावस्वरूपकः ।
मुख्यवृत्त्या स एवेह नमस्कारो हि कीर्तितः ॥ ८६ ॥

"शाक्तोपायस्वरूपोऽयं नमस्कारो लयात्मकः ।
शाम्भवोपायहेतुः स्यादि"त्युक्तं गुरुभिः स्वयम् ॥ ८७ ॥

शून्यभावे प्राप्तनिष्ठा(ष्ठो) यश्चिन्मात्रत्वभाजनम् ।
शून्यभावश्च प्रोक्तोऽयं कल्पनामात्ररूपकः ॥ ८८ ॥

प्रह्वीभावो लयरूपो मातुरत्र भवेत् स्वयम् ।
परिपाके समाधेस्त्वभावाख्यस्यास्य निश्चितम् ॥ ८९ ॥

पुर्यष्टकलयो योऽत्र साष्टाङ्गप्रणतिः स्मृताः ।
साष्टाङ्गभावितः सोऽयं नमस्कारः प्रकीर्तितः ॥ ९० ॥

अत्र ये लीनतां याताश्चिद्भावे योग्यतां गताः ।
ते भवन्त्येव संसारे स्थिता अपि नरोत्तमाः ॥ ९१ ॥

वाचा कृतो नमस्कारः स्तुतिरेव प्रकीर्तिता ।
बहुप्रकारा सेयं स्यात् साग्र एव भविष्यति ॥ ९२ ॥

बाह्वादिभिः कृतस्त्वेष कायिकः समुदाहृतः ।
आणवोपायभावोऽस्ति द्वयस्यास्य स्मृतो बुधैः ॥ ९३ ॥

षडङ्गोऽयं नमस्कारः कायिकः परिकीर्तितः ।
पाणिभ्यां जानुभ्यां चैव शिरसाऽथोरसा तथा ॥ ९४ ॥

द्वयमेतत्तु हेतुः स्याच्छाक्ते सद्भिरुदीरितः ।
एतन्निष्ठो हि योग्यः स्याद् देहादेर्लयभावने ॥ ९५ ॥

द्वयेऽप्यत्र नमस्कारे नमस्कारो विशेषतः ।
नमस्कर्त्रा कृतं प्रोक्तो नमनं न तु लीनता ॥ ९६ ॥

एवं चतुर्विधोऽप्येष यथायोगं व्यवस्थितः ।
नमस्कारः परशिवं विषयीकुरुते स्फुटम् ॥ ९७ ॥

नमस्कारः कृतोऽन्यत्र शिवस्यैव कृतो भवेत् ।
तं विना नहि कोऽप्यस्ति जगत्यत्र चराचरे ॥ ९८ ॥

ज्ञानी साक्षात् तत्र रतो ज्ञानहीनस्तु मध्यतः ।
किञ्चित्कृत्वाऽन्यथा तस्य मूढत्वं किम्मयं भवेत् ॥ ९९ ॥

अहमामर्शनिष्ठत्वं परमा नतिरुच्यते ।
निर्विकल्पा स्थितिः सूक्ष्मा प्रोच्यते परमैर्बुधैः ॥ १०० ॥

शून्यताभावनं स्वस्य मध्यमा नतिरुच्यते ।
स्तुतिर्मूर्ध्नो नतिश्चैव स्थूला सा परिकीर्तिता ॥ १०१ ॥

स्थूलान्मध्यं समाश्रित्य सूक्ष्मे स्थित्वा क्षणं ततः।
विश्रान्तिः परमे कार्या नमस्कारे सदा बुधैः ॥ १०२ ॥

पूर्वस्यासम्भवे तज्ज्ञ उत्तरं ग्राह्यतां नयेत्।
सम्भवेनोत्तरस्यात्र ग्राह्यता नियता स्थिता ॥ १०३ ॥

स्थूलस्यादिप्रभेदे तु शिलादिर्विषयो मतः।
द्वितीये कल्पितः कोऽपि विकल्पेन पदं स्मृतम् ॥ १०४ ॥

मध्यमे शून्यमाताख्यं विषयः परिकीर्तितः।
लयो हि शून्य एवास्ति योग्यो नान्यत्र कर्हिचित् ॥ १०५ ॥

देहादिकं देवबुद्धया गृह्णात्येत्र न कश्चन।
तत्स्थाने कल्पिताऽनेन प्रतिमैवेत्यलं बहु ॥ १०६ ॥

चिदात्मा विषयः प्रोक्तः सूक्ष्मस्य तु बुधैः स्फुटम्।
निर्विकल्पस्थितिस्तत्र युज्यते हि स्वभावतः ॥ १०७ ॥

परमात्मा परशिवो विषयस्तु परे स्थितः।
स्वात्मानमपहायान्यो नमस्कारो न जातु यत् ॥ १०८ ॥

य आत्मानं विहायैव देवेऽन्यत्र रता नराः।
ते हस्तस्थं मणिं त्यक्त्वा काचान्वेषणतत्पराः ॥ १०९ ॥

अन्यो देवः कल्पनातः परं सिद्धयति नान्यतः।
[1]"स्वातन्त्र्यामुक्तमात्मानं स्वातन्त्र्याददृयात्मनः ॥ ११० ॥

प्रभुरीशादिसंकल्पैर्निर्माय व्यवहारयेत्"।
इत्युक्तं प्रत्यभिज्ञायां यतोऽस्त्युत्पलदेशिकैः ॥ १११ ॥

तन्त्रालोकेऽपि संप्रोक्तमेवमेवास्ति तत्त्वतः।
[2]"शिवश्चालुप्तविभवस्तथा सृष्टोऽवभासते ॥ ११२ ॥

स्वसंविन्मात्रमुकुरे स्वातन्त्र्याद् भावनादिषु"।
इत्येवं तद्भावनातो बाह्या सिद्धयति देवता ॥ ११३ ॥

अन्यो देवोऽपि यः कश्चित् कल्प्यते सोऽपि चेतनः।
कार्यं एव जडे युक्ता नहि देवत्वभावना ॥ ११४ ॥

स तथा कल्प्यमानः किमयमेव न कल्प्यते।
कल्पना सर्वविषया बुधैर्यस्मात् प्रकीर्तिता ॥ ११५ ॥

---

१. ई० प्र० भि० १।५।१६। २. तन्त्रालोकः १।७३

चित्ताऽस्य स्वयमेवास्ति देवत्वं केवलं स्थितम् ।
कल्पनायाः पदं तच्चास्यास्ति युक्ततया स्थितम् ॥ ११६ ॥

देवो हि क्रीडकः प्रोक्तः स्वात्माऽसौ क्रीडकः परम् ।
नानाविधैर्विकल्पैर्विक्रीडत्येष पुरः स्थितः ॥ ११७ ॥

बाह्यं जगच्च लीलाऽस्य तज्ज्ञदृष्ट्याऽस्ति तत्त्वतः ।
अज्ञास्त्वत्र न विश्वासं भजन्त्येव कदाचन ॥ ११८ ॥

मा भजन्तु तथाऽप्येषामात्मा देवतया स्थितः ।
नैनं विना हि कोऽप्येषां भाति श्रेष्ठतया भृशम् ॥ ११९ ॥

अज्ञा अपि स्वमात्मानं सोत्कर्षं जानते खलु ।
सोत्कर्षस्यैव देवत्वं युक्तं नान्यस्य जातुचित् ॥ १२० ॥

अन्यस्मिन् कल्प्यमाने तु द्वयं कल्प्यं विशेषतः ।
चैतन्यं देवभावस्य कोऽयं देवः प्रकल्पितः ॥ १२१ ॥

अतिस्नेहवशेनेयं या त्वनादृतिरात्मनि ।
केवलं सा परित्याज्या देवत्वं तत्र सिद्धिभाक् ॥ १२२ ॥

[1]"त्वमेवात्मेश सर्वस्य सर्वश्चात्मनि रागवान् ।
इति स्वभावसिद्धां त्वद्भक्तिं जानन् जयेज्जनः" ॥ १२३ ॥

श्रीमदुत्पलदेवेनेत्युक्तमस्ति निजे स्तवे ।
आत्मैव सर्वजन्तूनां देव इत्येव निश्चयः ॥ १२४ ॥

इत्यात्मपूजा सर्वासां पूजानां प्रथमा स्थिता ।
तां विना ता हि सर्वाः स्युर्निष्फला शरदभ्रवत् ॥ १२५ ॥

तत्रात्मपूजामात्रेण तज्ज्ञाः स्युः कृतिनः स्थिताः ।
मूढानां तत्र नास्था स्यादिति बाह्या प्रकल्पिता ॥ १२६ ॥

काले तत्रापि ते योग्या भवेयुरन्यथा तु सा ।
व्यर्थैव लगुडैर्व्योमताडनस्य सहोदरी ॥ १२७ ॥

आत्मपूजाविधौ हस्तक्षालनं देहदोषतः ।
समालभनलेपार्थं वेति निश्चित्य शाम्यताम् ॥ १२८ ॥

निर्माल्यस्यापि यत्स्पर्शः शिवस्य दूषितो बुधैः ।
ततोऽपि क्षालनं यद्वा पवित्रत्वाधिकत्वतः ॥ १२९ ॥

स्वात्मैव देवोऽस्ति परं का पूजा तस्य भेदतः ।
जीवा दानं स्वात्मभिन्नदेवताभावनं विदुः ॥ १३० ॥

---

१. शिवस्तोत्रावली १।७ ।

आवाहनं च तस्यात्र पीठे स्थापनभावनम् ।
विसर्जनं पुनः स्वात्मभावेनामर्शनं हृदि ॥ १३१ ॥

परमार्थेन देवाप्तिरिच्छामात्रस्वरूपिणि ।
[1]"अयमेवोदयस्तस्य घे(ध्ये)यस्य ध्यायिचेतसि ॥ १३२ ॥

तदात्मतासमापत्तिरिच्छतः साधकस्य या" ।
इत्येवं स्पन्दशास्त्रे हि वसुगुप्तेन भाषितम् ॥ १३३ ॥

गुरोरपि नमस्कारः कार्यं एव न संशयः ।
देवत्वं स्वात्मनो यस्मात् तस्मादेव श्रुतिं गतम् ॥ १३४ ॥

शिलादौ देवभावं ये कुर्वते मूढभावतः ।
कुर्वन्त्येव हि तत्रापि शिवः स्वेनैव संस्थितः ॥ १३५ ॥

चित्तशोधनकार्यत्वात् तेषां सा देवभावना ।
काले तत्रैव संयाति निष्ठिति का क्षतिस्ततः ॥ १३६ ॥

शिलायां श्रद्दधात्येव देवत्वं यस्तु भक्तिमान् ।
श्रद्धातुं नात्मनि स किं उद्युक्तः स्यान्महाशयः ॥ १३७ ॥

श्रद्दधाति न चेत् सोऽयं स्वात्मनैव हतो जडः ।
शिलापूजनमेवास्य युक्तं हीनतया ततः ॥ १३८ ॥

शिलापूजनमेतच्च काष्ठाश्वारोहणोपमम् ।
काष्ठाश्वे स्थैर्यमायातः सहजे योग्यतां वहेत् ॥ १३९ ॥

घृतं कुङ्कुमगन्धं तु व्यनक्त्याऽऽवासितं यथा ।
शिलाऽपि देवभावेन भावितैनं तथा स्फुटम् ॥ १४० ॥

बालाभिः पुत्रिका यद्वदपत्यत्वेन कल्प्यते ।
विनोदार्थं तथा मूढैः शिलादिर्देवभावतः ॥ १४१ ॥

कार्यमेव शिलादीनां पूजनं भक्तिशालिभिः ।
संस्कारे स्थैर्यमायाते महालाभो भविष्यति ॥ १४२ ॥

[2]"कृत्रिमाऽपि भवद्भक्तिरकृत्रिमफलप्रदा ।
निश्छद्मा चेद् भवेत् सैषा किंफलेति त्वयोच्यताम्" ॥ १४३ ॥

भट्टनारायणेनैवं शिलापूजा समर्थिता ।
कार्यत्वेनेति नैवात्र हानिः कापि बुधैः स्मृता ॥ १४४ ॥

---

१. स्पन्दकारिका ३१ । २. स्तवचिन्तामणिः १०८ ।

लोकसंग्रहणार्थं तु महद्भिरपि कल्पिता ।
शिलापूजान्तरेष्वात्मपूजामात्ररतैः सदा ॥ १४५ ॥

शिलापूजां तु ये दम्भात् कुर्वते मूढभावतः ।
श्वभ्राच्छ्वभ्रान्तरं यातानुद्धरेत् तान् क उत्तमः ॥ १४६ ॥

भक्तिमात्रेण ये तत्र लग्ना अज्ञानवैभवात् ।
तेषामुद्धरणे यत्नः कार्य एव महात्मभिः ॥ १४७ ॥

प्रवृत्तिरप्रवृत्तिर्वा ज्ञानिनामन्यथा स्थिता ।
इतरेषां प्रवृत्तिस्तु युक्ताऽत्रेत्येव संग्रहः ॥ १४८ ॥

पूजा च पूर्वमेवोक्ता पुनर्नायस्यते वहु ।
जपस्य लक्षणं ब्रूमो नैर्विकल्प्यं यतो भवेत् ॥ १४९ ॥

[1]"कथैव जप" इत्येवं शिवसूत्रानुसारतः ।
कथामात्रस्य जपता महातज्ज्ञेषु संस्थिता ॥ १५० ॥

निर्विकल्पा स्थितिः प्रोक्ता जपस्तज्ज्ञेषु पण्डितैः ।
मन्त्रार्थस्य परामर्शो मध्यमेषु च संस्मृतः ॥ १५१ ॥

मन्त्रोच्चारस्तु सम्प्रोक्तो जपः स्थूलमतीन् प्रति ।
ते हि तत्र रताः काले तत्पदं प्राप्नुवन्ति हि ॥ १५२ ॥

अक्षमाला च निर्णीता पूर्वमेव विशेषतः ।
प्राणसूत्रविचारे तु ब्रह्मग्रन्थियुता स्फुटम् ॥ १५३ ॥

यज्ञोपवीतं देहस्य प्रतिबिम्बतया कृतम् ।
षण्णवत्यङ्गुलं तद्धि त्रिगुणत्वे द्विधा भवेत् ॥ १५४ ॥

देहस्यापि प्रमाणं तद् द्वादशान्तं बहिः स्थिते ।
ब्रह्मग्रन्थिः शिखाग्रन्थिः प्राणग्रन्थिस्वरूपिणी ॥ १५५ ॥

त्रिवृतो यत् त्रिवृत्त्वं तन्नाडीनां प्रविभाजनम् ।
एकस्या अपि नाड्या यत् त्रिधात्वं समवस्थितम् ॥ १५६ ॥

मध्यनाड्यास्त्रिधा भागे कृते तन्मध्यभागतः ।
परं तत्त्वं विभात्येवातिशुद्धं परमार्थतः ॥ १५७ ॥

[2]"मध्यनाडीमध्यसंस्थविससूत्राभरूपया ।
ध्यातान्तर्व्योमया देव्या तया देवः प्रकाशते" ॥ १५८ ॥

---

१. "कथा जपः"—शिवसूत्र ३।२७ । २. विज्ञानभैरवः ३५ ।

इत्युक्तं परमेशेन शिवोपनिषदि स्वयम् ।
मध्यमध्ये तु विश्रान्तो महातत्त्वं विशेद् बुधः ॥ १५९ ॥

ध्यानस्य लक्षणं ब्रूमः प्रसङ्गेन समागतम् ।
नीलादीनां परामर्शो ध्यानं तज्ज्ञेषु संस्थितम् ॥ १६० ॥

नैर्विकल्प्यं मध्यमेषु ध्यानं प्रोक्तं पुरातनैः ।
विज्ञानभैरवेऽप्येवं संप्रोक्तं विभुना स्वयम् ॥ १६१ ॥
[1]"ध्यानं या निश्चला चिन्ता निराकारा निराश्रया ।
न तु ध्यानं शरीरादिमुखहस्तादिकल्पना" ॥ १६२ ॥

कल्पिताऽऽकारचिन्ता तु ध्यानं मूढेषु कल्पितम् ।
तत्रैकनिष्ठास्तेऽप्यत्र योग्या स्युरिति निश्चयात् ॥ १६३ ॥

यागस्य निर्णयं ब्रूमो विभागेन प्रसङ्गतः ।
हानादाने महायागः प्रोक्तस्तज्ज्ञेषु पण्डितैः ॥ १६४ ॥

विश्वस्य दाहो बोधाग्नौ मध्यमेषु प्रकीर्तितः ।
यागः श्रेष्ठतया तन्त्रालोके प्रोक्तं तथैव हि ॥ १६५ ॥
[2]"निजबोधहुतभुग्जठरे भावाः सर्वे समर्पिता हठतः ।
विजहति भेदविभागं निजशक्त्या तं समिन्धानाः" ॥ १६६ ॥

बाह्याग्नौ द्रव्यहानं यद् देवतोद्देशतो भवेत् ।
सोऽयं मूढेषु यागोऽस्ति बाह्यत्यागमयः स्फुटम् ॥ १६७ ॥

एवं कृतस्तु यागोऽयं महायागेऽपि योग्यताम् ।
सम्पादयति जन्तूनां त्यागो हि सर्वथा शिवम् ॥ १६८ ॥

ब्राह्मी दीक्षा हि पूर्वं या ब्राह्मणत्वविधायिनी ।
क्रियते तत्र होमोऽयं त्यागरूपो विधीयते ॥ १६९ ॥

त्यागेऽनादृतिमानीतो मन्त्रोऽपि फलदो भवेत् ।
अन्यथा तत्र का भक्तिर्मूढानामुपजायते ॥ १७० ॥

त्यागानन्तरमेवासौ गायत्र्याख्यो महार्थयुक् ।
मन्त्र आदृतिविषयः सत्फलं सम्प्रयच्छति ॥ १७१ ॥

योऽग्नौ द्रव्यस्य दाहेऽपि प्रवृत्तो भक्तिमात्रतः ।
तस्मिन् द्रव्येऽस्य काऽऽस्था स्यादास्थैव बन्धनं स्मृतम् ॥ १७२ ॥

---

१. विज्ञानभैरवः १४३ । २. तन्त्रालोकः ३।२६२ ।

योऽन्यस्मै तस्य दानं तु प्रशंसति ततः पुमान् ।
स लोभग्रस्तो न स्पृश्यो लोभो हि दुःखदः स्मृतः ॥ १७३ ॥

यज्ञे सर्वे गुणाः सन्ति देवानां तृप्तिरुत्तमा ।
शास्त्रे प्रोक्ता तथा त्यागो वहुधा तु विधानतः ॥ १७४ ॥

अग्नौ क्षेपस्तथा दानं विप्रेभ्यो भोजनं बहु ।
अनाथानां तथेष्टानां ब्राह्मणानां विशेषतः ॥ १७५ ॥

शक्तौ सत्यां तु यज्ञस्य करणं श्रेष्ठमुच्यते ।
न सांचा(सा)रिकचर्चासु द्रव्यक्षेपः प्रशस्यते ॥ १७६ ॥

तदभावे तु नैवास्ति दोषोऽस्याकरणादिह ।
तथापि लेशतः कार्यमिति शास्त्रार्थनिश्चयः ॥ १७७ ॥

[1]"अग्नौ दत्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" ॥ १७८ ॥

इति वेदेषु होमस्य प्रभावः परिकीर्तितः ।
शान्तेषु नियमो नायं वाह्यहोमस्य विद्यते ॥ १७९ ॥

सांसारिकं द्रव्यजातमग्नौ दाह्यं हि दोषदम् ।
भवतीत्यपि शास्त्रेषु सूचना होमतो भवेत् ॥ १८० ॥

शैव्यां तथैव दीक्षायामयं होमो विधीयते ।
स्वच्छन्दे तद्विधानं च प्रोक्तं देवेन विस्तरात् ॥ १८१ ॥

विवाहान्तं हि वेदोक्ताः संस्काराः परिकीर्तिताः ।
शैवी दीक्षा ततः शास्त्रे कार्यत्वेन परीक्षिता ॥ १८२ ॥

ततः परं तु कर्माणि सर्वाण्येव मनीषिणाम् ।
शैवशास्त्रानुसारेण कार्याणीति विनिश्चयः ॥ १८३ ॥

वेदोक्तमपि नो त्याज्यं कर्म जातु मनीषिणाम् ।
युगपत्करणं तस्मात् पूर्वैस्तस्य समाहितम् ॥ १८४ ॥

ब्राह्मणादित्रयस्यैव ब्राह्मी दीक्षा प्रकीर्तिता ।
वेदशास्त्राधिकारस्य सिद्धये वेदपारगैः ॥ १८५ ॥

स्त्रियः शूद्राश्च सम्प्रोक्ता स्मृतिशास्त्रेऽधिकारिणः ।
न वेदे तेन तेषां तु तत्र निष्ठा सुशोभना ॥ १८६ ॥

---

१. मनुस्मृतिः ३।७६ ।

गायत्रीति प्रसिद्धोऽयं मन्त्रो जप्य उदीर्यते।
सूर्यद्वारेण चित्सूर्यवाचकः स बुधैः स्मृतः॥ १८७॥

भक्तौ सत्यां न वा देया ब्राह्मी दीक्षा स्वयं बुधैः।
शिष्याय ब्रह्मभावो हि तयैवास्य प्रजायते॥ १८८॥

शैवी दीक्षा तु सर्वेषां वर्णानामविशेषतः।
स्त्रीणां चापि तथा देया भक्तिमात्रेण सूरिभिः॥ १८९॥

भक्तिं विना तु शैवीयं ब्राह्मणस्यापि नोचिता।
तस्यां सत्यां तु शूद्राणां स्त्रीणां चापि विधीयते॥ १९०॥

वर्णबाह्यस्तु सहजभक्त्युद्रेकमयः स्थितः।
योग्यो यद्यपि शैव्यां स्यात् तथापि नात्र योग्यता॥ १९१॥

देहोपाधिवशेनास्ति तस्येति कृतबुद्धिभिः।
यथा तथैव बोद्धव्यो न तच्चेद् भक्तिमात्रतः॥ १९२॥

बाह्याचारस्य संत्यागो न सम्भवसहः स्मृतः।
सम्भवे वा न युक्तः स्याद् देहं तावदिति स्थितिः॥ १९३॥

"शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे"।
पूर्वाचार्यैश्च सम्प्रोक्तमित्येवं शास्त्रपारगैः॥ १९४॥

यथा शूद्रोऽत्र वेदष्वयोग्यः स्मृत्या प्रबोध्यते।
तथा बाह्योऽपि कस्तत्र निर्बन्धे दोषकृत् स्वयम्॥ १९५॥

बोधमात्रं फलं तत्र तदेकं ग्राह्यतां गतम्।
विमुखानां प्रवृत्त्यर्थं कर्म त्वत्र कृतं बुधैः॥ १९६॥

कर्मद्वारेण देहानामन्नादिसङ्गतेः स्फुटम्।
अशुद्धत्वं प्रजायेत स्मृतिशास्त्रे प्रकीर्तितम्॥ १९७॥

वाङ्मात्रेणैव संस्कारो वर्णबाह्यस्य शोभनः।
अधिकारेऽन्यथा त्वत्र ब्राह्मणादपि दूरतः॥ १९८॥

भाव्यमेव यतोऽस्त्येषाऽधिकृतिर्भक्तिमात्रतः।
भक्तिहीनाय यद् दत्तं तत् सर्वं निष्फलं भवेत्॥ १९९॥

बाह्यानामपि वा सन्ति स्वशास्त्राणि गुरूणि च।
ते तैरेवावबोधेन युक्ताः स्युरिति निश्चयः॥ २००॥

तत्रापि दीक्षासमये स्वाऽऽचारोल्लङ्घनं तु यः।
करोत्यद्वैतलब्ध्यर्थं धिक् तं मूर्खमनाकृतिम्॥ २०१॥

स्वाचारं त्वविहायैव या कर्मणि विनिष्ठितिः ।
सा सद्यो मोक्षदा प्रोक्ताऽस्त्यात्मसंस्कारभावनात् ॥ २०२ ॥

यो ब्राह्मणः स्मृतेर्मार्गं दीक्षाव्याजेन लङ्घयेत् ।
तृष्णाग्रस्तः स विज्ञेयः सङ्गस्तेनाहितप्रदः ॥ २०३ ॥

दीक्षया तु निजाचाररता ये स्युर्महाजनाः ।
स्वात्मानं योजयित्वाऽस्मिन् शिवे ते सिद्धिभाजनम् ॥ २०४ ॥

देहस्यायं न संस्कारः किन्त्वात्मविषयः स्मृतः ।
स्वभावेन स एकोऽस्तीति केयं देहयोजना ॥ २०५ ॥

दीक्षया ह्याणवः प्रोक्तो जीवमात्रगतो बुधैः ।
संस्कारो न तु देहस्थः कर्माद्वैतप्रसाधकः ॥ २०६ ॥

अलं देहेन बुद्ध्यादेरपि नात्रास्ति चर्चनम् ।
आणवं ज्ञानमुक्तं हि दीक्षया न तु बुद्धिगम् ॥ २०७ ॥

बौद्धं ज्ञानं तु शास्त्रेण भवेदेव न संशयः ।
समवायो द्वयोर्जीवन्मुक्तिः करतले स्थिता ॥ २०८ ॥

आणवज्ञानयुक्तास्तु संस्कृताः संस्मृता बुधैः ।
न बौद्धज्ञानमात्रेण देहादेरत्र नो कथा ॥ २०९ ॥

देहात्मभ्रमयुक्तानां देहसंस्कारभावना ।
भवत्येव न सा युक्ता चिन्मात्रे स्वात्मताजुषाम् ॥ २१० ॥

यद्यप्येवं तु जीवस्य संस्कारो ज्ञानमात्रतः ।
तथापि कर्मनिष्ठेयं मूढार्थं परिकल्पिता ॥ २११ ॥

कर्मद्वारेण ते काले चित्तशुद्धियुताः स्वयम् ।
ज्ञानावेशे भवन्त्येव योग्या नात्र विचारणा ॥ २१२ ॥

शक्तिपातगृहीतास्तु विनैव कर्मयोजनाम् ।
ज्ञानेऽधिकारयुक्ताः स्युर्न तेषु नियमोऽस्त्ययम् ॥ २१३ ॥

आणवज्ञानमात्रेण युक्तानां न बहिः स्फुरेत् ।
ज्ञानचर्चा तथाऽप्येते स्वान्तः शीतलताजुषः ॥ २१४ ॥

अशीतलास्तु ये तैः सा कृताऽपि न कृता भवेत् ।
दीक्षा दीक्षा हि जीवस्य शुद्धिः शीतलतामयी ॥ २१५ ॥

बौद्धज्ञानेन युक्तानां स्फूर्तिः स्फुटतया भवेत् ।
किन्तु शारदमेघानां गर्जनेन समाऽस्ति सा ॥ २१६ ॥

ज्ञानद्वयेन संयुक्ता उपायद्वयवैभवात् ।
जीवन्मुक्ता भवन्त्येव देहपाते स्वयं शिवाः ॥ २१७ ॥

स्वतःसिद्धास्तु ये ज्ञानद्वये ते पञ्चषा भुवि ।
भवन्त्येव तथा चोक्ता अवतारा महात्मभिः ॥ २१८ ॥

ज्ञानद्वयेन संयुक्ता येन तेन महाधियः ।
भवन्ति पुरुषास्तज्ज्ञाः सम्यक् तत्र पदे स्थिताः ॥ २१९ ॥

महाभक्तियुतैर्या च महागुणयुतैः कृता ।
सद्गुरुभ्यस्तु सा दीक्षाऽऽणवज्ञानप्रदायिनी ॥ २२० ॥

एकाङ्गविकला त्वेषा न दीक्षा कथिता बुधैः ।
बालक्रीडा ह्यसौ व्यक्तं कौटिल्यजृम्भणाऽथवा ॥ २२१ ॥

अधिकारोऽपि शास्त्रेऽत्र दीक्षयैव भवेत् ततः ।
बौद्धस्यापि भवेद् दीक्षा कारणं व्यवधानतः ॥ २२२ ॥

अधिकारं विनैवात्र ये तु शास्त्रावगाहनम् ।
कुर्वते तेऽपि सम्प्रोक्ता मूढा वा कुटिलाश्च वा ॥ २२३ ॥

अदीक्षिता दीक्षितांस्तु पाठयन्तः स्मृता बुधैः ।
लब्धा एव यतो लोभाद् विनाऽन्यत्वं न विद्यते ॥ २२४ ॥

सर्वशास्त्रैर्हि बोधोऽयं साध्यते त्वविशेषतः ।
यत्राधिकारः शिष्यस्य प्रवृत्तिस्तत्र कार्यताम् ॥ २२५ ॥

यस्याधिकारो यत्रास्ति ग्राह्यं तत् तेन निश्चितम् ।
नान्यदित्येव युक्तं स्यादार्जवं सर्वसिद्धिदम् ॥ २२६ ॥

अर्थित्वाधिक्यसंस्फूर्तौ दीक्षा कार्या प्रयत्नतः ।
अशक्तौ गुरवः प्रार्थ्या दयाधिक्यविभूषिताः ॥ २२७ ॥

ते प्रार्थितास्तु तं कञ्चिदुपायं कथयन्ति वा ।
येन तत्राधिकारं ते लभन्ते दोषनाशकम् ॥ २२८ ॥

असामर्थ्यं निजं स्वेन ज्ञेयं शिष्येण सत्यतः ।
गुरुणा लोभराहित्यमिति शास्त्रेषु निश्चयः ॥ २२९ ॥

शिष्यस्य गुरुदेयेऽत्र दातृताभ्रम एष यः ।
स दोषः स्याद् गुरोस्तत्र लब्धतानिश्चयः परम् ॥ २३० ॥

सद्गुरोर्भक्तिभाक् शिष्यः सच्छिष्ये दययान्वितः ।
गुरुश्चैतद्द्वयं प्रोक्तं दुर्लभं पण्डितैः सदा ॥ २३१ ॥

दीक्षाद्वयविधानं तदागमेषु स्थितं बुधैः।
निर्णेयं नात्र शक्ताः स्मो मीमांसामात्रनिष्ठिताः॥ २३२॥

अध्वषट्काभिप्रायेण दीक्षाऽसौ षड्विधा बुधैः।
कीर्तिता निर्णयस्तेषां भवितेह न चर्च्यते॥ २३३॥

वर्णदीक्षा स्मृता त्वेका पददीक्षाऽपरा स्थिता।
मन्त्रदीक्षा तृतीया तु वाचकैकपदास्त्विमाः॥ २३४॥
भुवनानां च तत्त्वानां कलानां चेति संस्मृतम्।
दीक्षात्रयं वाच्यद्वाराऽऽरोहस्तत्र परे पदे॥ २३५॥

कलादीक्षा प्रसिद्धाऽस्ति तत्र संग्रहभावतः।
तयैव सर्वा दीक्षा हि भवन्त्येवं न संशयः॥ २३६॥

विज्ञानदीक्षा याऽप्यस्ति श्रीमत्स्वच्छन्दशासने।
निर्णीता श्रीभगवता साऽज्ञनैकस्वरूपिणी॥ २३७॥
तस्याः सहोदरी चेयं मया दीक्षा प्रकाशिता।
विषयादेः समारोहसाधिनी ज्ञानरूपिणी॥ २३८॥

दीक्षाया हि समारोहः साध्यते दीक्ष्यनिष्ठितः।
साधितः सोऽयमत्रापि तद्दीक्षेयमनुत्तरा॥ २३९॥

न चायमध्वा पूर्वोऽस्ति विषयादिस्वरूपकः।
अध्वानां सारभूतोऽयं षण्णामेवास्ति यत् स्थितः॥ २४०॥
परं स्वारोहतां वीक्ष्य मयाऽध्वाऽयं प्रकाशितः।
भवत्वारोहणे लग्नोऽनेनैवालस इत्यलम्॥ २४१॥

दीक्षाया योजना याऽस्ति शिवेऽत्र परताचणे।
साऽनयाऽपि भवत्येवेति दीक्षेयं परा स्मृता॥ २४२॥

दीयते परमं स्थानं क्षीयन्ते कर्मवासनाः।
दीक्षयैवानयाऽप्येव चर्चयेति कृतं बहु॥ २४३॥
षडध्वदीक्षा याऽप्यस्ति तस्याः पार्यन्तिकं फलम्।
विषयादेः समारोहस्तदुक्तं गुरुभिः स्फुटम्॥ २४४॥
"[1]ज्ञात्वा समस्तमध्वानं तदीशेषु विलापयेत्।
तान् देहप्राणधीचक्रे पूर्ववद् गालयेत् क्रमात्" ॥ २४५॥
होमप्रसङ्गतः सेयं दीक्षाचर्चा मया कृता।
नमस्कारप्रसङ्गेन होमस्यापि च चर्चनम्॥ २४६॥

---

१. तन्त्रालोकः ८।७।

नमस्कारस्य रूपं हि स्थूलं कर्म प्रकीर्तितम् ।
यथा तथा नमस्कार उपायः परमे पथि ॥ २४७ ॥

नमस्कारैः प्रसन्नोऽयं परमात्मा महेश्वरः ।
निजं स्थानं ददात्येव सर्वेषामिति निश्चयः ॥ २४८ ॥

यद्यत्कर्म च तज्ज्ञेयं नमस्कारस्य केवलम् ।
विस्तारो बीजमात्रस्य शाखादिरिव धीमता ॥ २४९ ॥

नमस्कारेण रहितं कर्म नो कर्म संस्मृतम् ।
भावना हि नमस्कारः कर्ममूलं तु सा स्फुटम् ॥ २५० ॥

व्यवहाराद् विरक्ता ये बाह्यादान्तरहेतुना ।
कर्मभ्यस्ते विरक्ताश्चेद् विरक्ता नेतरे तथा ॥ २५१ ॥

भीता द्रव्यव्ययाद् ये स्युरायासाद् वा नराधमाः ।
कर्मभ्यो विमुखान् धिक् तान् स्वहिताद्विमुखान् शठान् ॥ २५२ ॥

नमस्कारो नमस्कार्यो बुधैः सोऽयं महाफलः ।
विषयोऽस्य नमस्कार्यश्चेन्न चेदधमस्तु सः ॥ २५३ ॥

[1]"हरप्रणतिमाणिक्यमुकुटोत्कटमस्तकाः ।
नमेयुः कं परं कं वा नमयेयुर्न धीधनाः" ॥ २५४ ॥

इत्युक्तं हि निजे स्तोत्रे भट्टनारायणेन च ।
तस्मान्नमस्कृतिः सेयं परत्वाऽऽपादिनी स्मृता ॥ २५५ ॥

यो नतः सोऽयमारोहमर्हत्येव न संशयः ।
तद्वन्नतेरिदं नाम नत्याख्यं नमनस्य नो ॥ २५६ ॥

सर्वोत्कृष्टे नमस्कारो नमस्कारो निगद्यते ।
अन्यत्र दीनतामात्रं कौटिल्यजृम्भणाऽथवा ॥ २५७ ॥

सोऽपि भक्त्यैव योगेन कर्तुरुत्कृष्टतां वहेत् ।
विषयेणैक्यसम्पत्त्या स्वयं चाथ विलीयते ॥ २५८ ॥

कर्त्रा साकं विलीनोऽसौ विषयत्वेन भासते ।
न भासते वा कोऽन्योऽत्र तदाश्रयतया स्थितः ॥ २५९ ॥

अथवा तस्य तद्भानं स्वप्रकाशत्वकल्पनम् ।
युक्तमेव शिवो यस्मात् स्वयं स्वस्यैव भासते ॥ २६० ॥

---

१. स्तवचिन्तामणिः २४ ।

भासनं च न तत्रास्ति लौकिकं परमे पदे।
किन्त्वनुत्तरमेवात्र तद्युक्तं चोदनात्र का ॥ २६१ ॥

सेयं परशिवावस्था नमस्कारोऽपि यत्र सः।
शिव एवाथवा शक्तिरहमामर्शरूपिणी ॥ २६२ ॥

उत्कर्षस्य पराकाष्ठा सेयं सद्भिरुदाहृता।
अभावादीशितव्यस्येशितृत्वं यन्निजात्मनि ॥ २६३ ॥

सैवेयं तु पराशक्तिर्नमस्कारस्वरूपिणी।
अहमामर्शरूपाऽस्ति आत्मविश्रान्तिभावतः ॥ २६४ ॥

[1]"प्रकाशस्यात्मविश्रान्तिरहंभावः प्रकीर्तितः।
प्रोक्ता सैव च विश्रान्तिः सर्वापेक्षानिरोधतः" ॥ २६५ ॥

इत्युक्तं गुरुभिः पूर्वैर्महाशास्त्रेषु निश्चयात्।
अहमः स्फूर्तिमात्रं यत् सोत्कर्षस्य परा स्थितिः ॥ २६६ ॥

ईशितव्यं भवद्वाऽपि भिन्नं स्वस्मान्न विद्यते।
भिन्ने यन्नेशताधीने सा युक्ता यद् बुधैः स्मृता ॥ २६७ ॥

भेदो वाऽपि भवन् सोऽप्यमीशितव्येषु सज्जति।
धर्मिणं स्वं कथं स्वेन रञ्जयेत् स्वामिरूपिणम् ॥ २६८ ॥

प्रतियोगी च भेदस्य स्वाधीनस्य भवेत् स न।
प्रतियोगी यतो भिन्नो युक्तो नात्र तथा स्थितिः ॥ २६९ ॥

रागोऽप्यसावीशितव्य एव यस्मात् समर्पितः।
ईशितारं कथं कुर्याद् भेदवत् स्वोपरञ्जितम् ॥ २७० ॥

अस्वतन्त्रस्य का शक्तिः प्रेरके स्वे विकारिताम्।
कर्तुं तेनेशितव्यस्य भिन्नस्यात्र कथैव का ॥ २७१ ॥

कथाऽप्यस्त्वथवा हानिर्नैव योग्या कदाचन।
महाद्वैतपदे पूर्णे सर्वदा सर्वरूपिणि ॥ २७२ ॥

ईशिताऽथेशितव्यं च यत्रेशितव्यभावतः।
स्फुरतस्तत्पदं ज्ञेयं सहेशितृतयाऽन्वितम् ॥ २७३ ॥

ईशितव्यं स्वेशितरि स्यादीशत्वेन संस्थितम्।
यत्र तत्पदमेवास्ति परेशत्वेन भूषितम् ॥ २७४ ॥

अहं वाऽप्यनहं वापि यत्र सम्भूय संस्थितौ।
तत्पदं स्यात् पराहन्ताविषयाश्रयभावभाक् ॥ २७५ ॥

---

१. अजडप्रमातृसिद्धिः २२।

तदेव च नमस्कारयोग्यतां परमां गतम् ।
नमस्कारपराकाष्ठाऽहमामर्शस्वरूपिणी ॥ २७६ ॥

स्वमात्रविषयत्वेऽपि यस्याहं सर्वगोचरम् ।
सर्वागूरकभावेन तदेव परमं मतम् ॥ २७७ ॥

अहमेवास्त्यहं यत्र नाहं स्पर्शो न कश्चन ।
तदहं कोऽप्यपूर्वोऽयं नमस्कारः स्वगोचरः ॥ २७८ ॥

नमस्कर्ता नमस्कार्यो नमस्कार इतीह या ।
त्रिपुटी यत्र सा लीना स नमस्कार इष्यते ॥ २७९ ॥

नमस्कर्ताऽपि यत्रास्ति नमस्कार्यतया स्थितः ।
नमस्कारोऽपि वा सोऽयं नमस्कारः परात्परः ॥ २८० ॥

नमस्कार्यनमस्कारपरा ये योगिनः स्थिताः ।
तां नमस्कर्तृतां त्यक्त्वा नमस्कार्या भवन्ति ते ॥ २८१ ॥

नमस्कारस्तु तेषां सं(स्व)स्वरूपाद् व्यतिरिच्यते ।
न जात्वेव तथाप्येते नमस्कारपराः स्मृताः ॥ २८२ ॥

स्वयंसिद्धे नमस्कारेऽवहिता ये सदा स्थिताः ।
अवधानादपि गतास्ते भविष्यन्ति नो चिरात् ॥ २८३ ॥

निर्विकल्पास्तु ये प्रोक्ताः शाम्भवोपायनिष्ठिताः ।
तेऽपि सिद्धा भविष्यन्ति नात्र काऽपि विकल्पना ॥ २८४ ॥

येऽपि चिन्मात्रतां स्वस्य परामृशन्ति योगिनः ।
न किञ्चिद्भावतां यातास्ते भविष्यन्त्यसंशयम् ॥ २८५ ॥

स्तुतिरूपं नमस्कारं येऽपि कुर्वन्ति मानवाः ।
तेऽपि कालेन महता महतो यान्ति तत्पदम् ॥ २८६ ॥

बाह्यादिना नमस्कारं कुर्वन्तोऽपि जनाः स्मृताः ।
श्रेष्ठा एव नमस्कारः सर्वथैव हि शोभनः ॥ २८७ ॥

यथा तथा नमस्कारो महाफलकरः स्मृतः ।
भक्त्या कृतोऽन्यथा सोऽयं लगुडैर्व्योमताडनम् ॥ २८८ ॥

नमस्कारकृतिश्चेह नमस्कारतया मता ।
स्वभावसिद्धे करणं किमिदं ब्रूत पण्डिताः ॥ २८९ ॥

विस्मार्य च नमस्कारं ये स्थिताः शान्तबुद्धयः ।
ते नमस्कारविश्रान्ता भवन्त्येव न संशयः ॥ २९० ॥

विश्रान्तियोगे करणं यत् पुनः पूर्ववत् स्फुटम् ।
महाविश्रान्तिभावेन तत् प्रोक्तं तूत्तमं बुधैः ॥ २९१ ॥

मूढस्य तत्कृतिर्मोहो करणं तु ततस्तराम् ।
तज्ज्ञानां सर्वमेवेहानुत्तरं परिकीर्तितम् ॥ २९२ ॥

तथापि मूढैः कार्योऽयं नमस्कारः सुभावितैः ।
अभावितैः कृतोऽप्येष न कृताद् द्विगुणो मतः ॥ २९३ ॥

बाह्यारम्भेऽपि सर्वस्मिन् नमस्कारो विधीयते ।
विघ्नप्रशान्तये सद्भिर्निजेष्टदेवतां प्रति ॥ २९४ ।

आन्तरे तु विधानेऽस्मिन् सा नमस्कारभावना ।
पदे पदे विधातव्या महाविघ्नप्रशान्तये ॥ २९५ ॥

विघ्नः सङ्कल्पनिचयो महातापविधायकः ।
तच्छान्तये नमस्कारः श्रेष्ठ एष स्मृतो बुधैः ॥ २९६ ॥

प्रह्वीभावो नमस्कारः प्रह्वीभावो लयः स्मृतः ।
लीनस्य सर्वे सङ्कल्पाः शान्ति यान्ति न संशयः ॥ २९७ ॥

सुप्रशान्ता विलीना ये नमस्कारप्रभावतः ।
ते सत्तां तां निजां श्रेष्ठां प्राप्नुवन्ति महाशयाः ॥ २९८ ॥

ल(अ)यं तावन्नमस्कार उपायः समुदाहृतः ।
उपेयतां ततः सोऽयं श्रयत्येव स्वभावतः ॥ २९९ ॥

परमास्वादभावेन ततः परिणतोऽस्त्ययम् ।
महाविश्रान्तिभावेन स्फुरेदेव न संशयः ॥ ३०० ॥

आस्वादनिर्णयोऽप्यग्रे भविता नेह चर्च्यते ।
प्रकृतस्यैव विस्तारो युज्यते नेतरस्य तु ॥ ३०१ ॥

ये लीनास्ते निजां सत्तां प्राप्ताः स्युर्नेतरे जनाः ।
द्रावितं स्वर्णमेवैति निजां सत्तां विशेषतः ॥ ३०२ ॥

स्वसत्तामागतास्ते च सर्वोत्कृष्टतया युताः ।
नमस्कार्या भवन्त्येव यथा परशिवः स्वयम् ॥ ३०३ ॥

नमस्कर्तुः पराकाष्ठा नमस्कार्यत्वभावना ।
स्वस्येति संग्रहः शिष्टं प्रपञ्चो मूढहेतुना ॥ ३०४ ॥

नमस्कर्ता नमस्कार्यः स्वयमेवेति निश्चयः ।
कर्ता श्रोता च भिन्नौ न कल्प्यावत्र यथा बहिः ॥ ३०५ ॥

लयीभावस्वरूपेऽस्मिन् नमस्कारे दिवानिशम् ।
लीना भवथ संसारभारविश्रान्तये जनाः ॥ ३०६ ॥

सङ्कल्पत्यागमात्रं स नमस्कारः प्रकीर्तितः ।
न हस्तचालनं तस्मात् सङ्कल्पान् परिवर्जयेत् ॥ ३०७ ॥

लयः सङ्कल्पहानेन साध्यः सैव नमस्कृतिः ।
लीनः कृतनमस्कारो भवेन्नान्यः कदाचन ॥ ३०८ ॥

चाञ्चल्यं देहमात्रस्य नमस्कारं तु ये विदुः ।
इष्टासयेऽत्र लग्नास्ते भवेयुस्तद्व्रताः सदा ॥ ३०९ ॥

तस्मान्न देहचाञ्चल्यं नमस्कारो बुधैः स्मृतः ।
कायादेर्गालनं यत् स नमस्कारः प्रकीर्तितः ॥ ३१० ॥

गालनं च विवेकेन न किञ्चित्त्वेन भावनम् ।
न बाह्यागालनं तस्मात् विवेकैकरतो भवेत् ॥ ३११ ॥

न किञ्चित्त्वेन भाते तु देहादौ मेयजालके ।
अहन्ता तत उक्ता या चिन्मात्रे निष्ठिता भवेत् ॥ ३१२ ॥

चिन्मात्रेऽपि चिरं स्थित्वा तत उत्थाय तत्परम् ।
शिवं स्वविषयत्वेन गृह्णात्येव न संशयः ॥ ३१३ ॥

पुरा त्यक्तं भावजातं ततस्तन्निखिलं क्षणात् ।
स्वान्तर्गतं करोत्येव पूर्णत्वेनावभासनात् ॥ ३१४ ॥

पूर्णत्वं स्वं तदेवास्या या सर्वान्तःकृतिः परा ।
पराहन्ता ततः सेयं महाशक्तिस्वरूपिणी ॥ ३१५ ॥

सेयं महानमस्कारदशा परतया स्थिता ।
अनुपायानुपायैकनिष्ठत्वात् पूर्णतापदम् ॥ ३१६ ॥

पूर्णत्वादपि पूर्णेयं न्यूनत्वादपि संस्थिता ।
न्यूना सेयं दशा सद्भिः सदा सेव्या निरन्तरम् ॥ ३१७ ॥

शक्त्याऽनया स्वयं स्तौति स्वमेव परमेश्वरः ।
स्वात्मविश्रान्तभावेन नाभिजल्पनतः स्फुटम् ॥ ३१८ ॥

स्तुतिर्नमस्कृतिः प्रोक्ता वाचा साऽग्रे भविष्यति ।
विस्तरेणेति बहुना कृतं क्लेशविधायिना ॥ ३१९ ॥

इति गुरुमुखाच्छ्रुत्वा सेयं नमस्कृतिचर्चना
ननु प्रकटिताऽऽश्चर्योद्रेकोद्भवानुविधायिनी ।
भवतु स्वजनो मार्गेणानेन तत्र पदे स्थितो
भवति न सदा यत्रस्थानां कदापि विकल्पना ॥ ३२० ॥

सर्वोत्कृष्टतया क्षिप्ता परमेयं नमस्कृतिः ।
विस्तरेण विनिर्णीता महास्थानप्रदायिनी ॥ ३२१ ॥

इति श्रीमदाराध्यतमाचार्यवर्य-श्रीगुरुवरराजानकभास्करकण्ठविरचिते चित्तानुबोधाख्ये महाशास्त्रे सर्वोत्कृष्टत्वाक्षिप्तनमस्कारनिर्णायकं षष्ठं प्रकरणं सम्पूर्णम् । इति शिवम् ॥ ६ ॥

## सप्तमं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः ।

ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः ।

ॐ तद्द्वयसामरस्यरूपायै गुरुपादुकायै नमः ।

ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः ।

ॐ अथ वाचा नमस्कारः स्तुतिरूपो विविच्यते ।
विस्तरेण यतः सोऽयं बहुभेदो निगद्यते ॥ १ ॥

वाचा कृतो नमस्कारो वाचिकोऽयं प्रकीर्तितः ।
वागियं च चतूरूपा पण्डितैः समुदाहृता ॥ २ ॥

प्रथमा स्यात् परारूपा पश्यन्तीत्यपरा स्मृता ।
तृतीया मध्यमा प्रोक्ता चतुर्थी वैखरीरिता ॥ ३ ॥

प्रकाशस्य विमर्शाख्या या स्वरूपतया स्थिता ।
शक्तिः सेयं परा वाक् स्यादहमामर्शरूपिणी ॥ ४ ॥

तया वाचा प्रकाशोऽसौ स्वात्मानं ह्यहमित्यलम् ।
परामृशति तस्मात् सा वक्ति तं चितिरूपिणम् ॥ ५ ॥

परामृष्टा भासकश्च शक्तितद्वत्त्वभावतः ।
एक एवास्ति भेदस्तु चित्राश्वगजवत् स्थितः ॥ ६ ॥

असौ यद्भासयेत् तस्य परामर्शनतत्परा ।
एषेति भेदः कोऽस्त्यत्र विषयेण समाहितः ॥ ७ ॥

यदेव भासनं प्रोक्तं तदेवामर्शनं विदुः ।
यो भेदः सोऽपि तन्मात्रमिति का भेदकल्पना ॥ ८ ॥

यः शिवः सैव शक्तिः स्यादामर्शो भासनं तथा ।
महाद्वैतेऽत्र को भेदो भेदस्यापि तथात्वतः ॥ ९ ॥

तथापि भेदो भात्येव चतुष्टयगतस्तु यः ।
सोऽपि तस्यैव सा शक्तिर्या विवादपदे स्थिता ॥ १० ॥

न च शक्तेर्न योगस्यावकाशो भवति स्फुटम् ।
अग्निः कस्माच्च दहति काष्ठादि ब्रूहि तत्त्वतः ॥ ११ ॥

शक्तत्वं चात्र भावेन कल्प्यते नान्यतः क्वचित् ।
भानमात्रस्य साम्राज्यं यत् सर्वत्र स्थितिं गतम् ॥ १२ ॥

अभातेऽपि च तस्यैव स्फूर्तिः सद्भिरुदाहृता ।
नञर्थस्यापि भानं हि विना सत्तां न विद्यते ॥ १३ ॥

यद् भाति तस्य शक्यत्वं शक्तित्वं वाऽथ कथ्यताम् ।
शक्यशक्त्योर्न भेदोऽस्ति शक्तिमल्लिङ्गयोर्यतः ॥ १४ ॥

सेयं तस्मात् परा वाणी शक्तिमात्रस्वरूपिणी ।
सर्वदा शिवमाश्रित्य प्रकाशाख्यं स्थिता भवेत् ॥ १५ ॥

न प्रकाशं विना कश्चित् साऽस्ति सोऽपि तया विना ।
न जानीमस्तयोः केन निर्मितेयं व्यवस्थितिः ॥ १६ ॥

अर्थस्य शब्द एवार्थः शब्दार्थोऽप्यर्थ इत्यलम् ।
एतेन सिद्धं शब्दार्थगतमैक्यं बहिः स्थितम् ॥ १७ ॥

तदैक्यमेव सिद्धं स्यात् तयोर्न व्यस्तता क्वचित् ।
सा तु भाता तदैक्यस्य शक्तिरेव न संशयः ॥ १८ ॥

शिवोऽपि तस्माद् देवस्य शक्तिरेव बुधैः स्मृता ।
शक्तेस्तु तत्र का शङ्का तत्त्वे भावचयस्य च ॥ १९ ॥

यच्छक्तिः शक्तभावेन स्फुरेत् स शक्त उच्यते ।
अन्ये तु शक्तिमात्रं स्युः शक्त्या वेति विनिश्चयः ॥ २० ॥

शक्तेऽपि शक्तिसंयोगे न शक्त्यन्तरमिष्यते ।
अग्नेः किं दाहकत्वेऽत्र दाहकत्वान्तरं भवेत् ॥ २१ ॥

अनवस्थाऽपि या नासौ भवेद् दोषावहा स्फुटम् ।
अनन्ते यदनन्तत्वं शक्तीनामपि युक्तिमत् ॥ २२ ॥

शिवाच्छक्तेस्ततश्चास्य न भेदो युक्तितो यथा ।
भावानामपि ताभ्यां स तेभ्यो वा नानयोस्तथा ॥ २३ ॥

अभेदेऽपि विभेदोऽयं महाभेदः प्रकीर्तितः ।
स्थितो महानयेष्वेव नान्यशास्त्रेषु संस्थितः ॥ २४ ॥

अहमामर्शरूपैवं प्रकाशाख्ये शिवे स्थिता ।
परावाक् संस्मृता शक्तिः सर्वदाऽऽलिङ्ग्य संस्थिता ॥ २५ ॥

सिद्धरूपा स्तुतिः सेयमहमामर्शरूपिणी ।
अनुपायनमस्कारनिर्णये कृतविस्तरा ॥ २६ ॥

सर्वशक्तिमयत्वेऽपि चिदानन्दोभयात्मिका ।
शक्तिः सेयं समाख्याता प्राधान्येन मनीषिभिः ॥ २७ ॥

निर्विकल्पकविज्ञानभावेनाथ स्फुरद्वपुः ।
पश्यन्ती सैव सम्प्रोक्ता पण्डितैस्तत्त्वदर्शिभिः ॥ २८ ॥

अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥ २९ ॥

इति न्यायेन सेयं स्यादविभागस्वरूपिणी ।
क्रमेण रहिता स्वान्तःप्रकाशैकस्वरूपिणी ॥ ३० ॥

इच्छाशक्तिस्वरूपेयमान्तरामर्शभावतः ।
विकल्पाभावता त्वस्या अभावात् प्रतियोगिनः ॥ ३१ ॥

पश्यन्तीभाव एषोऽस्याः संविद्रूपतया स्थितेः ।
संविद्विज्ञानकर्तृत्वं भजत्येव न संशयः ॥ ३२ ॥

भाविपाषाणभावस्य जलस्य शीतता यथा ।
तथैवेयं दशा प्रोक्ता बोधस्य बोध्यताजुषः ॥ ३३ ॥

वाक्त्वं भवेत् परा पुष्टिभावतः परमार्थतः ।
अस्याः स्वरूपतो नैव परं मौनतया स्थितेः ॥ ३४ ॥

वाक्त्वेन स्तुतिभावोऽस्याः स्तुतिर्वाचा विमर्शनम् ।
सर्वोत्कृष्टतया प्रोक्तं यस्मात् सर्वैर्मनीषिभिः ॥ ३५ ॥

परापरशिवस्यास्य स्तौत्युत्कर्षं परात्परम् ।
पश्यन्तीति शिवस्यैषा परभावेन संस्थितम् ॥ ३६ ॥

स्तौतीति साध्यता येयं सा तत्त्वेन न युज्यते ।
यद्यप्येव तथाऽप्यत्र किं कुर्मो वाग् हि दोषभाक् ॥ ३७ ॥

उत्कर्षः सिद्ध एवात्र परामर्शश्च तद्विधः ।
शिष्यबोधनमात्रार्था कल्पना नात्र दोषकृत् ॥ ३८ ॥

उत्कर्षस्य परामर्शः पण्डितैः स्तुतिरुच्यते ।
स्तुत्ये स्थितस्य सत्येन श्लाघा सा त्वन्यथा भवेत् ॥ ३९ ॥

स्तोता स्तुत्यः स्वयं चासौ शिव एवात्र संस्थितः ।
स्तुतिभावेन सम्प्रोक्ता तच्छक्तिः परमेश्वरी ॥ ४० ॥

पश्यन्ती सा ततो वर्णविभागेन स्फुरद्वपुः ।
मध्यमा प्रोच्यते तज्ज्ञैर्मध्यमत्वेन संस्थितेः ॥ ४१ ॥

पूर्वं हि वाक् स्वयं श्रेष्ठमुत्तरा त्वधमा स्फुटम् ।
वाग्भवेदिति सेयं तु मध्यमा संस्मृता बुधैः ॥ ४२ ॥

अवरोहेऽत्र संस्कारभावेऽपि शक्तिभावतः ।
तज्जैवेयं स्थिताऽऽरोहे तज्जैव तु भृशं स्थिता ॥ ४३ ॥

विभागेनात्र संस्फूर्तिर्वर्णानां समुदाहृता ।
ज्ञानशक्तिस्वरूपेयं विकल्पज्ञानरूपिणी ॥ ४४ ॥

स्मृतिभावेन संस्थानाच्चित्ते सेयं कृतास्पदा ।
बाह्ये सोऽयं परामर्शो विकल्पत्वेन संस्थितः ॥ ४५ ॥

स्तुत्यस्यापि परामर्शः स्तुतिरेव न संशयः ।
सेयं मानसिकी प्रोक्ता स्तुतिः शास्त्रपरायणैः ॥ ४६ ॥

मध्यमा सा ततो देहात् निर्गच्छन्ती स्वभावतः ।
वैखरी प्रोच्यते देहो विखरो हि बुधैः स्मृतः ॥ ४७ ॥

स्थानानि करणान्यत्र प्रतिवर्णं विभेदतः ।
विभुनैव कृतान्येभ्यः सा वाक् स्फुटतया स्फुरेत् ॥ ४८ ॥

क्रियाशक्तिस्वरूपेयं स्थिताऽस्ति परमात्मनि ।
शिवाख्ये शक्तभावेन प्रसिद्धे चित्स्वरूपिणि ॥ ४९ ॥

अस्यास्तदनु सङ्केतो बुधैः पूर्वतरैः कृतः ।
अनेनेदमनेनेदं बोद्धव्यमिति सुस्फुटम् ॥ ५० ॥

यद्यपि सर्वे शब्दाः स्युः सर्वार्थवाचकाः स्फुटम् ।
तथापि देशकालाभ्यां नियमस्तत्र संस्थितः ॥ ५१ ॥

अव्यक्तध्वनिसार्थोऽयमेतद्भेदतया स्थितः ।
भवत्येव न तस्येह चर्चा काऽप्युपयोगिनी ॥ ५२ ॥

प्रकाशामर्शरूपत्वं परायाः परिकीर्तितम् ।
तदैक्यं स्यात् परशिवः परासंश्रितविग्रहः ॥ ५३ ॥

निर्विकल्पकबोधत्वं पश्यन्त्याः समुदाहृतम् ।
तार्किकाणां मते शाब्दी चर्चा तेभ्यो न रोचते ॥ ५४ ॥

मध्यमाया मनोमात्रे स्फुरन्त्याः स्मृतिगोचरे ।
सविकल्पकविज्ञानभावस्तेषां मते स्थितः ॥ ५५ ॥

पुंसामथाऽऽस्यकुहरान्निर्गच्छन्त्यास्तु तैः स्मृता ।
वैखर्याः शब्दरूपत्वं साक्षाच्छब्दतया स्थितेः ॥ ५६ ॥

परायास्तु कथा नात्र युक्ता स्याद् द्वैतशासने ।
पश्यन्त्या अपि यत्तेऽमी द्वैततामेव मन्वते ॥ ५७ ॥

वैयाकरणवृद्धैस्तु शब्दब्रह्मत्वकल्पना ।
पश्यन्त्यां तन्यते तत्र विश्रान्तेरित्यलं बहु ॥ ५८ ॥

अव्यक्तध्वनिरूपाऽत्र पश्यन्ती समुदाहृता ।
आसक्तिजननी तूर्णं माधुर्याच्छ्रोतृहृद्भुवि ॥ ५९ ॥

चर्मावनद्धशब्दोऽत्र मध्यमारूप इष्यते ।
व्यक्ताव्यक्ततयाऽऽसक्ति लेशेन जनयेत् सदा ॥ ६० ॥

स्फुटमुच्चारितो गीतशब्दस्तु पण्डितैः स्मृतः ।
वैखरीति सुव्यक्तत्वात् पारुष्येणैव संयुतः ॥ ६१ ॥

चतुर्विधा स्तुतिरियं संस्थिता परमात्मनः ।
आद्यं द्वयं तत्र सिद्धमुत्तरं साध्यतां गतम् ॥ ६२ ॥

तत्रापि वैखरीवाचा स्तुतिर्लोकेऽतिविश्रुता ।
ततः सेयं विभेदेन दर्श्यते प्रकृतत्वतः ॥ ६३ ॥

तत्रापि प्रथमं कार्या स्तुतिर्गुरुपदाब्जगा ।
गुरुपादप्रसादाद्धि परतत्त्वाप्तिजृम्भणा ॥ ६४ ॥

ततः श्रीपरमेशस्य स्वात्मरूपस्य सा स्तुतिः ।
युक्ता स्यादिति सेयं च विस्तरेण प्रदर्श्यते ॥ ६५ ॥

मङ्गलश्लोकमाश्रित्य यथैव निर्णयः कृतः ।
विषयादेस्तथैवेयं स्तुतिश्च क्रियते स्फुटम् ॥ ६६ ॥

विषयादिस्वरूपेण भगवानेव यत् स्वयम् ।
स्फुरत्येष महाशक्तिस्तत्स्तुतिस्तत्रगा स्मृता ॥ ६७ ॥

भूमौ स्थितेऽपि पाषाणे पदं दत्तं ह्यसंशयम् ।
परमार्थेन भूमिष्ठं न पाषाणगतं स्मृतम् ॥ ६८ ॥

केवलं निर्विकल्पेन सविकल्पेन वा स्तुतः ।
रूपेण भगवान् नैव स्तुतः स्यादिति मे मतिः ॥ ६९ ॥

या स्तुतिः सर्वभावेन बुधैः सा स्तुतिरुच्यते ।
सर्वगस्य शिवस्यास्य सर्वरूपतया सदा ॥ ७० ॥

द्वैते स्तुतिरियं युक्ताऽद्वैतेऽयुक्ता स्फुटं स्थिता ।
पराद्वैते युक्ततरा सेयं सद्भिरुदाहृता ॥ ७१ ॥

तन्महाद्वैतमाश्रित्य करिष्ये स्तुतिमुत्तमाम् ।
न योग्या चोद्यजालस्य भवेदेषा ततः स्फुटम् ॥ ७२ ॥

अन्यथा स्तौति कं कोऽत्र केनेति चोद्यचञ्चुभिः ।
स्फुटीकृताच्चोद्यदृशाच्च्यावयन्ति ततः पदात् ॥ ७३ ॥

पराद्वये तु ताः सद्यस्तद्भावेनैव भाविताः ।
पूर्णतामेव तां कुर्युरिति का चोद्यभावना ॥ ७४ ॥

मा कुर्वन्त्वथवाऽथाऽपि मा तथैव स्थिता स्वयम् ।
न न्यूनाधिकभावस्य पदं परशिवात्मिका ॥ ७५ ॥

अज्ञानमात्रसाराऽस्तु स्तुतिर्वेयं तथापि न ।
ह्यानिर्मलं मलेनैव क्षालयन्ति विचक्षणाः ॥ ७६ ॥

तदज्ञानदशायां च पूर्णतायां च युक्ताम् ।
स्तुतिर्भजति मध्ये तु यथा भाति तथाऽस्तु वा ॥ ७७ ॥

पूर्वस्यां तु दशायां सा मलं दूरे करिष्यति ।
द्वितीयस्यां विनोदस्य हेतुतां याति सुस्फुटम् ॥ ७८ ॥

अविनोदो विनोदश्च यद्यप्येव समौ मतौ ।
तथाप्येव विनोदोऽस्तु लोकेऽत्र युक्ततावशात् ॥ ७९ ॥

अयुक्तमपि युक्तं वा भवत्येव तथापि वा ।
युक्तमेवास्तु लोकेऽत्र परं व्यवहृतेः पदम् ॥ ८० ॥

तदप्यकस्मात् सम्पन्नं यदि तत्रापि शोकिता ।
केयं परशिवेनैव शोचनं युक्तिमद् बहु ॥ ८१ ॥

लोके सिद्धं तु युक्तस्य सेवनं सर्वदैव यत् ।
तद् यत्नेनाहृतिर्नास्य सेतरस्य स्फुटं स्थिता ॥ ८२ ॥

स्तुतिर्युक्ततरा लोके सर्वोत्कृष्टे यतस्ततः ।
वाङ्नाम स्तुतिरूपा सा दर्श्यते सिद्धये नृणाम् ॥ ८३ ॥

ॐ श्रीगुरवे नमः ।

प्रकाशरूपां ननु दक्षिणस्थां विमर्शरूपामथ वामगां च ।
द्वे पादुके स्तौमि गुरोः शिवस्य परस्य मूर्तिं दययाश्रितस्य ॥ ८४ ॥

प्रकाशसंलीनविमर्शरूपां तत्सामरस्येन विभातसत्ताम् ।
परां श्रये चेतसि पादुकां श्रीगुरोरहं पूर्णतयाऽऽश्रितस्य ॥ ८५ ॥

विमर्शनात् सद्य इहैकतोऽमी यस्या जना दर्शनमाप्नुवन्ति ।
शिवस्य शक्तेरपि देवतां तां स्वां नौम्यहं श्रीगुरुपादुकाख्याम् ॥ ८६ ॥

शिवोऽस्ति कोऽन्यो गुरुरेव सोऽयं देहं श्रितो यद्दयया जनस्य ।
जनोऽपि कोऽयं ननु वाऽस्ति सोऽयं शिवो गुरुः सर्वतया स्थितो यत् ॥ ८७ ॥

शिवो गुरुर्वाऽस्ति गुरुः शिवो वा केयं कथा द्वैतहताऽथवाऽत्र ।
अद्वैतचर्चापि हि नात्र युक्ता द्वयाद् गते द्वैतविदूषिता यत् ॥ ८८ ॥

शिवं भजेऽहं गुरुमात्ररूपं गुरुं भजे सर्वतया स्थितं तु ।
शिवादिसर्वं खलु भावजातं भजेऽथवा श्रीगुरुभावतोऽहम् ॥ ८९ ॥

शिवो गुरुः सोऽहमिहास्मि सत्यं परं गुरुर्वा शिव एव वाऽस्मि ।
अस्मीव वाऽस्मीह विकल्पना तु त्रयस्य भेदेन विदूषिता का ॥ ९० ॥

देहं श्रितोऽभूद् दयया शिवोऽसौ यन्मे स्वरूपं स्वमदर्शयत् सः ।
स्वतो विभिन्नं किल भावयित्वा सत्तोऽपि तद्रूपमहो न भिन्नम् ॥ ९१ ॥

गुरोः प्रसादेन यतोऽर्थमेतमवाप्नुवं तेन गुरुः सदा मे ।
पूज्यः परं नान्यतया स्थितोऽस्ति कोऽप्येव देवस्तमृतेऽथ पूज्यः ॥ ९२ ॥

पूज्यो गुरुः पूजक एष सोऽत्र पूजाप्यसौ सर्वतया स्थितो यत् ।
कोऽहं कमेनं परिपूजयामि कया न जाने किमिवात्र कुर्वे ॥ ९३ ॥

शान्तिर्गुरोः पादुकयोस्तु युक्ता प्रकाशनामर्शनयात् तयोस्तत् ।
स्वात्मैव यत् तद्द्वयरूप एष तत्र स्थितिर्मे खलु शान्तिरेषा ॥ ९४ ॥

बाह्ये प्रचारोऽपि च यः प्रवाहात् सापीह पूजा गुरुपादुकायाः ।
ब्रह्मादिकं सर्वमिदं जगद्धि गुरोः स्वरूपं न ततोऽन्यदेतत् ॥ ९५ ॥

रागोऽथवा द्वेष इहास्तु भावजाते विभेदोऽत्र न कोऽपि यस्मात् ।
पूजाद्वयं श्रीगुरुपादुकासु ततो विना नेह हि किञ्चिदेव ॥ ९६ ॥

नैर्मल्ययोगाच्छिव एव योऽभूद् वैदूर्यभावेन धृतात्मसत्तः ।
सोऽयं परात्माऽस्ति गुरुर्ममेह प्रकाशरूपोऽपि विमर्शसारः ॥ ९७ ॥

तस्यावतारोऽथ तु यः स्वरूपादभिन्नमूर्तिर्गुरुरत्र मे सः ।
आत्मा स्वयं भास्कर एष सोऽहं प्रकाशरूपो ननु काऽत्र चिन्ता ॥ ९८ ॥

गवां ततिः सेयमिहात्यनर्घा न्यस्ता मया या भुवि भास्करेण ।
गुरोः पदाब्जेषु सतां हृदब्जान्येवैतया यान्तु विकासकाष्ठाम् ॥ ९९ ॥

ॐ नमः शिवायास्तु सदा स्वभूतेरास्वादनार्थं विषयत्वमीयुषे ।
नानात्वजुष्टान्तरबाह्यचेत्यभावेऽपि सर्वान्तरचित्स्वरूपिणे ॥ १०० ॥

गृहीतनानाविधदेहमातृभावाय जाग्रत्पदतामुपेयुषे ।
आस्वादनार्थं निजबाह्यभूतेर्बाह्येन्द्रियाधिष्ठितमूर्तये नमः ॥ १०१ ॥

अथान्तरास्वादविशेषलब्ध्यै सर्वावसानामपि साधनाय च ।
गृहीतनानाविधबुद्धिमातृभावाय ते स्वप्नजुषे नमो नमः ॥ १०२ ॥

मातृद्वयस्यास्य बलैकहेतोस्तं प्राणभावं भजते स्वयंभुवे ।
सवेद्यसंसुप्तिविभूषिताय सुखैकमग्नाय च ते नमो नमः ॥ १०३ ॥

प्राणावकाशार्थमथो गृहीतस्वाकाशभावाय विभूतियोगात् ।
शून्याख्यमात्रे गतवेद्यसुप्तिपदाश्रितायापि च ते नमोऽस्तु ॥ १०४ ॥

साक्षित्वमाधातुमथो गृहीतचिन्मात्रभावाय तु चित्त्वयोगात् ।
शून्याख्यमेये खलु तुर्यधाम्ने सत्यप्रमात्रे भवते नमोऽस्तु ॥ १०५ ॥

स्वाधःकृतं यद्विषयादिजातं स्वान्तर्गतं भावयते नमोऽस्तु ।
तेषां तलं व्याप्य तु वैभवेन पृष्ठं तथान्तात् परितः समस्तात् ॥ १०६ ॥

आरोहलीलां भजते सदैवं तथावरोहं निजवैभवेन ।
पदाच्छिवाख्यात् परमाद्रसाग्निसंख्यातिगात् क्रीडक ते नमोऽस्तु ॥ १०७ ॥

व्याप्येन हीनां निजदेहगां तां व्याप्तिं निजां पूरयितुं क्षणेन ।
शिवादिरूपैरनु तत्त्वपूगैस्तत्त्वेन भाताय च ते नमोऽस्तु ॥ १०८ ॥

स्वभित्तिभूते परमेश दैवोद्याने स्वशक्त्या सह लीलयैव ।
अत्यन्तमास्वादवशात्तदैक्यं गताय नित्यं भवते नमोऽस्तु ॥ १०९ ॥

शक्त्याऽथ शक्यैः सह सामरस्यं गतं स्वमात्मानममुं विभक्तम् ।
समस्ततत्त्वोपरिवर्तिनं ते क्रीडाविनोदं भजते नमोऽस्तु ॥ ११० ॥

शक्त्यावियुक्तं निजमेव रूपं प्राधान्ययोगाय तु कुर्वतेऽथ ।
प्रकाशरूपं शिवतत्त्वमेतत् प्रकाशयित्रे भवते नमोऽस्तु ॥ १११ ॥

सहैक्ययोगाय तु तां स्वशक्तिं विमर्शरूपां निजदेहलेशात् ।
भिन्नीकृतां भासयतेऽथ शक्तितत्त्वस्य भावेन च ते नमोऽस्तु ॥ ११२ ॥

तत्त्वद्वयेऽस्मिन् शिवरूपमेव मातारमादिश्य तु साक्षिभावे ।
स्वलेशभूतं स्वविनोदलीलारताय देवाय नमोस्तु तुभ्यम् ॥ ११३ ॥

सन्मात्रभावाश्रितसत्यभूतसादाख्यभावेन निमेषरूपम् ।
अन्तःपदाहंमितिमात्रसारं सादाख्यतत्त्वं शरणं प्रपद्ये ॥ ११४ ॥

तत्त्वेऽत्र साक्ष्ये विनियोज्य मन्त्रमहेशवृन्दं निजमूर्तिलेशम् ।
शक्त्या स्वया क्रीडनतत्परं त्वां स्वात्मानमीशं शरणं प्रपद्ये ॥ ११५ ॥

अहं ममेदं प्रमयोः समत्वादुन्मेषरूपं बहिरेतदाद्यम् ।
तथाप्यभेदैकमयं त्वदीयं सदेश्वरं तत्त्वमहं प्रपद्ये ॥ ११६ ॥

मन्त्रेशवृन्दं विनिधाय साक्ष्ये स्वरूपभूतं निजमेव सम्यक् ।
शक्त्या स्वया क्रीडति यस्तमेतं विभुं प्रपन्नोऽस्मि महेशमाद्यम् ॥ ११७ ॥

इदं प्रमासारतया प्रसिद्धमभेदपर्यन्ततया स्थितं च ।
अभेदभेदाश्रितसख्यमेतद् विद्याख्यतत्त्वं तव देव वन्दे ॥ ११८ ॥

कृत्वाऽत्र साक्ष्ये ननु मन्त्रवृन्दमिदन्तयाऽहंमितिमिश्रयालम् ।
भावग्रहे सक्तमथो स्वशक्त्या क्रीडारसं ते भजते नमोऽस्तु ॥ ११९ ॥

स्वरूपविस्मारणहेतुभूतं तमःस्वरूपं वृतिमात्रहेतुम् ।
अभेदभेदान्तरसेतुभूतं मायाख्यतत्त्वं शरणं व्रजामि ॥ १२० ॥

ज्ञानाकलांस्तत्र निधाय साक्ष्ये भेदाद् गतान् भेदमनाश्रितांश्च ।
यः क्रीडतेऽस्यां स्वविहारभूमौ तथैव तं देवमहं प्रपद्ये ॥ १२१ ॥

कर्तृत्वभूतेः खलु लेशभूतं किञ्चित्करत्वेन समर्थितं च ।
कलाख्यमेतद् भगवंस्त्वदीयं तत्त्वं श्रये ज्ञानकलाप्तयेऽहम् ॥ १२२ ॥

सर्वज्ञताभागतया प्रसिद्धं किञ्चिज्ज्ञतारूपमणौ स्थितं तत् ।
अशुद्धविद्याख्यमिदं तु तत्त्वं भवत्स्वरूपं भगवन्नमामि ॥ १२३ ॥

नित्यं क्रियाया निजदेहगाया वैचित्र्यरूपं परमेश ते तत् ।
सूर्यादिसञ्चारवशेन लक्ष्यं कालाख्यतत्त्वं शरणं प्रपद्ये ॥ १२४ ॥

आसक्तिहेतुं ननु यत्र तत्र जीवस्य तस्याणुतया स्थितस्य ।
रागाख्यया सर्वजने प्रसिद्धं तत्त्वं तदेतच्छरणं व्रजामि ॥ १२५ ॥

कलादिभूम्यन्ततया स्थितेऽस्मिन् नियामकं तत्त्वगणे यदेव ।
शक्तिस्वरूपं खलु तत्त्वमेतद् भजे सदा सत्पथप्राप्तयेऽहम् ॥ १२६ ॥

मायादिशङ्कावृतमन्तरेतद् बाह्ये वृतं तत्त्वगणेन तद्वत् ।
प्रधानमुख्येन तु चित्स्वरूपं भजेऽणुसंज्ञं खलु तत्त्वमाद्यम् ॥ १२७ ॥

सत्त्वादिसाम्यैकमयं प्रधानं सर्वत्र भाविन्यथ तत्त्वजाते ।
प्रकृत्यभावात्तु तदेकरूपं यत्तत्त्वमेतच्छरणं प्रपद्ये ॥ १२८ ॥

सर्वावसाहेतुतया प्रसिद्धं चिच्छायया चेतनवद्विभातम् ।
तत्त्वं तदेतन्महदाख्यमन्तर्महावसायाप्तिकरं भजामि ॥ १२९ ॥

सर्वाभिमानैकविरोधहेतुर्देहादिनिष्ठाहमिति स्वरूपम् ।
तत्त्वं त्वहङ्कारतया प्रसिद्धं शिव त्वदीयं सततं नमामि ॥ १३० ॥

बाह्यार्थसङ्कल्पविधानदक्षं तदेकरूपं परमार्थसारम् ।
बाह्येन्द्रियाधिष्ठितकर्तृभूतं चित्ते मनस्तत्त्वमुपास्महे तत् ॥ १३१ ॥

आकाशसारस्य तु शब्दसंज्ञायुक्तस्य बोधं कुरुते यदेतत् ।
अर्थस्य तत्तत्त्वमहं प्रसिद्धं श्रोत्राख्यया चित्तपदे स्मरामि ॥ १३२ ॥

सारस्य वायोरनुबोधकं यत् स्पर्शाख्यया ख्यातियुतस्य लोके ।
अर्थस्य तत्त्वं ननु तद्भजेऽहं त्वगिन्द्रियाख्यं शिव ते स्वरूपम् ॥ १३३ ॥

यस्तेजसः सार इह प्रसिद्धो रूपाख्यया सर्वजनेष्वजस्रम् ।
तत्सिद्धिहेतुं ननु संश्रयेऽहं नेत्राख्यमेतद् हृदयेऽत्र तत्त्वम् ॥ १३४ ॥

जलस्य सारो रससंज्ञको यः स सिद्धिमायाति तु यस्य भित्तौ ।
तत्तत्त्वमेतद् रसनाख्ययात्तं भजे महास्वादविभूतयेऽहम् ॥ १३५ ॥

भूमेस्तु सारो ननु गन्धनामा प्रकाशते यद् भुवि सर्वदाऽयम् ।
घ्राणाख्यया सर्वजने प्रसिद्धं तत्त्वं तदेतच्छरणं श्रयामि ॥ १३६ ॥

वागाख्यकार्यस्य निबन्धनं स्यात् स्वेनैव यत्प्राणबलस्वरूपम् ।
वागिन्द्रियाख्यं तदहं प्रपद्ये तत्त्वं शिवस्यैव निजं स्वरूपम् ॥ १३७ ॥

आदानमेतद् व्यवहारहेतोः करोति यद् भावकदम्बकेषु ।
तत् पाणिरूपं शरणं प्रपद्ये तत्त्वं स्वरूपं परमेश्वरस्य ॥ १३८ ॥

गमिक्रिया यच्छरणा सदैव तत्तत्प्रदेशाप्तिकरी नराणाम् ।
पादाख्यतत्त्वं तदहं प्रपद्ये विभोः स्वरूपं ननु तत्पदाप्त्यै ॥ १३९ ॥

देहस्य यत् सर्वमलापहारं करोति संशुद्धिकरं सदैव ।
तत् पायुरूपं शरणं प्रपद्ये तत्त्वं महार्घं परमेश्वरस्य ॥ १४० ॥

आनन्दप्रादुर्भवकारणं यत् स्पर्शं द्वितीयेन निजेन सद्यः ।
संप्राप्य निष्ठां मिथुने गतं तदुपस्थतत्त्वं शरणं प्रपद्ये ॥ १४१ ॥

श्रुत्याख्यरूपेण तु मातृवर्गे हर्षप्रदं वर्णमयेन चाथ ।
सङ्केतयोगेन समस्तवाचि शब्दाख्यतत्त्वं शरणं व्रजामि ॥ १४२ ॥

प्रमातृदेहे स्फुरणात् स्वकीयाद्रोमाञ्चभेदं जनयेत् क्षणाद् यत् ।
तत् तत्त्वमेतच्च भजे सदाऽहं स्पर्शाख्यया सर्वजने प्रसिद्धम् ॥ १४३ ॥

नेत्राख्यरन्ध्रेण तु मातृचित्ते प्रविश्य हर्षं जनयेत् सदा यत् ।
तत् तत्त्वमेतन्ननु रूपसंज्ञं भजे सदा द्योतितसर्वभावम् ॥ १४४ ॥

आस्वादरूपः परमोऽस्ति योऽयं माधुर्यदेहो जलगोऽतिमिष्टः।
अम्लादिभावेन गृहीतभेदस्तत्त्वं रसाख्यं शरणं श्रये तत् ॥ १४५ ॥

प्रमातृदेहं ननु वासितं य आविश्य सम्पादयतीह सद्यः।
हृद्गन्धरूपं शरणं प्रपद्ये विभोः स्वरूपं ननु तत्त्वसारम् ॥ १४६ ॥

सारप्रदं शब्दमपीह सद्यो गुणीकरोतीव महत्तया यत्।
शब्दस्य चाधारतया स्थितं तदाकाशतत्त्वं शरणं व्रजामि ॥ १४७ ॥

सारप्रदं स्पर्शमपीह सद्यो गुणीकरोतीव महत्तया यत्।
स्पर्शस्य चाधारतया स्थितं तद् वाय्वाख्यतत्त्वं शरणं व्रजामि ॥ १४८ ॥

सारप्रदं रूपमपीह सद्यो गुणीकरोतीव महत्तया यत्।
रूपे तदाधारतया प्रसिद्धं तेजःस्वरूपं खलु तत्त्वमीडे ॥ १४९ ॥

सारप्रदान् सर्वरसानपीह गुणीकरोतीव महत्तया यत्।
तेषां तथाऽऽधारतया स्थितं तज्जलाख्यतत्त्वं शरणं व्रजामि ॥ १५० ॥

सारप्रदं गन्धमपीह सद्यो गुणीकरोतीव महत्तया यत्।
गन्धस्य चाधारतया प्रसिद्धं तद् भूमितत्त्वं शरणं व्रजामि ॥ १५१ ॥

मातृद्वयं साक्षितया निवेश्य कलादिभूम्यन्ततया प्रसिद्धे।
लयाकलाख्यं सकलं च तत्र यः क्रीडते तं हृदये भजेऽहम् ॥ १५२ ॥

तां मन्त्रसोपानततिं स्वभित्तौ प्रसार्य यो वाचकताप्रसिद्धम्।
तत्रावरोहं तनुते सदेहं मन्त्राध्वरतं प्रपद्ये ॥ १५३ ॥

मन्त्रैकदेशैकमयीं स्वभित्तौ सोपानपङ्क्तिं प्रविसार्य तत्र।
मात्रामयीं वाऽत्र तनोति यस्तां पदाध्वनिष्ठं विभुमेतमीडे ॥ १५४ ॥

ततोऽथ सूक्ष्मां ननु वर्णपङ्क्तिं सोपानभूतां प्रविसार्य तत्र।
द्वयीं य एतां कुरुते सदैव वर्णाध्वनिष्ठं प्रभुमेतमीडे ॥ १५५ ॥

वाच्यस्वरूपां भुवनालिमेतां सोपानभावेन विसार्य तत्र।
अत्रापि लीलां कुरुते द्विरूपां यस्तं भजेऽहं भुवनाध्वनिष्ठम् ॥ १५६ ॥

शिवादिभूम्यन्ततया स्थितां च तत्त्वालिमुक्तां प्रविसार्य तद्वत्।
तत्रापि लीलां भजते द्विधा यस्तत्त्वाध्वनिष्ठं विभुमेतमीडे ॥ १५७ ॥

ततोऽध्वनां पञ्चकमेतदेव कृत्वा निवृत्त्यादिकपञ्चकान्तः।
विभागतो यो रमते तथैव कलाध्वनिष्ठं विभुमेतमीडे ॥ १५८ ॥

षडध्वसारे विषयादिशून्यपर्यन्तसोपानपथे विचित्राः।
क्रीडास्तनोत्येव विभुः सदा यस्तं चित्रचेष्टं भगवन्तमीडे ॥ १५९ ॥

अतीत्य सर्वाध्ववर्तीति स्वरूपे शुद्धे स्थितं स्वस्थतया सदैव ।
चिन्मात्ररूपं परमात्मतत्त्वं नित्यं भजे चेतसि तत्क्षणेऽत्र ॥ १६० ॥

प्रादुर्भवं वेदचतुष्टयस्य स्वामर्शरूपस्य चकार यस्तम् ।
चतुर्मुखं श्रीपरमेशमीडे ब्रह्माख्यमेतं भगवत्स्वरूपम् ॥ १६१ ॥

तच्छक्तिचक्रं सहजं करेण प्रत्येकमालम्ब्य तनोति यस्ताः ।
क्रीडाविभुस्तं शरणं प्रपद्ये श्रीवासुदेवाख्यमहं पुराणम् ॥ १६२ ॥

सोमस्य सूर्यस्य च नेत्रभावं गतस्य मध्ये सहजं तृतीयम् ।
चिदग्निरूपं नयनं श्रयन्तं त्रिनेत्रमेतं शरणं प्रपद्ये ॥ १६३ ॥

प्रमातृवृन्देन तु योऽपि मालां ज्ञानस्य देहे सहजां बिभर्ति ।
सहस्रनेत्रं तमहं प्रपद्ये प्रभुं महाश्चर्यकरं महान्तम् ॥ १६४ ॥

अपानचन्द्रेण करोति पुष्टिं प्राणेन सूर्येण तु पाकमेव ।
ब्रह्माण्डदेहे ननु यस्तमेतं विराट्स्वरूपं भगवन्तमीडे ॥ १६५ ॥

चिदादिकं यो निजशक्तिचक्रं पञ्चात्मकं स्वास्यतया बिभर्ति ।
ब्रह्मादिकं कारणपञ्चकं वा स्वच्छन्दनाथं तमहं प्रपद्ये ॥ १६६ ॥

शान्तं स्वरूपं तव देव नौमि शान्तेतरं चाप्यथ घोरघोरम् ।
सर्वान् स्वरूपानथ सर्वतश्च नतोऽस्मि ते मोचनबन्धहेतून् ॥ १६७ ॥

भूतात्मकं तन्मुखपञ्चकं यो विभर्त्ति सर्वेन्द्रियपाणियुक्तः ।
गातुः सदा त्राणकरं च देवं तं नौम्यहं श्रीपरमेशमाद्यम् ॥ १६८ ॥

कस्यापि सूर्यस्य तु धीमहीदं भर्गो वरेण्यं ननु देवमूर्तेः ।
धियस्तथा कर्मगणं महान्तं प्रचोदयाद् यो निजवैभवान्नः ॥ १६९ ॥

पिण्डात्मकैर्बीजमयैश्च मन्त्रैः सर्वैः परं तं शिवनाथमाद्यम् ।
द्वारेण साक्षादपि वाच्यमानं विभुं प्रपद्ये शरणं महाहम् ॥ १७० ॥

सर्वेषु भावेषु च सर्वदैव सर्वस्य भावेन गतं यदेतत् ।
बीजं यथा बीजतरौ सशाखि तत्सर्वबीजं शरणं प्रपद्ये ॥ १७१ ॥

विश्वत्वमुत्तीर्णदशां तथैतन्मयत्वमासाद्य सदा स्थितो यः ।
त्रये त्रिधा चैव विराजमानं तं देवमाद्यं शरणं श्रयेऽहम् ॥ १७२ ॥

पूर्णः प्रपूर्णोऽपि च सर्वशून्यः शून्येन शून्यो भगवान् सदा यः ।
सर्वस्य शून्यस्य च सारभूतं विभुं प्रपन्नोऽस्मि सदा तमेकम् ॥ १७३ ॥

परोक्षवादेन तु खिन्नचेताः प्रत्यक्षतां त्वय्यधिरोप्य देव ।
वच्मीव किञ्चिन्ननु मूढभावात् सर्वंसहे सर्वदयानिधाने ॥ १७४ ॥

शङ्काऽथ येयं मम का त्वमेव स्वे नास्यहं नास्मि तु किञ्चिदेव ।
ममाभिमानोऽपि तवैव भूतिरत्राभिमानेऽपि नु को वृथाऽयम् ॥ १७५ ॥

करोमि यद् यत्त्वहमेतदत्र करोषि तत् त्वं खलु कोऽहमत्र ।
अस्म्येव यद्वा ननु कस्तदा त्वं मयि स्थिते द्वौ नहि युक्तिसिद्धौ ॥ १७६ ॥

युष्मत्प्रयोगः खलु नैव युक्तस्त्वय्यस्ति भिन्नोऽसि हि नैव जातु ।
तस्याप्रयोगे ननु कोऽयमस्मत्प्रयोग एष प्रतियोगिसिद्धः ॥ १७७ ॥

मौनं च नो युक्तमिहास्ति मौनान्मौनं च जाड्याश्रितसख्यमेतत् ।
यद् यत्करोम्येव करोषि वापि तत् तत्करोष्येव करोमि चाहम् ॥ १७८ ॥

त्वया कृतं यन्मम तत्कृतं स्यान्मया कृते त्वत्कृतता स्फुटैव ।
तथापि हे त्वत्कृततैव चित्ते सर्वत्र भाताऽस्तु ममेश भक्त्या ॥ १७९ ॥

भक्तिर्ममैषाऽपि च तेऽस्ति कार्यं करोमि किं नास्ति हि सापि मेऽत्र ।
अहं च नास्म्येव ममेह लोके भिन्नेषु कोऽयं मम भाति मानः ॥ १८० ॥

अस्त्वेव सोऽप्यत्र तु नास्ति मेऽसौ कोऽप्येव दोषो मम नास्ति तत्र ।
नान्यस्य कार्येण हि कार्यवत्त्वं दृष्टं कदाचिज्जगतीह लेशात् ॥ १८१ ॥

दोषेण चाप्यत्र नयेऽस्ति दोषो नास्म्येव यत्कोऽपि ऋते त्वयाऽहम् ।
तन्नासनं चापि ममास्ति नैव यदासनं तेन भवेद् द्विधाऽत्र ॥ १८२ ॥

कार्यं ममैवास्त्वथवा समस्तं त्वयैव येनास्म्यहमत्र कोऽपि ।
लीनस्तरङ्गो जलमात्ररूपो जलस्य कार्येण हि कार्यवान् स्यात् ॥ १८३ ॥

लयोऽस्त्ययं यस्त्वयि सैव सत्ता सत्ता स्वकीया ननु नष्टैव ।
सत्तेति लीना सततं महान्तः स्थिताः पदे स्युस्तव चित्स्वरूपे ॥ १८४ ॥

ममापि देवेश विलीनताऽस्तु सदैव शान्तेऽत्र भवत्स्वरूपे ।
समाधिकाले भवतैव सिद्धे व्युत्थानकालेऽपि भवत्प्रसादात् ॥ १८५ ॥

पूर्णे स्वरूपेऽस्त्वथवा तवात्र निष्ठा ममैषा भवतैव दृब्धा ।
केयं च वा भेददशाऽस्ति युष्मच्छब्देन षष्ठ्यन्ततया निरुक्ता ॥ १८६ ॥

यां यां दशां यामि तथा करोमि यद्यत्त्वया प्रेरित एष देव ।
सर्वेण तेनास्तु विभो स्वरूपलाभः परं मे ननु यस्य तस्य ॥ १८७ ॥

स्वरूपलाभस्त्वथवाऽस्ति कोऽयं लब्धस्य लाभो नहि कोऽप्यपूर्वः ।
लब्धत्वमेतच्च न जातु युक्तं किं केन लभ्यं परमाद्वयेऽत्र ॥ १८८ ॥

अलब्धिरेषापि तरां न युक्ता गन्धो यतः स्फूर्तिमथैति लेशात् ।
आस्वादरूपः कथमन्यथा स्याद् प्रेमात्मनिष्ठं सहजं सदान्तः ॥ १८९ ॥

गन्धेन लब्धे तदहं त्वयीश विज्ञापयाम्येव विमूढभावात् ।
किञ्चित् तदेतत् कुरु कर्णदेशे शृणोष्यकर्णोऽप्यथवा दयातः ॥ १९० ॥

लग्नोऽस्म्यवान्तरदशासु विभो किमेतत्
विश्रान्तिरेव मम काचिदिहास्ति नैव ।
स्थानं परं यदि लभे भगवन्न ते तद्
हास्यं भवेत्किल महद् वद कस्य सत्यम् ॥ १९१ ॥

शक्तोऽसि देव दयया च सदैव युक्तः
सर्वज्ञतां तव वदन्ति तथा महान्तः ।
आर्तं निमग्नमिह मां विषयावटेषु
हित्वा समुद्धरति को भगवन् भवन्तम् ॥ १९२ ॥

या त्वत्पदाप्तिविषया महती स्पृहा साऽ-
प्यस्त्येव ते परदृशा मम काऽत्र शक्तिः ।
सा चापि मेऽस्ति विषयेषु परं तवैव
रूपेषु किं मम मनः सततं दुनोषि ॥ १९३ ॥

किं वा न रूपमिह ते विषयाः स्युरेते
किं वा दृगेव तिमिरेण हृता ममास्ति ।
स्वात्मीकुरुष्व विषयानथवा दृशं मे
नैर्मल्यमेव नय हा त्वरया हतोऽहम् ॥ १९४ ॥

तापोऽस्ति मे यदि परं तव हर्षदोऽसौ
अस्त्वेव तद् बत वदामि किमेव नष्टः ।
नाशोऽपि मे यदि तवास्ति विनोदहेतु-
स्तल्लाभ एष परमो मम नो विनाशः ॥ १९५ ॥

दासैः कथञ्चिदपि यत् प्रभवः प्रसन्नाः
कार्या निजं पदमथो खलु ते दिशन्ति ।
तेभ्यः स्वयं हृदय ते किमिवास्ति चिन्ता
चिन्ताऽपि वाऽस्तु तव साऽपि विभोः प्रसादः ॥ १९६ ॥

यत्किञ्चिदेव ननु चित्तपदे ममेश
स्फूर्तिं व्रजेत् खलु तथैव तदस्तु पूजा ।
बाह्योऽपि यद् भवति दैववशेन तेन
सैवास्तु केवलमियं त्वयि याचना मे ॥ १९७ ॥

एतत् सदैव मम संस्फुरतात् प्रदेशो
चित्तस्य देव न तु कर्हिचिदेव लेशात् ।
वाङ्मात्रतस्तव भवेत् करणीयमेव
तत् तत्करिष्यसि कृतं मम चोदनाभिः ॥ १९८ ॥

अत्रापि यद्यपि भवेदयमेव देव
न्यायस्तथापि मम याचनमेतदस्तु ।
चित्तं स्वभावविभवे नयते जनस्य
वाञ्छाभिपूरिततरं भवतैव दृब्धम् ॥ १९९ ॥

बालो यथा निजकरं दहने क्षिपन् स्वैः
पित्रादिभिर्वृतकरो बहु रोदितीह ।
तद्वत् तवेश चरितैः कृतरोदनाः स्मो
बालत्वमेव समवेक्ष्य दयां कुरुष्व ॥ २०० ॥

बालत्वमेतदपि नस्तव कार्यमेव
नैवास्ति नः किमपि येन महाभिमानः ।
युक्तो भवेत् तदभिवीक्ष्य समस्तमेतद्
यद् योग्यमेव कुरु तत् स्वयमेव विज्ञः ॥ २०१ ॥

किं चोदनाभिरफलं तु कृताभिराभिः
शङ्के दया परवशो भवतीश मौढ्यात् ।
दासस्य शक्तिरिह का प्रभुचोदनासु
जानाति यद्धितमयं कुरुते स्वयं तत् ॥ २०२ ॥

कृतं दीनोक्तिकथनैर्लाघवावहताचणैः ।
प्रभोरुत्कर्षकथनान्नेयं वाग् विनिवर्तते ॥ २०३ ॥

प्रभो किं त्वं स्वस्मिन् परिमितिविहीने परपदे
न मास्येवेदं यत् तदपरपदं यासि विवशः ।
अथो न्यूने स्वल्पे किमपरपदे स्फूर्तिरिह ते
न जाने किं स्थानं श्रयसि ननु तस्मादपि गतः ॥ २०४ ॥

न ध्यानं वा नित्यं भवति च निजात् ते परपदात्
सदा सर्वत्रैव स्थितिरिव यतस्तेऽस्ति नियता ।
तदेतत् सर्वं स्यात् परपरतया भूषितमलं
महास्थानं त्वेकं कृतमिह परत्वादिकलनैः ॥ २०५ ॥

तदेकत्वं किं वा भवति च भृशं भेदकलितं
द्वितीयं यत् तत्र स्फुरति नियमेनैव किमपि ।
द्वितीयं वा चैतत् स्फुरतु च ततो हानिरिव का
परत्वं तत्रालं रचयति तृतीयं परपदे ॥ २०६ ॥

पदं त्वत्तो भिन्नं न भवति तवैतत् स्वयमतो
निजाधाराधेयो न भवसि ततो भेदगलनात् ।
यमाधारं वा ते कलयति जनो भेदनिरतः ।
स एवाधेयत्वं भजति भवतीशे ह नियतम् ॥ २०७ ॥

समस्तं त्वय्येतत् त्वमपि च समस्ते भवसि यत्
न तेनाधारत्वं व्रजसि न च वाऽऽधेयकलनाम् ।
समस्तं त्वाधारो भवतु च तथाऽऽधेय इह वा
न भिन्नं त्वत्तस्तत् परमिति ततो धीः स्फुरति नः ॥ २०८ ॥

तदन्वेषां कुर्मः कथमिव तवैतां स्थितवतो
न कुत्राप्येनालं कृतमथ तथा भेदहृतया ।
यदा यत्किञ्चिन्मे स्फुरति ननु यत्रैव नियतं
तदेतत् ते रूपं स्फुरति परचित्स्फारवपुषः ॥ २०९ ॥

न देशः कालो वा भवति नियतः कोऽपि ननु ते
न चाकारं कञ्चिद् भजसि नियतं रूपरहितः ।
कदा कुत्रातस्त्वां किमिव कलयामीह तदियं
प्रतिज्ञा यत्किञ्चित् स्फुरति तदिदं त्वं चितिवपुः ॥ २१० ॥

भवद्भिन्नं किञ्चित् स्फुरति तु यदेतत् तव परं
विभूतेः प्राग्भारो भवति स यतस्तेऽस्ति वरता ।
स्वतो भिन्नानां यद् भिदिविषयताभावनमिदं
स्वतन्त्राणां युक्तं च न जगति भूतिर्भिदिपदम् ॥ २११ ॥

अभेदो भेदो वा भवतु नियतः स्याद् द्वयमिदं
महापूर्णे भातं त्वयि परचितौ चेत्यभरिते ।
महोत्कर्षस्तत् ते परमिह परेषां तु यदसौ
त्वदैक्येनैवालं नहि बहु मनोऽप्यत्र निपुणम् ॥ २१२ ॥

यदेवंरूपस्त्वं भवसि तु ममात्मा ननु ततो
नमाम्येव स्वात्मन्यपि परमुदा स्वन्तरहिते ।
श्रये तत् किं स्थानं नहि पृथगिहास्त्येव ननु यद्
भवत्तः स्वस्मात् तत् त्वयि मयि पदे शान्तिरचिता ॥ २१३ ॥

वदात्मंस्त्वं पूर्वं कथमिव तथाऽभूर्ननु कुतः
प्रयाता सा सत्ता तव परिगतेऽस्मिन् परपदे।
भ्रमाद् पूर्वं दृष्टा परिमिततयाऽद्यैव यदि वा
विभात्यन्यैवेयं वद वद विमोहोऽत्र मम यत् ॥ २१४ ॥

अहो शान्ते रूपं किमिव परमं यत्र किमपि
विभात्येवात्माऽयं पर इह भवन् नैव ननु मे।
अभातोऽलं सोऽयं भवतु मम यत् कोऽपि परमो
विभातस्तत्स्थाने परमिह स एवास्मि न परः ॥ २१५ ॥

अशान्तिश्चाप्यास्तां किमिव कुरुतेऽसौ मम यतः
स्वतो भिन्नं किञ्चिद् त्रिजगति न भात्येव नियतम्।
न तस्मात् तस्यालं भयमिह कदाचित् समुचितं
द्वितीयस्माद् यस्माद् भयमिह भवेद्धानिरिव का ॥ २१६ ॥

स ईशो जीवोऽहं किमिति मम पूर्वं समभवद्
भ्रमो येनैनं त्वां परिमिततयाऽज्ञासिषमहम्।
स ईशः सोऽहं स्यामिति परदशाऽहं स इति वा
विभेदः कोऽयं वाऽहमिति हि परं युक्तिकलितम् ॥ २१७ ॥

अहं त्वं रूपे नो क्वचिदपि कदाचित् समुचिते
पदेऽवाच्ये तस्मिन् न कलिततरे वाचकगणैः।
अहं त्वं कौ स्वस्तद् वद वद विभो मौनमिह हे
तवाप्यास्ते कोऽहं कथयितुमिदं युक्तिनिवहैः ॥ २१८ ॥

अहं चिरेणास्म्यहमेष नाहं नाहं कदाचिन्ननु सत्यमेतत्।
नाहं यदाप्यस्मि तदापि नाहं वेद्यत्वमायामि कदापि यत् त्वम् ॥ २१९ ॥

त्वं चापि देवासि चिरेण मे त्वं जातोऽसि तत्त्वेन कदापि न त्वम्।
न त्वं भवन् वापि कदापि तत्तां नो यासि यस्मादहमेव भासि ॥ २२० ॥

अहं त्वहं नैव तथा भवांस्त्वमावां यतोऽत्रैकतया स्थितौ स्वः।
अस्मत्प्रयोगस्त्वथवा स एव द्वयोः प्रयोगे खलु शब्दशास्त्रे ॥ २२१ ॥

इदं प्रयोगस्त्वथ तत्प्रयोगो मूढेषु तज्ज्ञेषु न तौ कदाचित्।
यत्रास्ति न त्वंपदवाच्यताऽपि तत्रानयोः का भवतीह चर्चा ॥ २२२ ॥

इदंतदोर्युष्मदि लीनता स्यात् तस्यास्मद्येषा ननु योग्यताभाक्।
सहप्रयोगे खलु तत्र शब्दशास्त्रं प्रमाणं स्फुटमेव दृष्टम् ॥ २२३ ॥

भावाः समस्तास्त्वयि लीनसारा अहंपदे त्वं च विलीनमूर्तिः ।
अहं च लीनः प्रतियोग्यभावात् कः स्तौति कं ब्रूहि महाद्वयेऽत्र ॥ २२४ ॥

स्तुतिश्च का स्यान्ननु भावरूपा भावा गताः पूर्वतरं यतोऽमी ।
अविद्ययेयं स्तुतिरेवमेषाऽद्यापि स्थिता किं करवामहेऽत्र ॥ २२५ ॥

सद्योऽस्तु वा सर्वं इह प्रपञ्चो महादृशां हानिकरः किमेषः ।
स्तुत्याऽनया मूढजना विशुद्धिं चित्ते प्रयास्यन्ति न संशयोऽत्र ॥ २२६ ॥

मध्यस्थितानां परमेव भेदवैमुख्यभाजां भवतीह लेशात् ।
हानिस्तथाप्येव महोपकारयुक्ता भवेयुर्ननु मूढलोकाः ॥ २२७ ॥

मध्यस्थिताश्चैव निवृत्तिभाजः
पदं गताः स्युर्निजयैव बुद्ध्या ।
का नोऽस्ति तेषां ननु देव चिन्ता
सान्निध्यभाजां परमे पदे ते ॥ २२८ ॥

दयानिधानैर्हि सदाऽनुकम्प्या मूढाः स्युरेते परमेव युक्त्या ।
तज्ज्ञाः स्वयं तत्पदलब्धियोग्या भवन्ति नो चेन्ननु ते त एव ॥ २२९ ॥

मूढं स्वचित्तं विषयैकमग्नमुद्धर्तुमेषा परमा कृतेयम् ।
स्तुतिर्मया सर्वजनस्य चित्तं तयोपकारैकपदं सदा स्यात् ॥ २३० ॥

इत्याशंसां तु मे देव सफलीकर्तुमर्हसि ।
मायापदे हि भेदेन ग्रस्ते साऽपि च शोभते ॥ २३१ ॥

भक्तश्च भक्तिश्च सदा त्वमेव त्वमेव सर्वैर्भजनीयरूपः ।
अस्त्येव तत्रापि च मेऽस्तु भक्तिस्त्वयीश नित्यं ननु तत्फलेयम् ॥ २३२ ॥

भक्तत्वमेतद् भजनीयभावाच्छ्रेष्ठं बुधैः कीर्तितमेव प्राच्यैः ।
शिवोऽन्यथाऽयं स्वमुपासितुं नो यायात् प्रमातृत्वमुपासनार्हम् ॥ २३३ ॥

मुक्तेर्भक्तिस्तथा श्रेष्ठा भवत्येव न संशयः ।
मुक्तेरास्वाद एको हि भक्तेर्नानाविधः स्थितः ॥ २३४ ॥

अभक्तिरेवापि च याऽस्ति साऽपि भक्तिर्भवत्येव महेश्वरेऽत्र ।
अभक्तिमेतां किल लोक एष भक्त्यैव कुत्रापि कयाऽपि कुर्यात् ॥ २३५ ॥

किञ्चात्ममात्रैकरतो जनोऽयं सर्वत्र नातत्किमपीह तस्य ।
सेव्यं ततः सर्वं इहास्ति लोको भक्तः शिवस्यैकक्रुतः प्रपञ्चैः ॥ २३६ ॥

भक्तिस्तथा भक्तिरियं स्थिता स्याद् यस्याः सदान्तः खलु पूर्णरूपा ।
भवेन्महाभक्तिरियं तु कापि महात्मनां या भजनीयरूपा ॥ २३७ ॥

भक्त्यैव योत्कृष्टतयाऽस्ति वाचा निर्दिष्टिराद्ये भजनीयभूते।
सेयं स्तुतिः स्यान्नतिरेव वाच्या यस्या महार्घा फलतोऽथ साक्षात् ॥ २३८ ॥

अन्योक्तवादो ननु योऽस्ति लोके रुद्राश्रुणो भूतिकथादिरूपः।
रूप्यस्य सोऽयं ननु नात्र पक्षे यदस्त्यसौ चाणुतया प्रसिद्धः ॥ २३९ ॥

कायेन पूर्वं नतिरत्र कार्या महेश्वरे स्वात्मतया प्रसिद्धे।
स्तुतिस्ततो वाङ्नतिमात्ररूपा लयोऽथ तत्रैव च भावनीयः ॥ २४० ॥

ततो महाहङ्कृतिकर्तृभावरूपो नमस्कार इह प्रदिष्टः।
रूढोऽत्र यः सोऽस्ति परात्परोऽयं शिवः किमन्यन्ननु वाच्यमत्र ॥ २४१ ॥

विनार्थयोगं तु कृताऽपि सेयं स्तुतिर्विभुं ह्लादयतीव सत्यम्।
विनार्थयोगं हि शुकोदिता वाग् राज्ञां मनो रञ्जयतीह सम्यक् ॥ २४२ ॥

वाचिकोऽयं नमस्कारः स्तुतिरूपो मया स्फुटम्।
निर्णीतोऽत्र प्रकरणे चित्तशुद्धिविधायकः ॥ २४३ ॥

इति श्रीमदाराध्यतमाचार्यवर्य-श्रीगुरुवरराजानकभास्करकण्ठविरचिते चित्तानुबोधाख्ये महाशास्त्रे स्तुतिरूपवाचिकनमस्कारनिर्णायकं सप्तमं प्रकरणं सम्पूर्णम्। इति शिवम् ॥ ७ ॥

## अष्टमं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः ।
ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः ।
ॐ तद्द्वयसामरस्यरूपायै गुरुपादुकायै नमः ।
ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः ।

ॐ नमस्कारप्रभावेण या चमत्कारजृम्भणा ।
स्वान्तः स्फुरति तत्कर्तुर्मयेयं सा प्रदर्श्यते ॥ १ ॥

प्रदर्शनं स्फुटतया यद्यप्येव न युज्यते ।
तस्यास्तदपि लेशेन किञ्चिदुन्मील्यते मया ॥ २ ॥

विमुखानां तु साम्मुख्यं कर्तुं नान्येन हेतुना ।
यत्नोऽयं श्रुतमाधुर्यः खण्डादौ हि प्रवर्तते ॥ ३ ॥

कायिकस्य तथा वाचिकस्य शोधनहेतुता ।
चित्तस्य केवलं तत्राऽऽस्वादचर्चा न युज्यते ॥ ४ ॥

त्रयस्यान्यस्य तु स्वादहेतुत्वेनैव सस्थितेः ।
तत्कृताऽऽस्वादचर्चेयं तन्यते विस्तरादिह ॥ ५ ॥

नात्राऽऽस्वादोऽस्ति खण्डादिद्रव्यास्वादसहोदरः ।
विषयास्वादभावेन परापेक्षाकरो हि सः ॥ ६ ॥

न चाङ्गनासमासङ्गसम्पादितसुखोपमः ।
पर्यन्ते दुःखकार्ये स्यात् येन वैरस्ययोगतः ॥ ७ ॥

मदिरोन्मत्ततारूपो न चास्ति यदसौ ततः ।
क्षणनाशी तथोन्मार्गप्रवृत्तौ स्यात् सुसाधनम् ॥ ८ ॥

द्रव्यलाभकृतास्वादकथा नात्र विराजते ।
उपेयरूपो नैवास्ति द्रव्यलाभो यतः स्फुटम् ॥ ९ ॥

आस्वादोऽत्रास्ति कोऽप्यन्तर्महतामतिशोभनः ।
वाचा वक्तुं न शक्यो यः परं तेनैव तद्गतिः ॥ १० ॥

तेनापि नैव वा तत्र गतिस्तस्य यतोऽस्ति सः ।
गम्यतां समतिक्रान्तस्तत्तदतत्कलनातिगः ॥ ११ ॥

मनसोऽपि गतिर्नात्र दाहके तस्य तत्क्षणात् ।
आस्वादानुभवे चित्तं क्षणादेव हि दीयते ॥ १२ ॥

वाचो वागत्र दूरेण विकल्पानुपदं हि सा ।
स्फुरत्येव न सोऽस्त्यत्र बीजाभावे तु कोऽङ्कुरः ॥ १३ ॥

स एव योऽस्ति का तस्य गतिस्तत्ताजुषस्ततः ।
प्रमाताऽऽस्वादरूपोऽयं परप्रेमास्पदं यतः ॥ १४ ॥

तत्तायाः कथनं चात्र तदन्तर्गतरूपया ।
षष्ठ्या भेदैकविषयस्तुलापेक्षितयाऽथ कम् ॥ १५ ॥

केवलं तत्पदं चात्र योग्यतां कथमावहेत् ।
स्मर्यमाणैकविषयमात्मा ह्यनुभवास्पदम् ॥ १६ ॥

आस्पदत्वं च नैवास्य योग्यं भवतु जातुचित् ।
तदास्पदत्वं तस्यैव ह्यात्माश्रयविदूषितम् ॥ १७ ॥

अहंशब्दास्पदं वाऽपि कथं स स्याद् यतोऽस्य सः ।
इदन्तास्पर्शभागी तद् विकल्प्यत्वं प्रसाधयेत् ॥ १८ ॥

पराहंशब्दवाच्यः स्यात् स इत्येव विनिश्चयः ।
आस्वादानामकथनं तत्रायुक्तं स्फुटं ततः ॥ १९ ॥

अनाम्नो व्यवहारोऽत्र न सिद्ध्येदिति पण्डितैः ।
तैलपायिकसंज्ञावद् रूढ्या कल्पितमत्र तद् ॥ २० ॥

बाह्यास्वादाच्च नैवास्य रूपे भेदोऽस्ति कश्चन ।
किं रूपाद्धि कृताद् दोषाद् भेदोऽत्र समवस्थितः ॥ २१ ॥

वस्त्वास्वादस्य काले हि तद्वस्त्वर्थितया भृशम् ।
सर्वविस्मरणात् स्वात्मनिष्ठा सर्वस्य जायते ॥ २२ ॥

सैवाऽऽस्वादतया स्फूर्तिं व्रजत्येव न संशयः ।
तत्रावधाननिष्ठानामात्मस्फूर्तिः प्रजायते ॥ २३ ॥

१"द्रष्टृदृश्यसमायोगात् प्रत्ययानन्दनिश्चयः ।
यस्तं स्वमात्मतत्त्वोक्तं प्रत्ययं समुपास्महे" ॥ २४ ॥

इत्येवं श्रीवशिष्ठेनाप्युक्तं शास्त्रे निजे स्वयम् ।
अवधानरता तस्माद् बाह्यास्वादे निजात्मगाः ॥ २५ ॥

---

१. योगवासिष्ठे ।

महातज्ज्ञाः सर्वकालं, सर्वत्र सर्वथा ; तथा ।
आत्मैकदर्शिनः स्वस्था अवधानं तु तेषु किम् ॥ २६ ॥

अज्ञास्तु तां स्वाददशां वस्तुकार्यतया भृशम् ।
मन्वाना वस्तुनिष्ठाः स्युस्ततो दुःखं व्रजन्ति च ॥ २७ ॥

स्वरक्तविषयं स्वादं शुष्कास्थिविषयं यथा ।
श्वा जानाति तथा मूढः स्वादं विषयसंभवम् ॥ २८ ॥

विषयास्वादमात्रेण येऽभिमानं भजन्ति वा ।
आत्मास्वादस्य तेषां तु क उद्धारे क्षमो भवेत् ॥ २९ ॥

ते चापि यदि वस्तुभ्य उत्थिताः काऽस्ति वा क्षतिः ।
नोत्थिताश्चेत् ततस्तेषां तदपेक्षा महार्तिकृत् ॥ ३० ॥

सत्यतो विषयासक्तैरुक्तानां नैव शक्यते ।
तेभ्यः कर्तुं हि कूर्मान्तः कस्तस्मान्मुच्यते पुमान् ॥ ३१ ॥

मुक्ता वा स्युः प्रभावेण स्वात्मनः काऽस्ति नः क्षतिः ।
तेषां च स्वमनःसाक्षितया तत्र स्थितं यतः ॥ ३२ ॥

अलं विषयचर्चाभिर्नाममात्रेण देहिनः ।
स्वावेशकृतिदक्षाभिरात्मास्वादकथान्तरे ॥ ३३ ॥

आत्मास्वादेऽस्ति दृष्टान्तो लोके नैव तु किञ्चन ।
धारावतारविहिता विश्रान्तिस्तत्र लेशतः ॥ ३४ ॥

महाश्रान्तस्य परमा दृष्टान्तत्वं भजेदियम् ।
एकस्मिन् हि क्षणे तत्र काऽप्यवस्था प्रजायते ॥ ३५ ॥

रत्याऽपि विषयास्वादो यद्यप्यस्त्येव सा क्षणम् ।
तथाप्यजगताक्रान्तनिधिवत् सा भृशं हृता ॥ ३६ ॥

भारावतारविश्रान्तौ मध्येऽन्तर्धानमागता ।
स्वभावभूता विश्रान्तिर्व्यज्यते नादृता पुरा ॥ ३७ ॥

अन्तर्ध्यनन्तरं द्वे(त्वे)षा व्यक्तादृतिपदं गता ।
जातेति प्रोच्यते मूढैस्तज्ज्ञेषु सर्वदा स्थिता ॥ ३८ ॥

अन्तर्धिरस्या नैवास्ति योग्या यद्यपि सुस्फुटम् ।
आस्वादान्तर्धिरेषा हि महास्वादविजृम्भितम् ॥ ३९ ॥

तथापि मूढविषये युक्तान्तर्धेः कथा यतः ।
ततः सा प्रोच्यते ते हि नासु योग्याः कथास्वलम् ॥ ४० ॥

प्रौढिं यातास्तु कालेन तेऽत्राप्येव जनाः सुखम् ।
योग्याः स्वयं भवेयुर्यन्मार्गस्थो नावसीदति ॥ ४१ ॥

अत्रास्वादे निमग्ना ये विषयास्वादभाजनम् ।
न ते जातु भवेयुर्यत् तदास्वादरताः सदा ॥ ४२ ॥

बाह्यास्वादोऽपि वा तेषां प्रवाहेनागतः क्वचित् ।
तत्त्वेनैव स्फुरत्युक्तो नान्यथेति विनिश्चयः ॥ ४३ ॥

यथा जाररता नारी स्वपत्या सह सङ्गमे ।
जारभावनया जारसङ्गास्वादयुता भवेत् ॥ ४४ ॥

तथान्तरमहास्वादप्राप्तनिष्ठा महाधियः ।
बाह्यास्वादमिमं सर्वं तत्त्वेनानुभवन्ति भोः ॥ ४५ ॥

दृष्टान्तेऽत्राभिमननं कल्पनामात्रतः स्थितम् ।
दार्ष्टान्तिके तु सहजस्वरूपप्राप्तिहेतुतः ॥ ४६ ॥

दृष्टान्तदार्ष्टान्तिकयोः साम्यं स्तोकेन यत् स्फुटम् ।
न साकल्येन कुत्रापि तत्त्वे नो साम्यकल्पना ॥ ४७ ॥

श्रृङ्गाराद्या रसाश्चैव तरङ्ग इव संस्थिताः ।
महास्वादार्णवश्चैव विषयास्वादतावशात् ॥ ४८ ॥

रत्यादेः स्थायिनः षष्टिविभावादिवशेन या ।
स रसो विषयास्वादरूप एव न संशयः ॥ ४९ ॥

रतिः कान्तादिविषया कान्ताविषयरूपिणी ।
विषयास्वाद एवैष भङ्ग्याऽतः कथितो भवेत् ॥ ५० ॥

विषयास्वाद एषोऽपि तद्रूप इति सुस्फुटम् ।
पूर्वमुक्तं न कोऽप्यत्र संशयो निश्चयापहः ॥ ५१ ॥

आस्वादोऽपि च यः सोऽयं स्वाद एव बुधैः स्मृतः ।
विशेषभावतस्तस्य माधुर्यादिर्यथा स्फुटम् ॥ ५२ ॥

उपाधित्याग एषोऽत्र दुष्करोऽस्ति जनैः सदा ।
हंसस्यैकस्य सा शक्तिर्यत् क्षीरोद्धरणं जलात् ॥ ५३ ॥

भावविस्मृतिरेवेह प्रोक्ता स्वादविजृम्भणा ।
विस्मारणं वा जाड्यं यद् विस्मृतौ सहजं स्थितम् ॥ ५४ ॥

स्वस्यापि विस्मृतिर्या स्यादथो विस्मारणं च वा ।
आस्वादः परमोऽस्त्येष भावैः स्वात्मा हि दुःखभाक् ॥ ५५ ॥

विस्मारणं च नैवात्र बाह्यविस्मारणात्मकम् ।
किन्त्वेतद् वेद्यतामात्रवैमुख्यं केवलं स्थितम् ॥ ५६ ॥

भावेषु स्वात्मविषये वेदकत्वनिवारणम् ।
वेद्यवेदकभावो हि केवलं दुःखदः स्मृतः ॥ ५७ ॥

भावा अवेद्यतां याता आत्माऽवेदकतां तथा ।
सच्चिदानन्दरूपाः स्युः सुप्तिस्तत्र निदर्शनम् ॥ ५८ ॥

स्वरूपतस्तु नाशो नो योग्यो भावेषु कर्हिचित् ।
न चात्मनो यतः प्रोक्तं "नाभावो विद्यते सतः"[1] ॥ ५९ ॥

वेद्यवेदकतामुक्ताः स्वमात्रेऽवसिताः परम् ।
भावाः स्वात्मापि चास्वादरूपास्तिष्ठन्ति केवलम् ॥ ६० ॥

आस्वादमात्रतां यातास्ते च भेदेन भान्ति नो ।
भेदः कस्तोयराशेः स्याद्धिमोत्काज्जलराशितः ॥ ६१ ॥

आस्वादोऽत्र न वेद्योऽस्ति भाववज्जडताक्षतेः ।
नापि भेदकरूपोऽयं वेद्याभावाद् विशेषतः ॥ ६२ ॥

वेद्यवेदकतामुक्तः परमोऽत्र विराजते ।
विराजनं च तस्येदं न स्वभावाद् विभेदभाक् ॥ ६३ ॥

अत्रास्वादे रता ये स्युस्ते तून्मुखतया स्थिताः ।
सदा भवेयुर्यत् स्वात्ममात्रं तेषां परायणम् ॥ ६४ ॥

भावाविमुख्यकालेऽपि तेषां स्वादचमत्कृतिः ।
न निर्यात्येव हृदयात् स्वरूपे लीनतां गता ॥ ६५ ॥

नहि भिन्नं स्वरूपं स्याज्जातु कस्यापि लेशतः ।
भिन्नं भवत् स्वरूपत्वं नार्हत्येव कदाचन ॥ ६६ ॥

भावा अपि सदा तेषां स्वात्मभावेन संस्थिताः ।
स्वात्मवत् परमास्वादविषयत्वेन संस्थितेः ॥ ६७ ॥

अथवा सर्व एवैते भावाः स्वात्मा च सर्वशः ।
पृथक् पूर्णतया भाताः कुर्युः स्वानन्दपूरणम् ॥ ६८ ॥

यथा यथा यत्र यत्र यो यो भावो यथा यथा ।
तथा तत्र तदा सोऽस्य महानन्दकरः स्मृतः ॥ ६९ ॥

---

१. गीता २।१६ ।

आनन्दकरणं चात्र नो युक्तं भेददूषितम् ।
योगी हि स्वयमानन्दो भावाश्चास्य तथा स्थिताः ॥ ७० ॥

आनन्दभावतो यातो निरानन्दपदाद् गतः ।
महानन्दोऽस्ति कोऽप्यस्य योगिनः परमं वपुः ॥ ७१ ॥

जगदानन्द एषोऽथ सर्वतः प्रविजृम्भते ।
योगिनः सर्वभावेषु पूर्णदृष्टिं प्रकुर्वतः ॥ ७२ ॥

दृष्टेश्च करणं किं स्याद् वुधा अस्मिन् महाद्वये ।
सिद्धे वस्तुनि साध्यत्वं न सम्भवसहं स्मृतम् ॥ ७३ ॥

तथापि देहपर्यन्तं करणं चापि युज्यते ।
देहस्वभाववशतो देहो हि दोषदः स्मृतः ॥ ७४ ॥

महाद्वये त्वपूर्णत्वं महास्वादकरं भवेत् ।
तत्पूर्णत्वं परां काष्ठां नयत्येव ह्यपूर्णता ॥ ७५ ॥

अतो महाद्वये पूर्णे स्वादास्वादौ समौ स्मृतौ ।
महास्वादैकनिष्ठत्वात् पानके मरिचादिवत् ॥ ७६ ॥

महाऽद्वये स्थितिमतां न साऽवस्थाऽस्ति या स्फुटम् ।
महाविश्रान्तिरहिता भवेत् तत् ते महाशयाः ॥ ७७ ॥

सदा सम्पूर्णहृदया भवन्त्येव स्वभावतः ।
अपूर्णा इव तत्रापि ते स्थिता अस्मदादिवत् ॥ ७८ ॥

अपूर्णा वा सुपूर्णा वाऽवस्था तेषां विराजते ।
अतिपूर्णतया नित्यं याऽस्माकं नास्ति गोचरे ॥ ७९ ॥

पूर्णोऽत्र भरितो लोके प्रोच्यते स्वेतरेण यत् ।
योगिनां पूर्णता तस्माद् नास्माकं गोचरे स्थिता ॥ ८० ॥

तेषां स्वात्मैव सर्वं स्यादन्यथा योगिता कथम् ।
भवेत् स्वेनैव पूर्णे स्वे पूर्णता केव कथ्यताम् ॥ ८१ ॥

तृप्तत्वं यदि पूर्णत्वं तच्चाप्यत्र न युक्तिमत् ।
कः केन तृप्तो ब्रूताऽत्र पदे परशिवात्मके ॥ ८२ ॥

तेनैव तस्य तृप्तत्वं न कदाचिच्छ्रुतिं गतम् ।
जलस्य जलतृप्तत्वकथनं हास्यकृद् यतः ॥ ८३ ॥

अब्धेस्तु जलतृप्तत्वकथनं भेदहेतुतः ।
अब्धेर्हि कोऽपि देशोऽस्ति जलं तत्रास्ति भेदतः ॥ ८४ ॥

तृप्तिश्चेतनधर्मोऽस्ति न जडेष्वस्ति तत्कथा ।
उपचारेण तत्रास्याः प्रयोगो न तु मुख्यतः ॥ ८५ ॥

उपचारेण सिद्धानां दृष्टान्तत्वोपपादनम् ।
मौर्ख्यमेवाभिषिद्धामः कं दृष्टान्तपदे ततः ॥ ८६ ॥

चेतनो नैव कोऽप्यस्ति लोके परशिवादृते ।
तस्य दृष्टान्तभावोऽयं तं प्रत्येव न युक्तिमान् ॥ ८७ ॥

तृप्तिभावेन पूर्णत्वकथनं तत्र युज्यते ।
अतिशब्दप्रयोगेणानुत्तरत्वं श्रयेत् तु तत् ॥ ८८ ॥

प्रयुक्तं नैव दोषाय कुशकाशावलम्बनात् ।
कुशकाशालम्बनं चानुत्तरे युक्तिमद् यतः ॥ ८९ ॥

अतिपूर्णत्वमास्वादपराकाष्ठा बुधैः स्मृता ।
सा सर्वेषां स्वयं सिद्धा योगिनां तु विशेषतः ॥ ९० ॥

सत्तायां पूर्णतायास्तु न विशेषः कदाचन ।
ज्ञानमात्रं विशेषोऽत्र योगिता तेन केवलम् ॥ ९१ ॥

न ज्ञानं श्रुतिमात्रं स्याद् हृदयेऽन्तःस्फुरा हि या ।
पूर्णत्वस्य तदेतत् स्याज्ज्ञानं योगिजने स्थितम् ॥ ९२ ॥

योगिनो हि महातृप्तिमयाः पूर्णतया स्थिताः ।
सर्वदैव भवन्त्येव स्वयमेव न संशयः ॥ ९३ ॥

भोगतृप्तेरतृप्तत्वं पूर्वमेव तु साधितम् ।
नायस्यते पुनः को हि पिष्टपेषणविभ्रमः ॥ ९४ ॥

आरोपिता भवन्त्येवमुपचारेण दूषिताः ।
सर्वथाऽलौकिका धर्मा पदे परशिवात्मके ॥ ९५ ॥

तेनैव दत्तसत्तेषु धर्मैर्भाविषु संस्थितैः ।
कथं तस्यैव धर्मित्वं युज्यते कर्तुमञ्जसा ॥ ९६ ॥

सम्राजा दत्तविभवलेशस्य पामरस्य यत् ।
दृष्टान्तीकरणं तस्मिस्तन्मौर्ख्यस्य विजृम्भितम् ॥ ९७ ॥

मायापदे तथाप्यत्र तद्युक्तं मूढधीः कथम् ।
अन्यथा श्राव्यते यक्षो यादृशो हीदृशो बलिः ॥ ९८ ॥

महास्वादोऽस्त्ययं स्वादो न बाह्यः स्वादतां व्रजेत् ।
यत्रास्वादोऽपि तद्रूपः परानन्दतया स्थितेः ॥ ९९ ॥

येऽस्मिन् पदे प्राप्तनिष्ठास्ते स्युः सम्राट्पदे स्थिताः ।
नान्ये बाह्याः सदा दीनचेतसो मूढबुद्धयः ॥ १०० ॥

ते सेव्यास्ते नमस्कार्यास्तस्मिन् परपदे स्थिताः ।
अथवा स्वयमेवैतद्रूपाः सम्पूर्णचेतसः ॥ १०१ ॥

तेषामवस्था स्पृहणीयभावं यात्येव सर्वस्य जनस्य नित्यम् ।
भोगैकसक्तो जन एष यस्मादास्वादलब्ध्यै भवतीह सत्यम् ॥ १०२ ॥

आस्वादना तृप्तिरियं निरुक्ता तृप्तिः स्मृताऽर्थैर्निरपेक्षभावः ।
भोगैस्तु सा सिद्ध्यति नैव जातु तेषां सदा भोगगणे रतानाम् ॥ १०३ ॥

अपूर्णताख्यो ननु दोष एव तानाश्रये मूढधियोऽत्र सद्यः ।
तृषो निवृत्त्यै लवणारनालमाकण्ठदेशं पिबतां यथा तृट् ॥ १०४ ॥

सर्वे जनास्तद् भगवत्स्वरूपस्पृहान्विताः स्युः परमार्थतोऽमी ।
ज्ञानान्वितास्तद्रहिताश्च लोके भिन्नेन मार्गेण सदैव सत्यम् ॥ १०५ ॥

ये चेत्यरूपेऽस्य जना रतास्ते तृप्तिं न यान्त्येव कदाचिदेव ।
चिन्मात्ररूपेऽस्य तु ये प्ररूढास्ते तृप्तिमायान्ति निराशिषोऽपि ॥ १०६ ॥

चिच्चेत्यपूर्णे परमे स्वरूपे स्थिता महातृप्तियुताः सदा स्युः ।
ततो महासाहसवृत्तियोगाच्छ्रयेत् स्वरूपं परमं विभोस्तत् ॥ १०७ ॥

असम्भवे तच्चितिरूपमेव चेत्याद् विमुक्तं भगवत्स्वरूपम् ।
मध्यावधानेन भजेन्न किञ्चिद् भावेन भातं ननु मूढधीषु ॥ १०८ ॥

चेत्यस्थितिस्तापकरी न जातु सेव्या बुधैर्बन्धनहेतुभूता ।
ग्राह्या महामोक्षमयी दशाऽद्याऽस्थासंभवेऽस्या ननु मोक्षरूपा ॥ १०९ ॥

विश्रान्तियोगः परिपूर्णतायां यस्तं क्षमो वक्तुमिहास्ति को वा ।
विश्रान्तियोगे ननु सर्वमेतदैश्वर्यजातं तृणवद् विभाति ॥ ११० ॥

दरिद्रतायामपि पूर्णता सा ह्यदो न यायात् क्षणमेव तेषाम् ।
ता(त)या कदाचिन्ननु तूर्णमेव स्फुरेत् पुनस्तेषु न दीनता स्यात् ॥ १११ ॥

बाह्यार्थसम्पत्तिवशेन तृप्तो यस्तृप्तियोगं मनुते परं तम् ।
तन्नाशकाले खलु सोऽथ दैन्यमायाति दीर्घं बहुतापयोगात् ॥ ११२ ॥

स्वरूपनिष्ठा विभवे विनष्टेऽप्यस्मिंस्तथा स्युर्न तु दीनचित्ताः ।
तृप्तत्वदीनत्वदशासु नित्यं मनः स्वकं साक्षितया निधेयम् ॥ ११३ ॥

स तृप्तियोगे विभवैः कदाचिन्नैवास्ति योग्यः परदृग्वियोगे ।
लेशेन सा तृप्तिरिह स्थिता तु भातीव पुष्टा विभवेन मिश्रा ॥ ११४ ॥

शान्तेऽस्तु लेशोऽपि तथैव नित्यं दारिद्र्ययोगेन विभाति पुष्टः।
दारिद्र्ययोगोऽपि च शान्तिहीनो दीनत्वमात्रं भवतीह नित्यम् ॥ ११५ ॥

मदेन युक्तो विभवेषु मूढो दारिद्र्ययोगे त्वथ· दीनताभाक्।
तज्ज्ञस्य सर्वोपकृतौ तु निष्ठा धैर्यं तथा स्यात् क्रमशः सदैव ॥ ११६ ॥

हृदो विकाशोऽस्ति तु बाह्यहेतुं विनैव या स्पन्दमयी स्थितिर्वा।
तदान्तरं लक्षणमेतदुक्तं विश्रान्तियोगस्य परस्य पूर्वैः ॥ ११७ ॥

विश्रान्तियोगस्य तु रोमहर्षस्तथाश्रुपातोऽथ च घूर्णिरत्र।
प्लवोऽथ शान्तिश्च भवन्ति बाह्ये सुलक्षणानीति महद्भिरुक्तम् ॥ ११८ ॥

दुःखादिहेतोरपि संभवो यत् स्यात् पञ्चकस्यास्य तु लक्षणानाम्।
तन्मानमत्रास्त्यनुभूतिरेव परं स्वकीया स्वहितावहानाम् ॥ ११९ ॥

तत्रापि विश्रान्तिवलेन यद्यप्यस्त्येव तेषां स्फुरणं स्वभावात्।
तथापि सा सैकतमिश्रखण्डपूर्णस्य रीत्या न विशेषलभ्या ॥ १२० ॥

विश्रान्तियोगोऽस्त्ययमेष लाभः स्वस्यैव नान्यस्य कदाचनापि।
तस्मात् तदाविष्करणं परेषु मोहोऽस्ति वा दम्भविजृम्भितं वा ॥ १२१ ॥

उड्डीय विश्रान्तिरियं प्रयाति गुरोर्ऋतेऽन्यत्र तु कथ्यमाना।
दम्भेन प्रोक्ता ननु सात्र नास्ति दम्भो हि मिथ्यैव विकत्थनं स्यात् ॥ १२२ ॥

वैवश्ययोगेन कदाचिदेव परेषु तस्या ननु दर्शनं यत्।
तदस्तु का हानिरिह स्वलौल्यात् कृतं हि दोषावहमेतदस्ति ॥ १२३ ॥

प्रौढेषु वैवश्यमिदं न युक्तं प्रौढिं गता ये मधुपानयोगे।
न तेषु वैवश्यदशा हि दृष्टा प्रौढिस्तमाभ्यामवशेन सिद्ध्येत् ॥ १२४ ॥

विश्रान्तिचिह्नानि तु ये परेषु लोभादिना दर्शयितुं प्रवृत्ताः।
तत्तापयोगेऽस्ति तु साक्षिभूतं मनस्तदीयं नहि नोऽत्र शक्तिः ॥ १२५ ॥

अलङ्कृताभिरेताभिश्चोदनाभिः परेषु तत्।
यो यन्निष्ठो भवत्वेव स तन्निष्ठोऽत्र का क्षतिः ॥ १२६ ॥

कदाचिच्चित्त हे! मा भूः स्ववञ्चनपरायणम्।
परवञ्चनमप्येतत् फलतः स्वस्य वञ्चनम् ॥ १२७ ॥

विश्रान्तियोगो योऽस्त्येषां योगिनां हृदये स्थितः।
विमर्शः कथ्यते सोऽयं घूर्णतास्वादवैभवात् ॥ १२८ ॥

अहो नु सर्वोपरिवर्तमानां भूमिं गतोऽस्मीह विचित्ररूपाम्।
आकाशमेतन्ननु यत्र चित्रं तरामधःस्थात् स्थितमेव भाति ॥ १२९ ॥

भूमेरधस्तादपि वर्तमानं स्वाकाशमेवास्मि गतोऽथवाऽहम् ।
द्वयातिगे वापि पदे स्थितोऽहो उपर्यधस्थादपि वर्तमाने ॥ १३० ॥

किं स्थानमेतत् परमं महत् स्याद्रुद्धे(दूर्ध्वे)स्थितं मूर्द्धतया सदैव ।
अधःस्थितेऽधस्थितमेव तद्वद् द्वयातिगं तत्र च वर्तमानम् ॥ १३१ ॥

तिर्यक्प्रदेशेष्वथ तिर्यगेव स्थितं समन्तान्ननु यत् सदैव ।
तथापि कुत्रापि न संस्थितं तद् विशुद्धभावादविभातकल्पम् ॥ १३२ ॥

कोऽयं प्रयुक्तो ननु भूमिशब्दो वुधैः पदेऽस्मिन्नियतेषु योग्यः ।
पदादिशब्देष्वपि नो प्रवृत्तिनिमित्ततां सेवितुमेतदर्हम् ॥ १३३ ॥

आधारभावोऽस्तु तथापि वाऽस्मिन् पदेऽस्य यस्मात् स्थितिरत्र मेऽलम् ।
पदादिशब्दा उपचारमात्रेणात्र स्थितिं यान्ति न मुख्यभावात् ॥ १३४ ॥

आधारभावोऽत्र च नैव युक्तो ह्याधेयतां कोऽत्र भजेन्न जाने ।
य एष आधार इहास्ति सोऽयमाधेयभावं भजतीह चित्रम् ॥ १३५ ॥

आधेयमेवास्त्वथवा प्रधानं नाधारभावं भजतीह कश्चित् ।
भेदावहं द्वैतमिदं विहायाऽऽसेऽहं न किञ्चित्पद एव सत्यम् ॥ १३६ ॥

पदं न किञ्चित्तदहं न किञ्चिन्ममासनं तत्र न किञ्चिदेव ।
न किञ्चिदेतच्च न किञ्चिदेव सर्वं च वा किञ्चिदिदं त्वमेयम् ॥ १३७ ॥

किञ्चिच्च तत् सत्यमिहास्ति सूक्ष्मं सर्वात्मकं सर्वतया विभातम् ।
विभाततायामपि नो विभास्यं विभातृभावेन विभानयोगात् ॥ १३८ ॥

विभास्यभावेऽपि विभास्यताऽस्य केयं वुधा दोषकरी भवेद् वा ।
सम्राट् स्वयं पामरभावसंस्थः किं पामरोऽसीति विगानमर्हः ॥ १३९ ॥

अर्होऽस्तु का स्यात् क्षतिरेव यस्माद्विगातृभावं ननु कोऽत्र यायात् ।
तस्यैव सोऽयं न विगातुमर्हो भवंस्तथाऽसौ न विगानकर्ता ॥ १४० ॥

कर्ताऽपि वा सन्ननु खेलकोऽयं स्वातन्त्र्ययोगान्न विगानकर्ता ।
क्रीडाऽपि केयं ननु बालयोग्या यदस्ति तन्मात्रमिहास्ति नित्यम् ॥ १४१ ॥

तच्चापि मे वाऽस्त्वथ माऽस्तु माऽस्तु यथास्थितं सर्वमिदं तदस्तु ।
सर्वंसहेऽद्वैतवरे किमेतैश्चोद्यैस्तथा सन्तु च तानि सम्यक् ॥ १४२ ॥

भ्रान्त्वा चिरं संसृतिमार्गदेशे शून्येऽथ चिन्मात्रपदे च तद्वत् ।
अशून्यभावेऽपि च शून्यकल्पे खिन्नोऽस्मि पूर्णं पदमाश्रये तत् ॥ १४३ ॥

भजेऽहमेतत्पदमेव नित्यं तापस्य खेदस्य च शान्तयेऽलम् ।
तापोऽपि खेदोऽपि च यत्र सद्यो भातौ महानन्दतया भवेताम् ॥ १४४ ॥

का मिष्टताऽत्रास्ति तु नैव पूर्वं लब्धा तथा लब्धतया स्फुरन्ती ।
अमिष्टताभावपदापि यस्याः पुष्ट्यै भवेन्नैव तु नाशनाय ॥ १४५ ॥

प्रौढिं गतस्यात्र च मिष्टता मे भावेषु भाताऽस्त्यघुनाऽत्यपूर्वा ।
अमिष्टता दोषहृताश्च येन मिष्टा विभान्त्येव न जात्वशिष्टाः ॥ १४६ ॥

अमिष्टता सापि न मिष्टतायां लीनाथवा मिष्टतया स्वरूपम् ।
सदा भजन्ती लघुनैव भाता स्वेनैव रूपेण विरोधतो मे ॥ १४७ ॥

केयं स्थितास्वाददशाऽद्य यस्याः स स्वाद एषोऽपि च भावगो मे ।
अस्वादभावेन विभातरूपोऽप्यास्ते सदा स्वादतया विभातः ॥ १४८ ॥

ह्यानं तथा दानमिदं प्रसिद्धं कस्याद्य कुर्वे ननु सत्यमेतत् ।
स्वादो यदेकः खलु सर्वभाववृन्दे स्फुरत्येव विशेषतो मे ॥ १४९ ॥

आस्वादकः स्वादतया स्थितोऽसौ एकोऽस्ति नो भिन्नतया श्रितोऽयम् ।
तदेकनिष्ठस्य तु मे पदार्थाः स्फुरन्तु भेदेन किमेव नष्टम् ॥ १५० ॥

भेदोऽप्यसौ भाति तदेकरूपो भेदस्य सत्ता नहि काऽपि भिन्ना ।
यद्भानमात्रं सकलस्य रूपभूतं स आस्वादक एव नान्यः ॥ १५१ ॥

नाशोऽपि नास्वादकतोऽस्ति भिन्नस्तेनाऽऽहितो दोष इहास्ति को वा ।
दोषोऽपि तद्रूपतया विभातो भानैकरूपो हि महाद्वयेऽत्र ॥ १५२ ॥

अमिष्टमिष्टे न कदाचिदेव स्वेनैव तद्रूपतया स्थिते स्तः ।
केनापि मिष्टेन परेण ते तु व्याप्ते विभाते जगतीह सत्यम् ॥ १५३ ॥

अमिष्टमेतत् परमं तु मिष्टममिष्टमेवाथ वदन्तु लोकाः ।
सांकेतिकैर्नैव तु शब्दजातैर्भावस्य देहोऽन्यतया विभाति ॥ १५४ ॥

अमिष्टगोऽस्वाद इह प्रसिद्धो मिष्टे तथा स्वाद इहास्ति सिद्धः ।
द्वयातिगे त्वान्तरमिष्टता सा परं महायोगिजने प्रसिद्धा ॥ १५५ ॥

मिष्टं मिष्टं भवति सकलं सैव मिष्टं त्वमिष्टं
तद्भानं स्यादविकलमिदं मिष्टमेवाऽत्र नित्यम् ।
भानं वाऽप्यस्तु सकलमिदं भाववद् भेदयुक्तं
विश्रान्तं तद् भवति नियतं यत्र तन्मिष्टमेव ॥ १५६ ॥

मिष्टामिष्टातिगपरपदे तत्त्वमेतन्न युक्तं
मिष्टामिष्टं जहति हि भृशं तत्र भावाः स्वरूपम् ।
मिष्टामिष्टं भवतु च तथाप्येव का हानिरेषा
पूर्णीभूतं भवति हि महामिष्टतायुक्तमेतत् ॥ १५७ ॥

मिष्टं मिष्टं भवतु च तथा मिष्टमेतत् त्वमिष्टं
मिष्टे तस्मिन् परपदवरे स्थैर्यभाजो ममेह।
वैवश्यं किं भवति ननु तेनेह सम्राट्पदस्थो
भावैस्तुच्छैर्व्रजति हि न कोऽप्येव वैवश्यमत्र ॥ १५८ ॥

वैवश्यं वा भवतु च तथाप्येव वैवश्यमेत-
च्चित्तस्यास्ते ननु(तु) मम कदाप्येव चित्ताद् गतस्य।
चित्तं स्वान्तः खलु कृतवतः सर्वतो व्याप्तिभाजो
वैवश्यं वाऽस्तु च मम कथं तत्कृतो ग्रासयोगः ॥ १५९ ॥

वैवश्यं चापि भवति महास्वादनिष्ठा स्वतन्त्रैः
स्वातन्त्र्येणाश्रितमिह महो काऽत्र वैवश्यचर्चा।
स्वं ह्यायत्तं रचयति सदा नायको नायिकायाः
स्वादाविष्टः सुखमिह महास्वादनिष्ठोऽप्यलब्ध्यै ॥ १६० ॥

स्वातन्त्र्यं तद् भवति सहजं सर्वदा चेतनानां
रूपं सोऽहं स्फुटमिह सदा चेतनोऽस्म्येव नाचित्।
चित्त्वाभावे ननु विवशता कास्त्यसौ यत् समस्तं
चित्साक्ष्येणाऽऽश्रयति सततं स्वात्मलाभं विशेषात् ॥ १६१ ॥

कर्ता ज्ञाता च भवति यतश्चेतनस्तेन तस्य
स्वातन्त्र्यं स्यादविकलमिदं रूपमेव स्वकीयम्।
कर्ता कार्ये निज इह तथा ज्ञेयजातेऽस्मि यस्मा-
ज्ज्ञाता तेनास्म्यहमिह भृशं प्रोक्तधर्मेण युक्तः ॥ १६२ ॥

तत् स्वातन्त्र्यं भवति नियतं सर्वदा सर्वगम्ये
नो कार्येऽस्मिन् ननु समतया क्रान्तरूपे मितेऽलम्।
दीप्तो वह्नेः कण इह भवत्येव दाहे समर्थः
सर्वस्यायं तृणचयगतो नात्र काऽप्यव शङ्का ॥ १६३ ॥

सिद्धः सोऽहं जगति सकले सर्वकर्ताऽत्र नित्यं
ज्ञातृत्वं मे भवति च तथा सवदा सर्वयोग।
सर्वं चैतद् भवति तदिदं सर्वथा तन्त्रवृत्ति
स्वातन्त्र्येणाश्रितविवशताभूषिते मय्यनन्ते ॥ १६४ ॥

स्वं सर्वं स्यान्मम परिमितं तन्त्रमेवेह भाव-
व्रातं भातं पुर इव ततोऽस्म्येव सोऽहं स्वतन्त्रः।
तद्भावोऽयं भवति तु कथं वाच्यरूपो य एषोऽ-
त्रायं रूपं भवति ननु मे नो पृथग्धर्मभूतः ॥ १६५ ॥

धर्मो वाऽयं भवतु च पृथङ् नैव हानिर्हि धर्मो
धर्मी वाऽसौ भवति हि परे धर्मिभूते निलीनः।
धर्मत्वेनाथ च परवपुः सोऽस्तु धर्मी न धर्म-
स्तत्त्वे सोऽयं ननु परपदे कुत्रचित् तत्स्वरूपः॥ १६६॥

स्वस्यैवाहं यत इह परं तन्त्रवृत्तिस्ततो वा
स्वातन्त्र्यं मे भवति सफलं चित्स्वरूपस्य शुद्धम्।
भावा यस्माज्जगति सकले चेतने जीवपङ्क्ति
नन्वेतां द्रागपि निजवशां कुर्वते रस्यरूपाः॥ १६७॥

स्वातन्त्र्यं तद्भवति किमिदं वाऽथ भेदैकरूपं
स्वातन्त्र्योऽयं भवति हि कदाऽप्येव भिन्नो न युक्तः।
भिन्नो वाऽयं कथमिव भजेत् तन्त्रतां तस्य यस्मा-
ल्लीनस्तन्त्रः परमिह भवेन्नो पृथग्धर्मिभूतः॥ १६८॥

अस्वातन्त्र्यं परमिह भजत्येव सत्ता सखण्डं
न स्वातन्त्र्यं तादतरवपुर्जातुचिद् भेददुष्टम्।
स्वस्याधीनोऽपि च न तु भवेत् साऽन्यतन्त्रस्तु यो ना-
तन्त्रस्तन्त्रो भवति हि कथ स्वस्य वाऽन्यस्य जातु॥ १६९॥

तन्त्रत्वं यद् भवति ननु तन्निन्द्यमेवास्ति सर्वं
स्वेऽन्यस्मिन् वा परमिह सदा नो विशेषोऽत्र कश्चित्।
अस्वः स्वं वा स्फुरति मम कोऽप्येव नो जातु तन्त्र-
स्तत् कस्य स्थां क इव च ममाप्यस्तु विश्रान्तियोगे॥ १७०॥

यस्तन्त्रः स्यात् क इव स इहास्त्येष यत् तन्त्रतेयं
लीनत्वं स्यात् तदपि च पृथक्सत्त्वराहित्यमेव।
तस्मात् तन्त्रो न भवति पृथक्सत्त्वयोग्यत्र नूनं
योऽस्त्यवासौ भवति तु सदा तन्त्रतातीतवृत्तिः॥ १७१॥
तत्स्वातन्त्र्ये परमिह सदा शिष्यते स्वं न तन्त्र-
स्तन्त्राभावे भवति किमिदं स्वं यतः स्वं स एव।
षष्ठ्या भेदो य इह गदितः सोऽस्ति राहोः शिरोव-
च्छाब्दो नासौ कलयति यतो धर्मिणो धर्मभावम्॥ १७२॥

अस्वातन्त्र्यं किमिव ननु तद् यत्र न स्वं न तन्त्रो
नो सम्बन्धो भवति न च वा काऽपि भावस्य चर्चा।
सर्वं वैतद् भवतु च तथाऽप्येव नो हानिरस्वा-
तन्त्र्यं पूर्णं फलत इह यत् तेन पूर्णं सदैव॥ १७३॥

अस्वातन्त्र्यं भवति सहजं धाम यत्रास्ति चर्चा
न स्वस्याहो भवति च तथा नैव तन्त्रस्य काऽपि।
नञो व्याप्तिर्भवति हि परं द्वन्द्ववृत्त्या समस्ते
स्वे तन्त्रे चाऽप्यथ परपदं तस्य वाच्यं परं स्यात् ॥ १७४ ॥

भावोऽत्रैक्यं वदति सहजं तेषु तन्मात्रताख्यं
नो धर्मित्वं नयति परमं तेषु तद्रूपमेव।
धर्मित्वं वा नयतु न ततः कोऽपि दोषो हि धर्मो
भिन्नो दोषे प्रभवति परं न स्वरूपे निमग्नः ॥ १७५ ॥

अस्वातन्त्र्यं प्रथितमिह यत् त्याज्यमेवास्ति तन्नो
ग्राह्यं स्यात् तद् भवति हि सदा दीनतामात्ररूपम्।
स्वातन्त्र्यं तत्किमपि परमं भाति भो यत्र तत् स्या-
दस्वातन्त्र्यं ननु समुचितं योगिनां प्राप्यमन्त्यम् ॥ १७६ ॥

स्वातन्त्र्याख्ये महति तु पदे योऽत्र विश्रान्तियुक्तः
सोऽहं श्रान्तः कथमिह भवामीव यच्छान्तिरत्र।
विश्रान्तित्वं परमिव गता तत्पदान्तःप्रविष्टा
स्वातन्त्र्योक्त्या भवति हि महाश्रान्तिरेषा महार्घा ॥ १७७ ॥

यच्छ्रान्तोऽहं विततविततेऽस्म्येव संसारमार्गे
तद् विश्रान्तिर्मम समुचिताऽस्त्येव दीर्घाऽतिदीर्घा।
यद् विश्रामः पथि विचरतां श्रान्तियोगानुसारी
युक्तोऽश्रान्तो नहि पथि कदाप्येव विश्रान्तिकामः ॥ १७८ ॥

तस्माच्छ्रान्तिर्भवति परमा भूमिरेषा विशेषाद्
विश्रान्तेर्या नयति परतां तां सुविश्रान्तिसत्ताम्।
यद्विश्रान्तो भवति तु नयः श्रान्तिरूपे पदेऽस्मिन्
विश्रान्तिं स व्रजति न कथं श्रान्तिमेवाश्रये तत् ॥ १७९ ॥

चित्रं श्रान्तिस्त्वियमपि गता लीनतां यावदेव
स्पृष्ट्वा दार्ढ्यं रचयितुमहो स्वेष्टविश्रान्तिभूमेः।
तद्विश्रान्तिं पुनरपि व्रजे तामहं कुत्र निष्ठां
कुर्वे स्थानं किमपि ननु यन्नावशिष्टं ततोऽन्यत् ॥ १८० ॥

चित्रं चित्रं क्व नु ननु गता साऽपि विश्रान्तिभूमि-
र्दार्ढ्यं नेतुं पुनरपि मया या श्रिता श्रान्तिभूमिः।
श्रान्तिः केयं नहि समुचिता श्रान्तिविश्रान्तिरूपा
त्यागैकार्हा परमगहनेऽद्वैतनिष्ठा पदेऽत्र ॥ १८१ ॥

विश्रान्तेः किं ननु समुचिता श्रान्तिरूपेह चिन्ता
का विश्रान्तिर्भवति हि पदे तत्र तत्तातिगे भोः।
अस्त्वेवासौ किमिव वद मे नष्टमत्रास्ति यस्मिन्
काले स्फूर्ति व्रजति खलु यत् तन्ममेहास्ति लाभः॥ १८२॥

या याऽवस्था स्फुरति हृदये यत्र यत्रापि···
·····················महती नैकनिष्ठा कदाचित्।
यल्लो मेऽत्रास्त्यवहृतिरियं केवलं साऽपि वा का
कोऽहं का वाऽस्त्यवहृतिरियं पूर्णरूपे पदेऽत्र॥ १८३॥

यस्तत्सिद्धि त्ववहितिकृतां मन्यते तस्य नास्मिन्
निष्ठा युक्ताऽवहितिपरा क्षोभलग्नस्य जातु।
क्षोभाविष्टा भवति हि कथं निष्ठितो यस्य निष्ठा
नानिष्ठा वा भवति सततं निष्ठितो यत्परं सः॥ १८४॥

निष्ठाऽनिष्ठाख्यमिह यदिदं द्वैतमेतच्च दूरी-
कृत्वा स्थेयं परमिह सदा पूर्ववज्ज्ञानयुक्त्या।
धार्या पूर्वा स्थितिरिव कदाप्येव नो साऽपि युक्ता
याता चेत् स्यां तदिह हृदयस्पन्दमात्रैकनिष्ठः॥ १८५॥

स्पन्दश्चायं हृदयविषये स्फूर्तिमायाति यो वा
रूपं स स्यात् परमिह सदा तस्य तत्त्वस्य नान्यत्।
अन्यत्वे वाऽपि च कथमयं तत्स्वरूपाद्विभिन्नो
बद्धोऽन्योऽन्यो भवति हि परं बद्ध एषोऽस्ति सोऽलम्॥ १८६॥

या याऽवस्था स्फुरति सततं दैवयोगेन सा सा
सत्यं भाता परशिवतयाद्यास्यमेतत्प्रसादात्।
नो भाता चेत् तदपि किमियं तन्मयत्वं स्वकीयं
जह्याद्धानावपि च न भवेत् काऽपि तत्साक्ष्यसिद्धेः॥ १८७॥

समाधिर्व्युत्थानं द्वयमपि समानं मम मतं
विभेदो वा कोऽयं ननु ममतया नीत.इह यत्।
स तत् तद् वास स्यादितिसमुचितं सास्यमिह किम्
कृतं वैक्य(क्ये) नापि स्फुटमिह विभेदात् तु वपुषा॥ १८८॥

विभेदोऽप्यस्त्येष स्फुटमिह परोपायविभवः
स्वयं लीनोऽयं स्यात् परपद इहैक्येन कलिते।
इहैक्यं चेतन्नो कृतधृति भवेत् सर्वमथवा
तथैव स्यात् पूर्णे किमिव न भवेत् सर्वभरिते॥ १८९॥

अवस्थानं युक्तं तदिह सततं मेऽस्ति जनव-
न्नवीना केऽयं स्यात् स्थितिरिह हृता भेदनिचयैः ।
जने मौढ्यं यत् तत् परमिह जहाम्येव नियतं
स्वयंसिद्धे का वा ननु समुचिता साध्यकलना ॥ १९० ॥

किमेतन्मौढ्यं स्याज्जन इह ममासीद् भ्रमवशा-
दियं बुद्धिर्लोके परशिवमये केव जडता ।
स्फुरत्वेवाभ्रोऽयं ननु जनवदेवास्ति परमः
शिवः सोऽयं त्यागोऽस्य च परशिवः स्वेन नियतम् ॥ १९१ ॥

व्यवहृतिपदं सर्वं ह्येतच्छिवैकमयं ततः
किमिव कलना मेऽत्राभूत् सा विभिन्नतया पुरः ।
न च समभवत् किञ्चित् पूर्वं न भावि तथाऽस्ति वा
भवतु च तथा सर्वं भातं परात्परतां गतम् ॥ १९२ ॥

तत् सामान्यो जन इव परं बाह्य एवाथ चान्तः-
पूर्णस्तिष्ठाम्यहमिह सदा प्राप्तप्राप्तव्यसारः ।
देहो यावद् भजति भजतां संस्थितिं तावदेवं
का मे चिन्ता परपदगतस्यास्ति देहैकनिष्ठा ॥ १९३ ॥

चिन्तेयं वा भवतु च यतो देह एषोऽपि भिन्न-
स्तस्माद् देवान्न भवति कदाप्येव चैतन्यरूपात् ।
चिन्तेयं वाऽपि न ननु ततो भेदयुक्ता ततोऽयं
तापश्चिन्ताकृत इह परं त्याज्य एषोऽस्ति शीघ्रम् ॥ १९४ ॥

तापस्तापी भवति नियतं तापभावेन भातो
भानं भानी भवति च तथा भानभावेन भातम् ।
भानं भानास्पदमपि तथा श्रीशिवस्यैव रूपं
तस्मान्न स्याद् विषयकलनामात्रयः(या) भेदहेतुः ॥ १९५ ॥

भानं भातं परशिवतया चेत् तदा सर्वं एते
भावा भाताः परशिवतया स्युः सदा भानसाराः ।
सर्वं सर्वाश्रितमिह भवेच्चेद् विभातं तदाऽमी
सर्वे भावाः परशिवतया भातरूपा भवेयुः ॥ १९६ ॥

भावा जाड्योपहतविभवा यत्र भाताः स्युरेते
सत्सारत्वात् परशिवतया भानमात्रैकसिद्धाः ।
स्वात्मा न स्यात् परशिववपुस्तत्र चिन्मात्ररूपो
भावैः पूर्णं परशिव इदं चित्स्वरूपं हि नान्यत् ॥ १९७ ॥

ज्ञाता कर्ताऽपि च ननु सदा सर्वभावेषु चाहं
किं सर्वं वाऽस्म्यहमपि च किं ज्ञातृताकर्तृते के।
एकं तत्त्वं भवति हि परं सर्वदा सर्वरूपं
तच्चाप्यत्र भ्रमत इह यन्नैतदप्यस्ति युक्तम् ॥ १९८ ॥

सर्वं विश्वं स्फुटमहमिहास्म्येति मां सर्वमेतत्
सर्वं चैतत् कृतमिह मया विश्वजातं मयैव।
मह्यं मत्तो भवति सकलं रूपभूतं ममैत-
न्मय्येवैतत् कृतपदमथानेन हृतोऽहमेव ॥ १९९ ॥

कोऽयं भेदो भवति नवधा वैषमोऽहं हि नाहं
विश्वं विश्वं न च ननु तदा का कथा सर्वतायाः।
सर्वं ह्येतत् परशिव इहाहंस्वरूपोऽस्ति सोऽयं
नो वा नो वेत्यपि भवति किं किं त्वमेतच्च मौढ्यात् ॥ २०० ॥

मौनं चैतत् कथमिव भवेद् वाङ्निरोधात्मकं वा
मौनान्मौनं भवति च सदा जाड्यदोषेण दुष्टम्।
सर्वं चैतद् भवतु सततं स्वे पदे तुल्यकालं
भावाभावा ननु परपदे पूरणाकारिणो यत् ॥ २०१ ॥

भातः स्वात्मा परशिवतया केन हीनोऽस्मि किं वा
कुर्यां साध्यं भवति न च मे साधितं वापि किञ्चित्।
विश्रान्तिश्चापि न समुचिता श्रान्तिहीनस्य लोके
यद्यत् किञ्चित् स्फुरति यदि वा सैव विश्रान्तिरस्तु ॥ २०२ ॥

माऽस्त्वेवैषाऽपि च ननु तथाप्येव चास्त्येव नित्यं
स्फूर्ति यातं भवति हि तदा सासनं तत्पदं यत्।
यद्यत् किञ्चित् स्फुरति हृदये सर्वदा तद्धि रूपं
विश्रान्तेः स्यान्नहि समुचितं तद्विभेदेन किञ्चित् ॥ २०३ ॥

यस्मात् स्फूर्तिर्भवति परमा स्वादभूतिश्चितोऽन्त-
स्तद् विश्रान्तेः स्फुरणमखिलं रूपमेवास्ति नान्यत्।
तद्विश्रान्तो भवति सततं स्वादनिष्ठस्तु नान्यः
श्रान्तः श्रान्तिं गत इह कथं स्वादविश्रान्तियोग्यः ॥ २०४ ॥

स्फूर्तेर्यत्रास्ति तु समुचितः श्रान्तिहेतोः सदाऽलं
युक्त्या सिद्धः परमगहनः कोऽपि विश्रान्तिभावः।
तत्रास्फूर्तेः क इव तु भवेद् भूततद्भावतायां
सन्देहस्तद्भवति सहजा स्वादनिष्ठा सदैव ॥ २०५ ॥

अस्फूर्तिर्वा भवति ननु या सापि च स्फूर्तिहीना
युक्ता न स्यात् स्फुरति हि सदा सैव नान्यत्तु किञ्चित् ।
अस्फूर्तौ सा किमिव तु भवेत् स्फूर्तिरेका हि यद्वि
स्वस्यान्यस्यापि च रचयितुं शक्तियुक्ताऽस्ति नान्या ॥ २०६ ॥

या याऽवस्था स्फुरति मम तत् स्वेन यत्नेन वाऽलं
सा सा सर्वा भवति परमास्वादभूतिः सदा मे ।
स्वादाभावोऽपि च खलु महास्वाद एवात्र यस्मात्
स्वादे मग्नस्तदितरदिदं नैव किञ्चिल्लभेऽहम् ॥ २०७ ॥

एवं विमर्शनिरतो योगी स्यात् स्वात्मनि स्थितः ।
बाह्ये सामान्यजनवदेष तिष्ठति सर्वदा ॥ २०८ ॥

तदवस्थां स एवायं जानाति वयमत्र के ।
तथापि लेशतः प्रोक्ता गुरुशास्त्रानुसारतः ॥ २०९ ॥

अनुवादोऽपि यत् स्वानुद्यम्य स्पर्शकरः स्मृतः ।
चित्ते सर्वस्य तदयं परामर्शः स्वयं कृतः ॥ २१० ॥

नमस्कारकृतास्वादनिर्णयोऽयं मया कृतः ।
भवत्वास्वादजनकश्चित्ते सर्वस्य सर्वदा ॥ २११ ॥

इति श्रीमदाराध्यतमाचार्यवर्य-श्रीगुरुवरराजानकभास्करकण्ठविरचिते
चित्तानुबोधाख्ये महाशास्त्रे नमस्कारकृतास्वादनिर्णायक-
मष्टमं प्रकरणं सम्पूर्णम् । इति शिवम् ॥ ८ ॥

# नवमं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः ।

ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः ।

ॐ तद्द्वयसामरस्यरूपायै गुरुपादुकायै नमः ।

ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः ।

ॐ विषयादिस्वरूपोऽत्र योऽयमध्वा प्रकाशितः ।
अध्वषट्कं च तस्यैव दार्ढ्यं कर्तुं विविच्यते ॥ १ ॥

अध्वषट्कं हि निर्णीय सारशास्त्रेषु कीर्तितम् ।
देहादावेव संवीक्ष्यं संस्थितं तु स्वभावतः ॥ २ ॥

यद् ब्रह्माण्डे हि तद् देहे वर्तते स्वस्वभावतः ।
अण्डब्रह्माण्डयोरैक्यं ततः प्रोक्तं महाबुधैः ॥ ३ ॥

शास्त्रान्निर्णीय तद्बाह्ये योऽन्वेष्टुं तु समुद्यतः ।
स लेशतोऽपि तत् स्प्रष्टुं नाधिकारीति निश्चयः ॥ ४ ॥

यस्तु देहे स्थितेनैव ते[न] गन्तुं समुद्यतः ।
सोऽवश्यं प्राप्य देशं तं प्राप्नोत्येव न संशयः ॥ ५ ॥

तत्र विज्ञोऽथ बाह्येन गन्तुं शक्तो भवेदसौ ।
स्वरूपान्तर्गतं गम्यं कुर्वतोऽस्य क्व वा गतिः ॥ ६ ॥

सदा प्राप्तं परं तत्त्वं जानन् योगी स्वबोधतः ।
तत्प्राप्त्यै गमनं व्यर्थं न कदाचिच्छ्रयत्यसौ ॥ ७ ॥

देहाध्वनैव संप्राप्तः परं तत्त्वं सुबुद्धिमान् ।
स्वं स्वरूपं च तन्मत्वा गमनं सर्वथा त्यजेत् ॥ ८ ॥

एकोऽध्वैवास्य तत्रास्ति प्रापकः सम्यगाश्रितः ।
सर्वाध्वशोधनं दीक्षाकाले रुचिविभेदतः ॥ ९ ॥

देह एव समारोढुं परोपायोऽस्ति योगिनाम् ।
परे तत्त्वे तदन्तर्हि चितेर्व्याप्तिः परा स्मृता ॥ १० ॥

पादाङ्गुष्ठनखात् कान्तं चितेः संवहनं हि यत् ।
जीवनाख्यं तदेतत् स्यादध्वभावेन संस्थितम् ॥ ११ ॥

दहरे तत्र जीवस्य मुख्यं रूपं प्रकीर्तितम् ।
तदधस्तु जडं रूपं तदूर्ध्वे शुद्धमुत्तरम् ॥ १२ ॥

पादाङ्गुष्ठे नखाग्रे तन्महाजाड्यमुदाहृतम् ।
केशमूलेषु शिरसः शुद्धत्वं परमं मतम् ॥ १३ ॥

जाड्यशुद्धत्वयोः काष्ठा परा या कायभागयोः ।
सादृश्येनैव सा भाति मूढानां न तु योगिनाम् ॥ १४ ॥

देहाद् बहिस्तु चिन्मात्रमचेत्यं समुदाहृतम् ।
बाह्याकाशतया ज्ञेयं लौकिकैर्न तु योगिभिः ॥ १५ ॥

दहरस्थश्च जीवोऽयं समारूढः स्वभावतः ।
अधोदेशाद् भवत्येव नात्र यत्नस्य योगिता ॥ १६ ॥

दहरे प्राप्तनिष्ठोऽयं संकल्परसिको भवन् ।
शिरोऽन्तं प्रापणीयोऽस्ति योगिभिर्यत्नशालिभिः ॥ १७ ॥

ज्ञानद्वारेण तद्व्याप्तिर्यैर्ज्ञाता कान्तगोचरे ।
तेषां न यत्नः कोऽप्यस्ति कार्यत्वेन मनागपि ॥ १८ ॥

सङ्कल्पशान्तिरेषा स्यादयत्नं हृदयान्तरे ।
एकं तत्त्वं प्रपश्यतां सर्वभावेन सर्वदा ॥ १९ ॥

तदभावे ज्ञानबन्धुभाव एवैषु विद्यते ।
अज्ञानादवरो ज्ञानं न ज्ञानं बाह्यहेतुकम् ॥ २० ॥

येनं लब्धा तु तेषां स्यात् कार्यत्वेनैव संस्थितः(तिः) ।
यत्नस्तदर्थमेवायं प्रपञ्चयति बुद्ध्यताम् ॥ २१ ॥

देहावच्छिन्नचिन्मात्रे तदतीत इवाखिलम् ।
अध्वषट्कं भवत्येव चिद्धि सर्वत्र तादृशी ॥ २२ ॥

देहावच्छिन्नगं देहगमेतन्नान्यगं भवेत् ।
क्रोशन्ति मन्त्रा इतिवल्लक्षणासंश्रयात् स्फुटम् ॥ २३ ॥

विषयेभ्यः समुत्थानं प्रोक्तं मूढतरान् प्रति ।
ते हि देहादधो याता भवन्त्येव न संशयः ॥ २४ ॥

भागतः स्वात्मता या हि विषयेषु स्थिता भ्रमात् ।
सा त्वंशजीवनं प्रोक्तं महेशेन स्वयं स्फुटम् ॥ २५ ॥

यद्यप्येवास्ति देहेऽपि बाह्यस्तत्रापि तत्कथा ।
योग्या सोपानभावे स्यादारोढुं परमं पदम् ॥ २६ ॥

परमार्थविचारे तु प्राणादेरपि बाह्यता ।
स्फुटमेवान्तरं तद्धि केवलं परमं पदम् ॥ २७ ॥

देहश्चिद्रूपमेवास्तु तावन्मातृतया स्थितेः ।
अथ मेयतया ज्ञातश्चेत्यभावं समाश्रयेत् ॥ २८ ॥

मूर्तिक्रिये शिवस्योक्ते द्विधा शास्त्रार्थपारगैः ।
स्थूलसूक्ष्मपरत्वैस्तु तद्विभागमिमं शृणु ॥ २९ ॥

प्रकाशः स्यात् परं रूपं विसर्गस्तु परा क्रिया ।
सूक्ष्मं रूपं तु धीमाता प्राणाः सूक्ष्मक्रिया स्मृता ॥ ३० ॥

स्थूलं रूपं तु देहः स्यात् तत्स्था चेष्टा क्रिया मता ।
स्थूलेति संग्रहः प्रोक्त आध्यात्मिकगतो बुधैः ॥ ३१ ॥

परं प्राप्यं बुधैः प्रोक्तं स्थूलं स्वाधःकृतं पदम् ।
मातुस्तेनेह चर्चाऽस्ति सूक्ष्मस्याध्वविनिर्णये ॥ ३२ ॥

मूर्तिरूपोऽत्र देशाध्वा त्रिधा वाच्यस्वरूपकः ।
भुवनानि कलाः पञ्च चत्वारी(तत्त्वानी)ति विभेदतः ॥ ३३ ॥

क्रियारूपोऽत्र कालाध्वा त्रिधैव परिकीर्तितः ।
पदानि मन्त्राः वर्णाश्च, वाचकत्वेन संस्थितः ॥ ३४ ॥

इयं चर्चा भवित्री हि समनन्तरमेव तत् ।
अन्यत् किञ्चित्तु निध्यासोऽवश्यनिर्णीयताशया ॥ ३५ ॥

अध्वषट्कस्य चर्चेयं परतत्त्वात् सुदूरतः ।
भवत्येवानुपायं तत् प्रोक्तं हि गुरुभिः स्फुटम् ॥ ३६ ॥

सर्वं ह्युपेयभावेन स्फुरत्यत्र निरन्तरम् ।
तेनोपायकथा नात्र न त्वस्याभावतो भवेत् ॥ ३७ ॥

न चाशक्ततया ज्ञान उपायोऽत्र न वृत्तिमान् ।
सर्वैर्मानैर्हि तस्यैव स्फूर्तिर्नान्यत्र कस्यचित् ॥ ३८ ॥

यदुपायस्य विस्फूर्तौ तस्यैवोपायभावता ।
तदुपायस्य काऽस्त्यत्रोपायतायाः प्रकल्पना ॥ ३९ ॥

अनुपायमिदं तत्त्वमिति ज्ञानं यतो भवेत् ।
नोपायेन विना तेनोपायानामत्र कल्पना ॥ ४० ॥

शाम्भवाख्य उपायोऽत्र प्रथमः परिकीर्तितः।
निर्विकल्पा स्थितिः सेयं मध्यालम्बस्वरूपिणी ॥ ४१ ॥

यथाक्षपातसमये वस्तु स्फुरति दृक्पथे।
निर्विकल्पतया तद्वत् केषाञ्चित्तु शिवात्मता ॥ ४२ ॥

शिवात्मतास्फूर्तिरेवानुपायत्वस्य भावना।
भावेषु गदिता सद्भिस्तत्त्वे परशिवात्मके ॥ ४३ ॥

अनुपायस्य विज्ञाने शाम्भवोपाय इत्ययम्।
उपायरूपतां यातो न किञ्चिच्चिन्तनात्मकः ॥ ४४ ॥

विकल्पस्तद्धि सद्भावे निर्विकल्पा स्थितिः परम्।
सिद्धिमायाति तेनात्र शाक्तोपायस्य कल्पना ॥ ४५ ॥

भावनामात्ररूपोऽसौ शिवामर्शननामकः।
शाक्तोपायः स्मृतः सद्भिः शाम्भवोपायसाधकः ॥ ४६ ॥

शाक्तोपायस्य हेतुः स्यादाणवोपायनामकः।
उच्चारादिविभेदेन बहुधा सम्प्रकीर्तितः ॥ ४७ ॥

उच्चारादौ स्थितिं यातो भावनायां स्थितिं व्रजेत्।
नान्यथेति बुधैस्तत्र निष्ठा कार्या निरन्तरम् ॥ ४८ ॥

तत्रोच्चारादिमध्ये तूच्चारस्य कथनं परम्।
कुर्मो नान्यस्य शक्ताः स्मः प्रपञ्चे शास्त्रनिर्मिते ॥ ४९ ॥

उच्चारो द्विविधः प्रोक्तः प्राणीयो वाचिकस्तथा।
वाचिकस्य कथा नेह प्राणीयः परमुच्यते ॥ ५० ॥

प्राणस्योच्चारजातं हि दिवा निशि च संस्थितम्।
स्वभावान्न तु कस्यापि प्रेरणाख्यात् प्रयत्नतः ॥ ५१ ॥

"[1]षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिः।
हंस हंसेति हंसेति जीवो जपति सर्वदा" ॥ ५२ ॥

हंकारेण विनिर्याति सकारेण विशेत् पुनः।
इत्येवमुक्तं जीवो हि प्राणो लक्षणया स्मृतः ॥ ५३ ॥

हृदये द्वादशान्ते वा विश्रान्तिं त्वागतः पुमान्।
विलोपयंस्तदुच्चाराच्छिवे विश्रान्तिमाश्रयेत् ॥ ५४ ॥

---

१. विज्ञानभैरव १५६।

शिखाबन्धः सोऽयमेव शास्त्रेषु परिकीर्त्यते ।
शिखा हि प्राणशक्तिः स्याद् बन्धस्तस्या निरोधनम् ॥ ५५ ॥

एतावता तु येनात्र निष्ठां याता अनादृते ।
वर्णाध्वादेस्तदर्थं तु कल्पना सूरिभिः कृता ॥ ५६ ॥

तन्निष्ठावशतस्तेषां प्राणोच्चारः शनैः शनैः ।
स्वल्पतां याति येनैषां कालग्रासः प्रजायते ॥ ५७ ॥

एषा भवित्री चर्चेति बहु नाऽऽयस्यते त्विह ।
देशाध्वकथनं चाग्रे भविष्यति विशेषतः ॥ ५८ ॥

देहेऽध्वसंभवं ज्ञातुमेवायं तु भरः कृतः ।
अध्वरूपं विस्तरेण निर्णेतुं प्रोच्यतेऽधुना ॥ ५९ ॥

अध्वा द्विधाऽत्र सम्प्रोक्तो ज्ञान्यज्ञानिजनौ प्रति ।
अद्यते भुज्यते ज्ञैः स तेनाज्ञैर्गम्यते पदम् ॥ ६० ॥

राज्ञा हि भुज्यते मार्गः प्रदेशस्तेन गम्यते ।
ईश्वरैः स्वेप्सितं स्थानं जनैरिति विनिश्चयः ॥ ६१ ॥

संविन्मात्रं ह्यत्र प्राप्तं स्वात्मभूतं निगद्यते ।
न तद् दूरे स्थितं वस्तु तस्मादध्वाऽत्र कल्पितः ॥ ६२ ॥

अध्वाऽप्यत्र प्राप्यवस्तुरूप एव प्रकीर्तितः ।
अतो ज्ञानिजनेऽस्यापि प्राप्यवद् भोगभूमिता ॥ ६३ ॥

अज्ञानी तु भ्रमेणात्र प्राप्तोऽप्यप्राप्तिशङ्कया ।
ग्रस्तस्तेनास्य गन्तव्यः सोऽध्वा प्राप्यस्य लब्धये ॥ ६४ ॥

ज्ञानी मार्गप्रदेशेऽत्र विहरन् याति लीलया ।
राजेव मूढो यातीव सत्वरं शीघ्रगाध्वगः ॥ ६५ ॥

अप्राप्तिशङ्काविलयः प्राप्तिरत्र निगद्यते ।
व्यापकस्य हि का प्राप्तिर्विशेषादात्मवस्तुनः ॥ ६६ ॥

अप्राप्तिशङ्का याऽप्यत्र सापि प्राप्तिदशा परा ।
यद्यप्येव तथाप्यत्र न स्थितिर्मूढतावशात् ॥ ६७ ॥

मूढताऽपि महज्ज्ञत्वं यद्यप्येवास्ति सत्यतः ।
एवं बोधार्थमेवायं प्रपञ्च इति सह्यताम् ॥ ६८ ॥

द्विधा स्थितोऽयमध्वाऽस्ति द्विधा सद्भिरुदीरितः ।
कालरूपो देशरूपो वाच्यवाचकभावतः ॥ ६९ ॥

प्रकाशः स्थौल्यमायातः सन्मात्रमिति भासते ।
विमर्शोऽयं चेतनेति सन्मात्रजडतापहा ॥ ७० ॥

अध्वद्वयं तदेवैतत् प्राप्तयेऽप्राप्तवस्तुनः ।
यदुत्थितं यतस्तस्य प्रापकं तद् यतः स्मृतम् ॥ ७१ ॥

तत्र कालस्य चर्चेह बाह्यान्तरविभेदतः ।
क्रियते प्रथमं सा हि परप्राप्तिकरी स्फुटम् ॥ ७२ ॥

ब्रह्माण्डे तत्र कालोऽयं सूर्यभावमुपागतः ।
देहान्तः प्राणभावेन स्थितोऽस्ति परमेश्वरः ॥ ७३ ॥

सूर्यस्य प्रतिबिम्बोऽयमाकाशे चन्द्रमा स्थितः ।
प्राणस्य प्रतिबिम्बोऽयं तथाऽपानोऽस्ति देहके ॥ ७४ ॥

उष्णौ द्वौ शीतलौ द्वौ च पुष्टिपाचनकारिणौ ।
बहिरन्तश्च वर्तेते भावानां विविधात्मनाम् ॥ ७५ ॥

आप्यमण्डलरूपा तु तथारद्वारभावतः ।
चन्द्राद् भावाः प्रजायन्ते घटा इव मृदोऽखिलाः ॥ ७६ ॥

सूर्यात् पाचनमासाद्य दृढीभूता शनैः शनैः ।
व्यवहारेऽथ योग्याः स्युर्देहेऽप्येषा व्यवस्थितिः ॥ ७७ ॥

यद्यद् देहे जडं वस्तु मांसादि शीततापि वा ।
तदपानस्य कार्यं स्याच्चन्द्ररूपस्य निश्चितम् ॥ ७८ ॥

यदौष्ण्यं यच्च वा ज्ञानं देहान्तर्वर्ति देहिनाम् ।
तत् प्राणस्यैव कार्यं स्यात् सूर्यरूपस्य सर्वशः ॥ ७९ ॥

बाह्या कालस्य चर्चेह निष्फलत्वान्न तन्मते ।
प्राणचर्चां तनिष्यामः प्राप्यस्यावाप्तये स्फुटम् ॥ ८० ॥

प्राणस्य देहे सर्वत्र व्याप्तिर्यद्यपि वर्तते ।
अन्यथा प्राणनं ह्यस्य न संभवति जातुचित् ॥ ८१ ॥

तथापि स्फुटतां वीक्ष्य चारोऽस्य हृदयाद् बहिः ।
द्वादशान्तं स्थितो यः स वर्ण्यते शास्त्रदृष्टितः ॥ ८२ ॥

प्राणभावेन हृदयादुक्ता(त्था)य लयमेत्ययम् ।
द्वादशान्ते बहिर्देशे सूर्योऽस्तपर्वते यथा ॥ ८३ ॥

ततोऽपानतयोक्ता(त्था)य हृदये लयमेति सः ।
सोयऽमेकः प्राणचारः पण्डितैः परिकीर्तितः ॥ ८४ ॥

प्राणः सामान्यरूपोऽयं जीवनात्मा निगद्यते ।
प्राणापानौ च तस्यैव रूपद्वयमिह स्थितम् ॥ ८५ ॥

अहोरात्रमान्तरं तु तदेतत् परिकीर्तितम् ।
बाह्यं चैतन्मात्रमेव कार्यं योगिवरैः स्वयम् ॥ ८६ ॥

मासादिकल्पना चात्र कृताऽस्ति परमेष्ठिना ।
स्वच्छन्दादिषु शास्त्रेषु प्राणसौक्ष्म्यविभावने ॥ ८७ ॥

प्राणः सौक्ष्म्यं गतो ह्यत्र शुद्धचिद्रूपतां व्रजेत् ।
अंशांशिकाविभागेन स्थूलो भावः खतां यथा ॥ ८८ ॥

निर्णयो भवितैवात्र चक्रदृष्टान्तदर्शनात् ।
पूर्वं चापि कृतोऽस्त्येव लेशतस्तत् कृतं बहु ॥ ८९ ॥

द्वादशान्तेऽथ हृदये ये स्थिताः कृतबुद्धयः ।
प्राणापानगती त्यक्त्वा ते प्राप्ताः परमं पदम् ॥ ९० ॥

हठप्रयोगो नात्रास्ति युक्तः किन्तु स्वभावतः ।
चरतोऽस्योदयस्थानलयस्थाने पुनः पुनः ॥ ९१ ॥

"स्पृष्ट्वा स्पृष्ट्वा तु कालेन निर्विकल्पा स्थितिर्भवेत्" ।
इत्युक्तं गुरुभिः साक्षात् सारशास्त्रेषु च स्थितम् ॥ ९२ ॥

स्थानद्वयेऽत्र विश्रान्तिर्यावती स्याद् दिने दिने ।
अधिका तावती प्राप्तिः श्रेयसो(से)ऽथ कृतं बहु ॥ ९३ ॥

येषां प्राणानुसरणादनादृतिवशाद् भवेत् ।
नात्र प्रवेशस्तेषां तु कृते वर्णादिकल्पना ॥ ९४ ॥

वर्णादीनां समुच्चारं प्राणसाम्येन कुर्वताम् ।
प्राणग्रासस्तु तेषां स्यात् कालेनेति विनिश्चयः ॥ ९५ ॥

प्राणग्रासे ज्ञानमेकं तेषां चित्ते तु तिष्ठति ।
तावज्ज्ञाने यतः प्राणचारभेदाद् विभिन्नता ॥ ९६ ॥

ज्ञानानां ज्ञेयभेदेन न युक्ता भेदकल्पना ।
असम्बन्धाद् विकल्पानां ज्ञानेन चान्वयोऽस्ति यत् ॥ ९७ ॥

विकल्पमात्रगत्वेऽपि संस्कारबलतः स्फुटम् ।
सम्बद्धा ज्ञेयजातेन भवन्त्येव न संशयः ॥ ९८ ॥

ज्ञानानां ज्ञेयसम्बन्धाद् विकल्पाः समुदाहृताः ।
संस्कारवशतस्तस्माद् नाक्षेपस्तेऽत्र सङ्गतः ॥ ९९ ॥

सम्बन्धकार्यं सम्बन्धिकार्यं न समुदाहृतम् ।
कल्पनामात्रसिद्धो हि सम्बन्धो भेदशासने ॥ १०० ॥

ज्ञानाभेदो निर्विकल्पा स्थितिर्नो नष्टचेष्टता ।
हठयोगेन सैव स्याद्धठयोगो हि दुःखदः ॥ १०१ ॥

जितप्राणा योगिनस्तु पश्यन्तश्चैव तद्गतिम् ।
रुद्ध(न्ध)न्त इव नो बाह्यैर्विकल्पैर्विवशाः स्थिताः ॥ १०२ ॥

रोधनाख्यः प्रयत्नस्तु न तेषामुपयुज्यते ।
रुद्धस्य रोधनं किं स्याद् रुद्धत्वं निर्विकल्पता ॥ १०३ ॥

विकल्परोधनात् केचित् प्राणरोधं प्रकुर्वते ।
ज्ञानयोगेन युक्ताः स्युर्द्वित्रास्ते न तु पञ्चषाः ॥ १०४ ॥

वर्णोच्चारः प्राणचारे वर्णाध्वा कीर्तितो बुधैः ।
सोऽयं नादः समाख्यातः कुण्डलीतः प्रवृत्तिभाक् ॥ १०५ ॥

आन्तरोऽयं समुच्चारः परमः समुदाहृतः ।
अयत्नजः सूक्ष्मवर्णरूपोऽनाहतसंज्ञकः ॥ १०६ ॥

सर्ववर्णस्वरूपोऽयं घोषादिदशभेदतः ।
स्थितो देहे स्वभावेन योगिनोऽत्र व्यवस्थिताः ॥ १०७ ॥

कर्णापिधानयुक्त्या तु योगिनस्तेन वर्त्मना ।
प्राप्नुवन्ति परं धामाभ्यासेन लयमागताः ॥ १०८ ॥

स्थूलवर्णसमुच्चारो वर्णाध्वाऽथ तु कीर्तितः ।
प्रयत्नजोऽसौ विज्ञेयो नादशक्तिसमुत्थितः ॥ १०९ ॥

वर्णाः पञ्चाशदेव स्युस्तत्र वर्गाष्टकं स्थितम् ।
सर्वशास्त्रव्यवस्था स्यादेतैरेव न संशयः ॥ ११० ॥

वर्णोच्चाररतो योगी प्राणसाम्येन निश्चितम् ।
शनैः शनैः प्राणचारग्रासं कुर्यादतन्द्रितः ॥ १११ ॥

वाचकत्वं च वर्णानां देवताविषयं स्मृतम् ।
तदुच्चारवशाद् याति प्रसादं देवतागणः ॥ ११२ ॥

एकाशीतिस्तु यास्त्वर्द्धमात्रा वर्णेषु संस्थिताः ।
पदाध्वा सोऽयमेवोक्तो महाशास्त्रेषु पण्डितैः ॥ ११३ ॥

ह्रस्वानां दश संप्रोक्ता द्वात्रिंशद् दीर्घगाः स्मृताः ।
स्वभावतः प्लुतस्यास्य ऌकारस्य षडुदाहृताः ॥ ११४ ॥

त्रयस्त्रिंशत्तु कादीनामर्धमात्राः प्रकीर्तिताः।
कस(ष)संयोगरूपस्य क्षकारस्यात्र न स्थितिः॥ ११५॥

अर्धमात्रोच्चाररतो योगी रात्रिन्दिनं स्थितः।
प्राणग्रासं करोत्यत्र झगित्येव समाहितः॥ ११६॥

विद्याराजस्य वर्णानां नवानां नवधाकृतेः।
पदैकाशीतिरेषोक्तो स्वच्छन्दे परमेष्ठिना॥ ११७॥

व्योमव्यापी महामन्त्र एकाशीतिपदः स्मृतः।
प्राणसाम्यार्थमेकैकपदोच्चारोऽस्य यः स्फुटम्॥ ११८॥

पदाध्वा सोऽयमेव स्यादथवा शम्भुनोदिता(तः)।
एतन्निष्ठोऽतियोगी स्यान्निष्णातः प्राणभक्षणे॥ ११९॥

अत्रानादृतिभागर्थे मन्त्रोच्चारः प्रकल्पितः।
मन्त्राध्वा सोऽयमेव स्यात् सारशास्त्रेषु कीर्तितः॥ १२०॥

प्राणसाम्येन जपतां मन्त्रान् स्वेष्टांस्तु योगिनाम्।
प्राणग्रासोऽथ कालेन जायते कालशान्तिकृत्॥ १२१॥

मन्त्रोच्चारे समारूढः प्राणचारांस्तु स्वल्पयेत्।
तत्क्रमेणाथ प्राणोऽयं निजो भवति योगिनाम्॥ १२२॥

मन्त्रचक्रे समारूढे मातृकाचक्र एव वा।
प्राणचक्रे निरुन्धानः कालचक्रं निरोधयेत्॥ १२३॥

कालचक्रं निरुद्धं तु चिन्नाभौ स्थितिभाक् भवेत्।
ततो बाह्यैस्तु दुःखौघैः साधको न विचाल्यते॥ १२४॥

प्राणसाम्येन रहितो वर्णो वा जप एव वा।
जप्तो निष्फलतां याति शरदीव घनारवः॥ १२५॥

मध्यधाम्नि तु विश्रान्तो द्वादशान्तेऽथवान्तरे।
विस्मरत्येव मन्त्रादीन् जप्यमानान् महाशयः॥ १२६॥

बाह्यकालं च नो किञ्चिच्चेतन्नेव न चेतति।
निर्विकल्पा स्थितिः सेयं शाम्भवोपायरूपिणी॥ १२७॥

शिरोऽन्ते स्थितिरेषैव सुषुम्णायां स्थितिश्च वा।
निर्विकल्पा स्थितिर्येयं ज्ञानाद् वा प्राणरोधनात्॥ १२८॥

नास्थिखण्डे हि विश्रान्तिर्नात्र लेशोऽपि वा क्वचित्।
निर्विकल्पा स्थितिर्येव सैव विश्रान्तिरुत्तमा॥ १२९॥

परामर्शोऽपि शुद्धो य एकचिन्मात्रनिष्ठितेः ।
साऽपि विश्रान्तिरेवास्ति योगिनां तत्त्वदर्शिनाम् ॥ १३० ॥

निर्विकल्पा स्थितिर्नित्यं न सम्भवसहा स्मृता ।
सदेहानां विदेहानां या स्थितिः सा न गोचरे ॥ १३१ ॥

मन्त्रे परिणतो योगी चितौ परिणतो भवेत् ।
अयत्नमेव यत्प्रोक्तं तन्त्रालोके महात्मभिः ॥ १३२ ॥

[1]"यथारघट्टचक्राग्रघटीयन्त्रौघवाहनम् ।
एकानुसन्धियत्नेन चित्रं यत्रोदयं भजेत्" ॥ १३३ ॥

एकानुसन्धानबलाज्जाते मन्त्रोदये स्फुटम् ।
तन्मन्त्रदेवतायत्नात् तादात्म्येन प्रसीदति ॥ १३४ ॥

इत्येव मन्त्रवाच्या हि चिदेका मन्त्रदेवता ।
साक्षाद्वा द्वारतो वाऽपि तत्रैव(वा)वहितिः शुभाः ॥ १३५ ॥

मन्त्रवाच्या चितिः साक्षाच्छिव एव प्रकीर्तितः ।
मातृकाः परिवारोऽस्य तद्भावेनैव संस्थितेः ॥ १३६ ॥

जीवस्य परिवारो हि विकल्पाः समुदाहृताः ।
चिद्रूपोऽयं शिवः साक्षाद् विकल्पा मातरः स्मृताः ॥ १३७ ॥

शब्दाः संस्मृतिमायाता विकल्पाः समुदाहृताः ।
शब्दराशिसमुत्थोऽयं मातृकागण इष्यते ॥ १३८ ॥

मातृभिस्तु निगीर्णो यः शिवांशो वशमागतः ।
स पशुः संस्मृतः सद्भिर्लुप्तैश्वर्यः कलावशात् ॥ १३९ ॥

कालाध्वाऽयं विनिर्णीतः क्रियारूपस्त्रिधा स्थितः ।
पदप्राप्तिकरो ज्ञानामज्ञानां तन्निरोधकृत् ॥ १४० ॥

मूर्तिवैचित्र्यरूपोऽथ देशाध्वाऽपि विविच्यते ।
मूर्तिः प्रकाशरूपाऽत्र शिवस्य परमात्मनः ॥ १४१ ॥

स्वातन्त्र्येणाऽऽस्यानभावं गता चितिरियं खलु ।
देशभावेन तत्रस्थचेत्यभावेन च स्फुरेत् ॥ १४२ ॥

सेयं चितिस्तु सन्मात्रं स्फुरत्ताश्रयभावतः ।
चेत्यानि सन्तो भावाः स्युराधेयत्वेन संस्थिताः ॥ १४३ ॥

---

१. तन्त्रालोक ७।३-४ ।

न च शक्ते चोद्ययोगो युज्यते शक्यभावने ।
शक्तत्वस्य पराकाष्ठां भजत्येषा चितिः परम् ॥ १४४ ॥

अन्यथा शक्यरूपाणां भावानां कथमुद्भवः ।
न च भावा न सन्तीति वक्तुं युक्तं विभानतः ॥ १४५ ॥

अभानमपि चैतेषां शक्यमस्यावुधैः स्मृतम् ।
यथा तथा शक्तताऽस्यां चितियोग्या परं स्थिता ॥ १४६ ॥

आश्यानतां गतः सोऽयं विभुर्देशी भवत्यलम् ।
देशाध्वा सोऽयमेवोक्तः प्राप्य देशतया स्थितेः ॥ १४७ ॥

सन्मात्रनिष्ठा एते स्युर्योगिनोऽत्र शिवाः स्तुताः ।
शिवत्वमपि किं तेषां सर्वरूपा हि ते स्मृताः ॥ १४८ ॥

तत्प्राप्तावसमर्थानामर्थे तत्राध्वकल्पना ।
तत्त्वानां भुवनानां च कलानां च विभागतः ॥ १४९ ॥

अध्वषट्कं तदेतच्च संविद्येव सदा स्थितम् ।
यत् तत्र नहि विश्रान्तं तन्नभःकुसुमायते ॥ १५० ॥

देहावच्छिन्नतां याता सा संविच्चास्ति यत्नतः ।
बाह्यं त्यक्त्वाऽथ देहस्थो देशाध्वाऽयं विविच्यते ॥ १५१ ॥

तत्र प्रौढिमुपायातो बाह्येऽधिकृतिमश्नुते ।
बाह्यं वा नैव किञ्चित् स्यादस्य स्वात्मतया स्थितेः ॥ १५२ ॥

भुवनानां तु संक्षेपस्तत्त्वेषु परिकीर्तितः ।
कलासु चैव तत्त्वानां सक्षेपः समुदाहृतः ॥ १५३ ॥

निवृत्तिः पृथिवीतत्त्वे स्मृता तत्त्वनिवृत्तितः ।
जलात् प्रकृतितत्त्वान्तं प्रतिष्ठा समुदाहृता ॥ १५४ ॥

आप्यायनं पूरणं च कुर्वन् यत्र गणे स्फुटम् ।
प्रतिष्ठा हि द्विधा सद्भिः प्रोक्ता शास्त्रार्थपारगैः ॥ १५५ ॥

पुंसः प्रभृति मायान्तं विद्या सद्भिः प्रकीर्तिता ।
वेद्यतायास्तिरोभावकरणात् स्वगणे सदा ॥ १५६ ॥

शुद्धविद्यादि शक्त्यन्ते शान्ता तु पण्डितैः स्मृता ।
भेदस्य दूरीकरणादस्मिंस्तत्त्वगणे स्फुटम् ॥ १५७ ॥

शान्त्यतीता स्मृता सद्भिः साक्षाच्छिवतया स्वयम् ।
शान्तेरपि कथा नात्र विद्यते हि परे पदे ॥ १५८ ॥

कलातीतः परशिवः कलायुक्तश्च नित्यशः ।
सर्वदा सर्वरूपत्वान्महापूर्णतया स्थितेः ॥ १५९ ॥

अध्वपञ्चकमत्रैव पञ्चके प्रविभाजितम् ।
शास्त्रेषु नेह तत् प्रोक्तं विस्तृतेर्भयतः स्फुटम् ॥ १६० ॥

कलाध्वप्रविभागेन सर्वाध्वशोधनं स्थितम् ।
दीक्षायां येन सा लोके कलादीक्षेति संस्मृता ॥ १६१ ॥

स्वच्छन्दादिषु सा दीक्षा कर्मकाण्डेऽतिविस्तृते ।
ज्ञानमार्गे यतोऽस्माकं प्रस्थानं न ततोऽधिकम् ॥ १६२ ॥

अध्वानां त्रितयं चैतद् वाच्यभावेन संस्थितम् ।
स्वरूपत्वात् स्वरूपं हि वाच्यमेव स्मृतं बुधैः ॥ १६३ ॥

कलाध्वा तत्र दीक्षायां बाहुल्येनोपयुज्यते ।
भुवनाध्वाऽतिविस्तीर्णो देहे नो लभ्यते स्फुटम् ॥ १६४ ॥

तत्त्वाध्वा केवलं त्वत्र वर्णनीयतया स्थितः ।
उत्तरस्मिन् प्रकरणे तच्चर्चा भाविनीत्यलम् ॥ १६५ ॥

संग्रहेणाथ योग्यर्थे देशकालविगालनम् ।
चक्रदृष्टान्तरीत्येदं वक्ष्ये गुरुमुखाच्छ्रुतम् ॥ १६६ ॥

कालचक्रमिदं नाभौ चिदाख्यायां वहत्यलम् ।
सामान्यस्पन्दनोदेन चेतनाख्येन नित्यशः ॥ १६७ ॥

तच्चेतनं च यै रुद्धं येन केनाप्युपायतः ।
तेषां तत्र वहत्येव चिन्नाभौ स्थितिमागतम् ॥ १६८ ॥

ज्ञानमात्रेण चिन्निष्ठा यैः प्राप्ता शक्तिपाततः ।
अयत्नं कालचक्रस्यावहनं तेषु सिद्ध्यति ॥ १६९ ॥

मध्यधामावलम्बोऽपि गुरूणां दयया श्रितः ।
महानुपायस्तत्रस्थो यत्नकालवशं व्रजेत् ॥ १७० ॥

मध्यधामावलम्बोऽयं निर्णीतो बहुशः पुरा ।
स्वयमेवाश्रयणीयो नान्यस्यात्र गतिर्यतः ॥ १७१ ॥

तत्रस्थस्य च नो कालो नो देशोऽप्यस्ति कश्चन ।
समाधिः सोऽयमेवासौ निर्विकल्प इति स्मृतः ॥ १७२ ॥

तत्र स्थितिर्दुर्लभैव महायोगिवरैरपि ।
प्रभोरनुग्रहात् तस्य प्राप्तिर्गुरुदयात्मकात् ॥ १७३ ॥

तदसम्भवयोगे तु प्राणवृत्तिनिरोधतः ।
कालचक्रं निरुध्येत् तु चिन्नाभौ युक्तितो नरः ॥ १७४ ॥

प्राणवृत्त्यनुसारेण समनन्तरमीरितः ।
मन्त्रोच्चारादिना चायं कालरोधो मया स्फुटम् ॥ १७५ ॥

इदानीं चक्रदृष्ट्या तु कालचक्रस्य रोधनम् ।
कालचक्रान्तरावेशक्रमेण कथ्यते स्फुटम् ॥ १७६ ॥

बाह्ये चक्रस्य दीर्घत्वं मध्ये मध्यतया स्थितिः ।
ह्रस्वत्वं नाभिदेशेऽस्ति नाभ्यन्तः परमाणुता ॥ १७७ ॥

न किञ्चित्तु स्थितं तत्र सन्धौ तु नाभिचक्रयोः ।
चक्रस्य भ्रमणं सिद्धयेन्नान्यथेति विनिश्चयः ॥ १७८ ॥

नाभ्युपरि स्थितं चक्रं हि नाभिं विनैव भ्रमति, तच्च मध्ये शून्यं विना न सम्भवेदेवेति भावः ।

नाभिभागा बाह्यभागाः समा एव समन्ततः ।
नाभिभागास्तु ह्रस्वाः स्युर्बाह्या दीर्घतया स्थिताः ॥ १७९ ॥

मध्ये मध्यतया दृष्टिश्चक्रभागेषु सर्वतः ।
नाभ्यन्तरे तु कोऽप्यंशो निरंशत्वेन संस्थितः ॥ १८० ॥

तन्मात्रमेव बाह्येऽपि दीर्घत्वं परमार्थतः ।
सूत्रपातेन निर्णीय तदेतद् बुद्धिशालिभिः ॥ १८१ ॥

कोऽपि लेशोऽत्र गन्तव्यो नाभिमध्ये न विद्यते ।
बाह्ये गन्तव्यताभ्रान्तिर्मिथ्या स्फुरति देहिनाम् ॥ १८२ ॥

सर्वं शून्ये विगाल्यात्र बाह्यं मध्यं च सर्वथा ।
नाभिमध्ये स्थितिं कृत्वा चक्रव्यापी भवेन्नरः ॥ १८३ ॥

लङ्घनीयं न तस्यात्र लेशमात्रमपि स्फुटम् ।
चक्रव्याप्तिर्नाभिदेशे स्थितस्य हि स्वयं भवेत् ॥ १८४ ॥

कालचक्रेऽपि बाह्योऽयं विस्तरो दीर्घतापदम् ।
मध्ये मध्यमभावोऽथ नाभौ चैवातिसूक्ष्मता ॥ १८५ ॥

नाभिमध्ये निरंशत्वं चक्ररीत्यैव संस्थितम् ।
चिदप्येषा हि सांश्येव चेत्यांशवशतो भवेत् ॥ १८६ ॥

बाह्यभागोऽत्र सूर्यादिसंसा(चा)रः पण्डितैः स्मृतः ।
मध्यमः प्राणरूपोऽत्र चितिर्नाभिः स्वयं स्थिता ॥ १८७ ॥

शून्यमत्रापि सन्धौ स्याच्चितः प्राणस्य चान्तरे।
वातस्य हि प्रचारोऽस्ति शून्य एव बहिः स्फुटम् ॥ १८८ ॥

बाह्यभागा नाभिभागाः समा अत्रापि संस्थिताः।
चितेरंशे न कल्पादिः सम एव यतः स्थितः ॥ १८९ ॥

परमार्थविचारे तु चितिभागो निरंशकः।
कल्पादेरधिको ज्ञेयः कालातीततया स्थितेः ॥ १९० ॥

कालग्रस्तैव चिच्चेत् स्यात् कालस्य ग्रहणं तदा।
कः कुर्यान्नहि तद्ग्रस्तस्तस्यैव ग्रहणे क्षमः ॥ १९१ ॥

काललीनैव चिच्चेत् स्याद् देशादेर्ग्रहणं तदा।
न भवेदन्यलीनो हि नान्यस्य ग्रहणे क्षमः ॥ १९२ ॥

भिन्नत्वं चितिभागानां चेत्यभेदेन यो वदेत्।
आकाशस्तस्य भिन्नोऽस्तु घटकुड्यादिभेदतः ॥ १९३ ॥
चितिभागे निरंशेऽपि कल्पादिसमताकृतौ।
अस्तीह विस्मयः को यत् तदतीतस्ततोऽधिकः ॥ १९४ ॥

अतिसूक्ष्मे चिदंशे यः कालभागोऽतिविस्तृतः।
स्फुरत्येव समत्वेन सावधानोऽत्र योगिराट् ॥ १९५ ॥

कालभागं न विस्मार्य चितिभागपरो भवेत्।
कालग्रासोऽस्य तेनैव जायते तत्क्षणात् स्फुटम् ॥ १९६ ॥

समाधौ योगिभिर्वर्षसहस्रेक्षणधीः कृता।
अत एवेत्यलं बह्व्या चर्यया योगिनिष्ठया ॥ १९७ ॥

न चायं भ्रम एवास्ति दीर्घे स्वल्पत्वनिश्चयः।
स्वल्पे दीर्घत्वदृष्टिर्या स भ्रमो मातृनिष्ठितः ॥ १९८ ॥

आदर्शे पर्वतादेर्यद् दर्शनं भ्रम एव सः।
आदर्शमात्रदृष्टिर्या सा सम्यग्दृष्टिरीरिता ॥ १९९ ॥

चिदंशस्पर्शयुक्तानां चिदंशस्यैव दर्शनम्।
बाह्यः कालोऽतिदीर्घोऽपि तर्हि तत्रैव गालितः ॥ २०० ॥

चिदंशस्पर्शहीनानां तद्दैर्घ्यं दृष्टिगोचरे।
स एवांशो हि तस्या यत् तेषां नवनवः स्थितः ॥ २०१ ॥

तद्दैर्घ्यं कालदैर्घ्येण भ्रमान्तेऽनुभवन्त्यथ।
दीर्घः कालो गत इति ततस्तेऽनुभवन्ति च ॥ २०२ ॥

सूर्यचारैस्तु तद्दैर्घ्यकरणं भ्रमतो भ्रमः ।
नान्यस्य चेष्टयाऽन्यत्र गुणाधानं हि युज्यते ॥ २०३ ॥

चेतनं हि चितो दैर्घ्यं कालदैर्घ्ये न मीयते ।
कालचेतनयोरैक्यं चित्स्पन्दत्वेन हि स्मृतम् ॥ २०४ ॥

चेतनाद् विमुखा ये ते प्राणाचारादि किञ्चन ।
न चेतन्ते ततस्तेषु कालस्य दीर्घता कथम् ॥ २०५ ॥

चेतनं तु विचा(सा)रोऽयं चितेः स्वात्मनि संस्मृतम् ।
तैलबिन्दोर्जले इव चक्रभावेन स स्थितः ॥ २०६ ॥

अंशानां कथनं चैतच्चितेर्मूढधियः प्रति ।
आकाशमपि नो किञ्चिच्चितः किञ्चित् कथं भवेत् ॥ २०७ ॥

बाह्यक्षणे तु यः कल्पभ्रमः सोऽतिभ्रमः स्मृतः ।
आभासोऽतिभ्रमो यस्मात् स्वप्ने स्वप्नान्तरं यथा ॥ २०८ ॥

आभासो योगिनां मध्ये भासते साध्यसाधने ।
मलो ह्युच्छिद्यमानोऽयं मूर्च्छन्नेवानुभूयते ॥ २०९ ॥

लग्नो मलस्तु नास्तीति भासते मूढबुद्धिषु ।
मलेनार्ता अपि ततो मूढास्तद्रहिता इव ॥ २१० ॥

प्रसक्तानुप्रसक्त्याऽलं कालग्रासस्तु योगिना ।
यथा तथैव कर्तव्य आनन्दः परमो ह्ययम् ॥ २११ ॥

बाह्यकाले स्थितो विद्वान् मध्यमं कालमाश्रयेत् ।
प्राणरूपं महायुक्त्या तृष्णां त्यक्त्वाऽर्थपूगतः ॥ २१२ ॥

प्राणस्यैव गतौ शक्तो बाह्यं किञ्चिन्न विन्दते ।
द्यूते शक्तो यथा धूर्तः श्रीयुक्तः कामुकस्तथा ॥ २१३ ॥

ततो बाह्यः प्राणमितः कालस्तस्य भवेत्ततः ।
तत्रत्यं दिनमेतस्यैतद्दिनेन समं भवेत् ॥ २१४ ॥

प्राणोच्चारबहुत्वेन दिनादेर्दीर्घता भवेत् ।
तन्निरोधे तु बाह्यस्य दीर्घत्वं किं कृतं भवेत् ॥ २१५ ॥

प्राणरोधः प्राणचाररतानां सुकरः स्मृतः ।
हठेन रोधो दुःखस्य कारणं कष्टदो यतः ॥ २१६ ॥

प्राणः शून्ये गालनीयः सन्धिबन्धतया स्थिते ।
शून्यं चिति लयीकुर्यात्नाभौ तत्र स्थितिं व्रजेत् ॥ २१७ ॥

तत्र स्थितोऽथ तन्मध्ये प्रविशेच्छुद्धरूपिणि।
अचेत्यचिन्मये तत्त्वे न किञ्चिन्मात्रदेहके ॥ २१८ ॥

शून्यस्य च लयः सोऽयं मेयता याऽत्र साक्षिणि।
तन्मेयीकृतकाले हि शिष्यते चितिरव्यया ॥ २१९ ॥

शून्यस्य मेयीकरणमनुमेयं सुषुप्तिगम्।
भाविना स्मृतिलिङ्गेन नाभूवमिति रूपिणा ॥ २२० ॥

चिति नाभौ निरंशायां स्थितः स योगिराट् ततः।
व्यापकः कालचक्रस्य भवत्येव न संशयः ॥ २२१ ॥

तस्यामेव निरंशायां कालांशाः सकला इमे।
प्रोता भवन्ति सूत्राणि मणाविव निरन्तरम् ॥ २२२ ॥

ततस्तां चितिमेवासौ स्वात्मभावेन पश्यति।
निजां सत्तां तु तत्सत्तामात्ररूपां विभावयन् ॥ २२३ ॥

स्वातन्त्र्येणाथ निर्यातः कालचक्रमिदं महत्।
चितः स्पन्दतया ज्ञात्वा स्वस्पन्दत्वेन भावयेत् ॥ २२४ ॥

सर्वप्राणिगतान् स्पन्दान् स्वाश्रयत्वेन भावयन्।
सर्वकर्ता भवत्येव योगी संशान्तकल्पनः ॥ २२५ ॥

सर्वज्ञता ततस्तस्य भवेदेव न संशयः।
सिद्धा यतो न कर्तृत्वं ज्ञातृत्वेन विना भवेत् ॥ २२६ ॥

ईश्वरत्वं ततस्ताभ्यां तस्य सिद्धं भवेद् यतः।
ज्ञातृताकर्तृते तज्ज्ञैरीश्वरत्वमुदाहृतम् ॥ २२७ ॥

योगित्वस्य पराकाष्ठा सेयं सद्भिरुदाहृता।
यदीश्वरतया स्फूर्तिः स्वस्मिन्नो बाह्य ईश्वरे ॥ २२८ ॥

महेश्वरत्वमायातो योगी सम्राडिव स्थितः।
कृपणत्वं समभ्येति क्वचिन्नैव कदाचन ॥ २२९ ॥

देहनाशं समायातं स्वकृतं ह्येष मन्यते।
तेनास्य देहनाशोऽपि न स्याद्वैवश्यकारणम् ॥ २३० ॥

अन्यनाशेऽथ सम्पन्ने वैवश्यस्य कथैव का।
देहान्नैवाधिकं किञ्चिज्जगति स्नेहभाजनम् ॥ २३१ ॥

बाह्यभूतिसमायोगादीश्वरत्वभ्रमस्तु यः।
स वस्तुनाशे सञ्जाते नश्यत्येव क्षणात् स्वयम् ॥ २३२ ॥

ईश्वरत्वं तदेवास्ति कार्पण्यं नैव जातु यत् ।
भावाभावेषु प्राप्तेषु प्रवाहाद्विधिचोदितात् ॥ २३३ ॥

देहनाशः पराकाष्ठा नाकाष्ठामिह संस्मृता ।
तत्र ये नैव कार्पण्यं गतास्तेभ्यो नमो नमः ॥ २३४ ॥

देहादप्यधिकस्नेहो येषां भावेषु विद्यते ।
देहादधोगतास्ते स्युस्तत्कथा नेह चर्च्यते ॥ २३५ ॥

कृतमप्रकृतेनेह गताश्चर्चा इमा यतः ।
कालचक्रं विनिर्णीतं देशचक्रं निरूप्यते ॥ २३६ ॥

आश्यानीभूततां यातः प्रकाशाख्यो महेश्वरः ।
सन्मात्रभावं यात्येव सत्ताकर्तृतया स्थितेः ॥ २३७ ॥

देशीभवति भावाख्यं भावाधेयगणं प्रति ।
आधेयं च स एवास्ति तद्रूपे देश ईश्वरः ॥ २३८ ॥

अन्यथा भावपूगोऽयं किंमयः क्व च तिष्ठतु ।
भासमानस्य नास्तित्वं न दृष्टं न च सम्भवि ॥ २३९ ॥

भूमिश्च भाववत् तत्र भूमिभूतेऽस्ति संस्थिता ।
न भूमिर्दृश्यमानाभूर्भूमिस्तु भित्तिरुत्तमा ॥ २४० ॥

तत्र भूमौ स्थिताः सर्वा भूम्याद्या भाण्डपङ्क्तयः ।
भासन्ते न तु भायुस्तास्तदभावे न संशयः ॥ २४१ ॥

भासन्ते तु ततो ज्ञातं भूमिः काऽप्यस्ति शोभना ।
यदेकदेशे भातीदं भाववृन्दं समन्ततः ॥ २४२ ॥

सर्वाक्रान्तौ तु नो भायाद् भावशून्या समन्ततः ।
सुषुप्त्यादौ तथा तुर्ये तदतीतेति सर्वदा ॥ २४३ ॥

सुषुप्तौ या तु सङ्कोचवृद्धिः सा भ्रम एव नः ।
सत्यत्वे कुत्र तिष्ठेत् तद् भातं शून्ये तदास्पदे ॥ २४४ ॥

तच्छून्यं भावपक्षे तु यदि ज्ञातं तदा जितम् ।
त्वयाऽपि तुर्यधाम्न्यस्मिन् गन्तुकामेन सुस्फुटम् ॥ २४५ ॥

स्वयं तुर्यपदं प्राप्तो विस्मृतिं तस्य विन्दसे ।
तत्र भावकथा नास्ति विस्तरोऽस्ति महत्तरः ॥ २४६ ॥

सा भूमिः शिवरूपाऽस्तु शक्तिरूपाऽथवा ग्रहः ।
चक्रभावेन साऽप्येव ज्ञातव्या कालवत् स्फुटम् ॥ २४७ ॥

एवं भगवतो मूर्तिर्देशभावेन संस्थिता।
चक्रभावेन साऽप्येव ज्ञातव्या कालवत् स्फुटम् ॥ २४८ ॥

किन्तु कालस्य वहनं क्रियाभावेन संस्थितेः।
दृढा स्थितिः स्वरूपत्वादस्य पूर्वतरैः स्मृता ॥ २४९ ॥

परमार्थेन कालोऽपि न वहत्येव कुत्रचित्।
नहि तस्यैव तत्रैव वहनं वहनं स्मृतम् ॥ २५० ॥

मूर्तिस्वरूपो देशाध्वा स्थितोऽसौ चक्रभावतः।
बहिर्दीर्घोऽस्ति मध्ये तु मध्यरूपः स्मृतो बुधैः ॥ २५१ ॥

नाभिदेशेऽतिसूक्ष्मोऽसौ नाभिमध्ये निरंशकः।
सन्मात्रभावतो यस्मात् सत्ताऽसौ शून्यरूपिणि ॥ २५२ ॥

बाह्यं ब्रह्माण्डदेशोऽस्य मध्यदेशस्तु देहकः।
सन्मात्रमन्तरो देशो नाभिभावेन संस्थितः ॥ २५३ ॥

नाभेर्मध्यं निरंशं तु सत्तामात्रं प्रचक्षते।
सत्तारब्धं हि सन्मात्रं कथ्यते मूढबुद्धिषु ॥ २५४ ॥

सन्मात्रभागा ब्रह्माण्डदेहभागाः समानताम्।
भजन्त्येव हि सत्तायां को भेदोऽणोः शिलोच्चयात् ॥ २५५ ॥

मेरुसर्षपयोर्नास्ति भेदः कोऽपि विशेषकृत्।
आरम्भकाविशेषेण परमार्थविदः प्रति ॥ २५६ ॥

आरम्भकाणां बहुतान्यूनते कल्पिते तु ये।
ते तयोर्भेदमाधातुं न क्षमे स्तः स्वभावतः ॥ २५७ ॥

निरंशो बहुरप्यस्तु न्यूनो वा काऽत्र भेददृक्।
नह्याकाशेन कुत्रापि किञ्चिदारभ्यते स्वयम् ॥ २५८ ॥

शब्दारम्भकता त्वस्य कथ्यते भ्रान्तियोगतः।
स एवारम्भको ह्यस्य तन्मात्रत्वेन संस्थितः ॥ २५९ ॥

आरम्भकनिरंशत्वं बाह्यानामपि सम्मतम्।
सांशत्वे सोऽपि कार्यं स्यात् सोऽपि चेत्यनवस्थितिः ॥ २६० ॥

याऽत्र स्थौल्यमतिः सेयं भ्रमो न सत्यदृष्टिता।
दृष्टिः सङ्कुचिता रन्ध्रात् सूक्ष्मं स्थूलं प्रपश्यति ॥ २६१ ॥

सन्मात्रभावतः सत्यभावस्तेष्वपि विद्यते।
स्थूलत्वकल्पनामात्रं भ्रमतस्तत्र संस्थितम् ॥ २६२ ॥

एवं ब्रह्माण्डदेशं तु योगी देहे लयं नयेत् ।
भूतपञ्चकसारं हि द्वयमेतत् समं स्थितम् ॥ २६३ ॥

देहाद् गतोऽथ शून्यं च सन्धिभावेन संस्थितम् ।
त्यक्त्वाऽथ नाभिदेशेऽत्र सन्मात्रे स्थितिमावहेत् ॥ २६४ ॥

सन्मात्रमध्यभागस्य सत्तामात्रे स्थितिं चरेत् ।
तत्र स्थितो न भेदेन ग्रस्तो योगी भविष्यति ॥ २६५ ॥

स्वातन्त्र्येणाथ निर्यातः शून्यादिकमिदं जगत् ।
सन्मात्ररूपं पश्यन् वै काले स्वमयतां नयेत् ॥ २६६ ॥

सर्वरूपोऽथ तेनायं भात्येव परमेश्वरः ।
अतिदृ(तृ)प्ततया क्वापि कार्पण्यं नैव गच्छति ॥ २६७ ॥

देशग्रासो भवेदेवं योगिनः सिद्धिमीयुषः ।
देशग्रासेऽस्य सर्वं तु स्वान्तर्गततया स्फुरेत् ॥ २६८ ॥

ततो ब्रह्माण्डमपि नो अस्य गम्यतया स्फुरेत् ।
स्वान्तर्गतं हि गम्यं स्यात् कस्य मूढमतेरपि ॥ २६९ ॥

देशचक्रेऽथवा बाह्यं जाग्रद्दृष्टं जगद्भवेत् ।
स्वप्नदृष्टं मध्यमं स्यात् सुषुप्तिः सन्धिरुच्यते ॥ २७० ॥

नाभिस्तु चितिराख्याता चक्राधारतया स्थिता ।
शुद्धचिन्नाभिमध्यं तु प्रोक्ता चैत्यकथा महा ॥ २७१ ॥

जाग्रत् स्वप्नसमं कार्यं कल्पनामात्रभावतः ।
स्वप्नः सुषुप्तितां नेयो न किञ्चिन्मात्रभावतः ॥ २७२ ॥

सुषुप्तं चितिभावं तु नेयं चित्साक्ष्यसिद्धितः ।
सा चिदचेत्यतां नेया साक्षित्वादपि निष्कृतेः ॥ २७३ ॥

चिन्मात्रनिष्ठः सन्मात्रप्रतियोगिक इष्यते ।
न कोऽपि भेदो विद्वद्भिर्विपरीतोऽथवा क्वचित् ॥ २७४ ॥

सन्मात्रप्राप्तश्चिन्मात्रप्राप्त इत्येव निश्चयः ।
सत्त्वं हि स्फुरणं तच्च चिते रूपं समुज्ज्वलम् ॥ २७५ ॥

क्रिया चितिमयी प्रोक्ता स्वं रूपं सन्मयं तथा ।
तदैक्यं तु विभुः प्रोक्तः प्रकाशामर्शरूपधृत् ॥ २७६ ॥

देशाध्वचक्रनाभिस्थः स्वातन्त्र्येण विनिर्गतः ।
सर्वं चिन्मयमेवेह पश्यत्यात्ममयं तथा ॥ २७७ ॥

चितिरूपं निजात्मानं भावपूर्णं समन्ततः ।
तुर्यातीतं गतः पश्यन् भवत्येव न संशयः ॥ २७८ ॥

देशचक्रं कालचक्रमित्येवं द्वितयं तु यत् ।
तदेवाध्वद्वयं प्रोक्तं क्रियामूर्त्तितया स्थितम् ॥ २७९ ॥

तत्र क्रियानुसारेण प्राप्ताः केऽपि परं पदम् ।
मूर्तिं त्वनुसरन्त्यन्ये जने भिन्ना रुचिर्यतः ॥ २८० ॥

प्राणयोगी क्रियामार्गरतः स्यात् तत्र सन्ततम् ।
ज्ञानयोगी स्वरूपाख्यमार्गनिष्ठः सदा भवेत् ॥ २८१ ॥

अवधानं द्वयस्यापि साधनं पण्डितैः स्मृतम् ।
बाह्यकर्मापि कस्यापि तद्विना नैव सिद्ध्यति ॥ २८२ ॥

व्यवहारपरस्येदमवधानं न सम्भवि ।
बाह्यापेक्षा केवलं हि सत्यमार्गे दृढाऽर्गला ॥ २८३ ॥

प्रवाहेणागतोऽनिन्द्यो व्यवहारोऽपि योगिनाम् ।
अनास्थया सेव्यमानो नावधानहरो भवेत् ॥ २८४ ॥

विशेषतो ज्ञानयोगी व्यवहारेऽपि नो व्रजेत् ।
वैवश्यं स्वमनस्तत्र तस्य साक्ष्यस्ति नापरः ॥ २८५ ॥

व्यवहारोऽपि यो धर्माच्छास्त्रोक्तान्न च्युतो भवेत् ।
देशकालाविरुद्धश्च स कार्यो नास्थया परम् ॥ २८६ ॥

प्राणरोधादिशिल्पेन योगित्वं केवले नये ।
कूटकर्मरताः स्वस्य जानते तान् न संस्पृशेत् ॥ २८७ ॥

उपेक्षा या तु सर्वत्र भावजातेऽस्ति देहिनाम् ।
योगिता सा निराबाधा नेन्द्रजालं न शिल्पिता ॥ २८८ ॥

खगमादिक्रिया या साऽस्तीन्द्रजालस्य जृम्भणम् ।
ज्ञानादौ सौष्ठवं यत्तु तच्छिल्पित्वं न बन्धुता ॥ २८९ ॥

कालाद् देशाद् विप्रकृष्टकीर्तनं यच्च दृश्यते ।
दम्भस्य जृम्भितं तत् स्यान्मन्त्रौषध्यादिसाधितम् ॥ २९० ॥

महोपेक्षायुतं तच्च येषां ते योगिनः स्मृताः ।
उपेक्षा जाड्यरहिता योगित्वं केवलं स्मृतम् ॥ २९१ ॥

सत्यदृष्टिः केवलेह योगित्वस्य सुलक्षणम् ।
ऐश्वर्यजृम्भणा युक्ता केवला वाऽस्तु का भिदा ॥ २९२ ॥

विप्रकृष्टार्थवक्तारो वञ्चका अपि दुर्जनाः ।
दृश्यन्ते न च तेनैषां योगित्वं परमार्थतः ॥ २९३ ॥

सत्यदृष्टियुता ये ते संतृप्ताश्चेतसि स्थिताः ।
सदा स्वेनैव नो भोगैरिति सिद्धान्तसंग्रहः ॥ २९४ ॥

सदा संतृप्तता चेयं न मूढेषूपपद्यते ।
वञ्चकेषु तरां तत्र तन्मनः साक्षि केवलम् ॥ २९५ ॥

स्वमनः कूटसाक्षि स्याद् येषां स्वं प्रति ते नराः ।
न संस्मृश्य यतस्तादृक् तेषां संगाद् भवेत् पुमान् ॥ २९६ ॥

अथवान्तर्दाह एव तेषां भगवता कृतः ।
दण्डः स्वेनेति का तेषु दयार्हेषु विगर्हणा ॥ २९७ ॥

ये शीतलास्त एतेऽमी बहिर्दाहयुता अपि ।
शीतला एव या चित्ते स्थितिः सा स्थितिरुच्यते ॥ २९८ ॥

तृष्णासंसक्तचित्तानां दृष्ट्वा दाहपरम्पराः ।
चित्ते मूकत्वमायाताः शिला अपि विमोहतः ॥ २९९ ॥

इति तृष्णां विहायैनामवधानपरो भवेत् ।
अध्वषट्कमतीत्याथो स्वे पदे स्थितिमाचरेत् ॥ ३०० ॥

तत्र प्राप्तोऽतिपूर्णः स्यात् स्वयमेव नभोगतः ।
पूर्णीभूयातिविश्रान्तः स्वच्छन्दसमतां व्रजेत् ॥ ३०१ ॥

यथा प्राप्तानुवर्ती स योगी संशान्तकल्पनः ।
जडकल्पश्चरेदत्र लोकेऽन्तस्तु सुभावितः ॥ ३०२ ॥

इत्यध्वषट्कं संक्षेपात् प्रोक्तं शास्त्रानुसारतः ।
आवृत्तिभूतमज्ञानां ज्ञानां स्वपददर्शकम् ॥ ३०३ ॥

इति श्रीमदाराध्यतमाचार्यवर्य-श्रीगुरुवरराजानकभास्करकण्ठविरचिते
चित्तानुबोधाख्ये महाशास्त्रे षडध्वनिर्णायकं नवमं
प्रकरणं सम्पूर्णम् । इति शिवम् ॥ ९ ॥

# दशमं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः ।
ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः ।
ॐ तदद्वयसामरस्यरूपायै गुरुपादुकायै नमः ।
ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः ।

ॐ अध्वषट्कं विनिर्णीतं पूर्वं सामान्यभावतः ।
वर्गा(र्णा)दिरूपः कालाध्वा त्रिधा यः सोऽपि वर्णितः ॥ १ ॥

देशाध्वा तु त्रिधा योऽत्र भुवनादिस्वरूपकः ।
तत्रापि च कलाध्वाऽयं संक्षेपेणैव वर्णितः ॥ २ ॥

भुवनाध्वप्रपञ्चो न तन्यते विस्तृतेर्भयात् ।
अवशिष्टस्तु तत्त्वाध्वा तदिदानीं विविच्यते ॥ ३ ॥

तत्त्वाध्वनिर्णयादेव भुवनाध्वविनिर्णयः ।
कृतो भवेद् यतः सोऽयं प्रपञ्चोऽस्यैव नो पृथक् ॥ ४ ॥

भुवनानां हि सामान्यं रूपं तत्त्वमिहोच्यते ।
वर्गीकृतिनिमित्तं हि तत्त्वशब्देन कीर्त्यते ॥ ५ ॥

वर्गीकृतिश्च सामान्यधर्मेणैवेह धर्मिणाम् ।
तच्छब्देन परामर्शो धर्मिणां हि विधीयते ॥ ६ ॥

त्वो निष्क्रिष्य ततो धर्मं तं पृथक् कथयत्यसौ ।
प्रवृत्तिहेतुः शब्दस्य य एवात्र स्थितः स्फुटम् ॥ ७ ॥

तं विना नहि शब्दोऽयं वाच्ये वृत्तिं भजेन्निजे ।
प्राणप्रदस्ततो धर्मस्तत्त्वशब्देन कथ्यते ॥ ८ ॥

भावे हि . सत्ता सा चेयमान्तरं रूपमिष्यते ।
स एव धर्मः सारो हि धर्मशब्देन कीर्त्यते ॥ ९ ॥

भुवनानां ततो धर्मास्तत्त्वानीति विनिश्चयः ।
धर्मा हि धर्मिणो रूपं पिण्डीभूताः प्रकीर्तिताः ॥ १० ॥

गन्धाद्याः संहता धर्मा एव पृथ्वीति कथ्यते ।
भुवनानीह तत्त्वानि संहतानीति निश्चयः ॥ ११ ॥

सत्त्वादिधर्मतो भिन्नं वस्तु नो इति बुध्यताम् ।
देशे काले समावेशात् कल्पनं व्यक्तिगोचरम् ॥ १२ ॥

देशकालौ स्वसत्तायां लग्नत्वान्न विशेषणम् ।
कस्यापीति पुरा प्रोक्तं पुनर्नाऽभ्यस्यते बहुः ॥ १३ ॥

एकविष्टपरूपेऽत्र तत्स्वभावप्रकल्पना ।
आकाश इव सामान्यकल्पनेति विनिश्चयः ॥ १४ ॥

भुवनानां कल्पना च भोक्तृभेदेन कल्पिता ।
एकस्मिन्नपि तत्त्वे हि भोक्तृबाहुल्यमिष्यते ॥ १५ ॥

अर्थित्वाद्यनुरोधाच्च तत्त्वमेकं विभिद्यते ।
एतच्चापि पुरा प्रोक्तमिति नाऽभ्यस्यते पुनः ॥ १६ ॥

अभेद एकरूपोऽत्र भेदाभेदेऽल्पताजुषः ।
भेदे तु बहवः सन्ति भोक्तार इति निश्चयः ॥ १७ ॥

देहसंविदि प्रोक्तेयं स्थितिर्बाह्यस्य कीर्तने ।
न शक्ताः स्मोऽथागमेभ्यस्तदेतन्मृग्यतां बुधाः ॥ १८ ॥

एकं हि पृथिवीतत्त्वं बाह्ये गन्तुं न शक्यते ।
अन्येषां का कथेत्येवं निश्चित्य शाम्यतां बुधाः ॥ १९ ॥

देहस्थितं तत्त्वजातं यो निर्णीय शिवः स्थितः ।
स व्यापकीभूय सर्वं स्वात्मगं बाह्यमीक्षते ॥ २० ॥

ईक्ष्यमाणस्य तस्याथ केच्छा बाह्यपदा भवेत् ।
स्वात्मारामस्य सर्वत्र व्याप्तिभाजः स्वरूपतः ॥ २१ ॥

अवरोहक्रमेणैव तत्त्वचर्चाऽत्र कीर्त्यते ।
नावरूढो हि नारोढुं योग्योऽस्तीति पुरोदितम् ॥ २२ ॥

स्वान्तःकृतसमस्तैतत् तत्त्वजालं परात्परम् ।
वस्त्वस्तीह न वेत्येवं प्रथमं प्रविविच्यते ॥ २३ ॥

तदनुक्तौ हि तत्त्वानां कथनं स्यान्निराश्रयम् ।
को हि भित्तिं विना लेख्यवैचित्र्यं तनुते नरः ॥ २४ ॥

परमार्थविचारे तु तस्य पूर्णस्य साधनम् ।
खण्डनं चातिमूढानां चेष्टितं यद्यपि स्थितम् ॥ २५ ॥

तथापि लेशतः किञ्चित् स्वरूपं तस्य कथ्यते ।
सर्वंसहं हि तद् वस्त्वन्यथा क्व जगत् स्फुरेत् ॥ २६ ॥

तत्त्वे किमपि पूर्णं स्याद् यत्र सर्वमिदं खलु।
भाति सत्तां ततः प्राप्य तदभावे तु किं स्फुरेत् ॥ २७ ॥

[1]"यत्र स्थितमिदं सर्वं कार्यं यस्माच्च निर्गतम्।
तस्यानावृतरूपत्वान्न निरोधोऽस्ति कुत्रचित्" ॥ २८ ॥

इत्युक्तं हि पुराविद्भिः स्पन्दशास्त्रे स्फुटं ततः।
सर्वाधारं सर्वसारं वस्तु किमपि विद्यते ॥ २९ ॥

पूर्णं सर्वमयं किञ्चित् सर्वातीतं च युक्तिमत्।
सर्वं स्याद् यन्मयं यत्र सर्वदा सर्वपूरिते ॥ ३० ॥

बीजे हि वृक्षा बीजाढ्या वर्तन्तेऽभ्यन्तरेऽन्यथा।
निर्गच्छेयुः कथं तस्मान्निर्गतास्तस्य पूर्णताम् ॥ ३१ ॥

भावयन्ति जगत् तद्वद् भासमानं पुरः स्थितम्।
अनिर्वाच्यस्य कस्यापि पूर्णतां भावयेत् स्वयम् ॥ ३२ ॥

अनिर्वाच्यं तु तद् यस्माल्लाभोऽस्य नास्ति केनचित्।
अभावस्तावता नास्य वक्तुं युक्तोऽतिसौक्ष्म्यतः ॥ ३३ ॥

सर्वेन्द्रियगणातीतं कथं नास्तीति शक्यते।
वक्तुं वस्तु निराबाधं स्वकार्यैः पुरतः स्थितम् ॥ ३४ ॥

भावैः शक्यतया भातैः शक्तियुक्तस्तु शक्तिमान्।
कल्प्यते कल्पनेयं वा का पूर्णस्य विभासतः ॥ ३५ ॥

भावसन्धौ चातिशुद्धं रूपं तस्य विभासते।
सदैव स्फुटमेवेह काऽत्र युक्तिविगर्हणा ॥ ३६ ॥

अलं वा बाह्यरीत्यैतत् कथनेन परान् प्रति।
तदसत्त्वेऽहमेव स्यां को योऽस्मि कथने रतः ॥ ३७ ॥

नास्मीति जल्पनं हास्यदूषितं किं न जृम्भते।
जिह्वा मे नेति हि वचो हास्यकृत् किं न कथ्यते ॥ ३८ ॥

देहादावात्मभावस्तु पूर्वमेव निवारितः।
स्वसत्तैषा परस्यैव सत्तेति शाम्यतां हृदि ॥ ३९ ॥

विधानमपि नो युक्तमत्र केतरकल्पना।
विधायकतया माता सन् किं विधिपदं नयेत् ॥ ४० ॥

---

१. स्पन्दकारिका २।

नयद्वयमसिद्धोऽयं किं साधयति मूढधीः ।
साधयन् साधने लग्ने न स्वयं सिद्धिमृच्छति ॥ ४१ ॥

सिद्धिं गतोऽथवा पूर्वां कां सिद्धिं लभतेऽत्र सः ।
तल्लाभे जडपक्षे स्यात् तत्कथा नेह शोभते ॥ ४२ ॥

पूर्वां सिद्धिं प्राप्स्यमानः पिष्टपेषणकृद्भवेत् ।
इत्यात्मविषयं जातु साधनं नोपपद्यते ॥ ४३ ॥

तदयोगे निषेधस्य का कथाऽत्र विराजते ।
विधिपूर्वो निषेधो हि स्वतः सिद्धे द्वयं मृषा ॥ ४४ ॥

तदसत्त्वं कल्पितं वा तत्सत्त्वं साधयेत् स्फुटम् ।
कल्पना हि परामर्शः परामृष्टाऽत्र सुस्फुटः ॥ ४५ ॥

स च प्रकाश एव स्याद् विमर्शो हि प्रकाशयुक् ।
यत् प्रकाशविमर्शैक्यं तत् तत्त्वं परमं पुनः ॥ ४६ ॥

यत्तु विज्ञानभावोऽस्य प्रकाशस्य विगीयते ।
विमर्शस्य विकल्पत्वं तद् द्वयं विनिवार्यते ॥ ४७ ॥

देहाद्युपाधिदोषेण द्वयेऽत्र द्वयता भवेत् ।
स्फुटं तन्नाशशीलं स्यात् तद्द्वयस्यास्य का कथा ॥ ४८ ॥

देहाद्युपाधिकालेऽपि देहादेस्तत्पृथक्कृतिः ।
शक्त्यैव सावधानानां कोऽनुभूतिं न विश्वसेत् ॥ ४९ ॥

पृथक्कृतं च तद् व्यापि सर्वत्रैव भवेत् स्वतः ।
घटादेर्हि विनिर्मुक्तं वियद् व्यापकमीक्षते ॥ ५० ॥

व्यापकत्वं गतं तच्च सर्वभावप्रपूरकम् ।
भवेदेव यतो बाह्य आकाशस्तादृगिष्यते ॥ ५१ ॥

बाह्याकाशो हि वातादिभावमासाद्य सत्त्वतः ।
भौतान् भावान् पूरयति स्वयं सारतया स्थितेः ॥ ५२ ॥

बाह्याकाशस्य सामर्थ्यं यत्रैवं परिदृश्यते ।
तत्पूरकस्य तत्रेदं किं परस्य न युज्यते ॥ ५३ ॥

तदेव शिवशक्त्यैक्यरूपं वस्तु प्रकीर्तितम् ।
प्रकाशो हि शिवः प्रोक्तो विमर्शः शक्तिरुच्यते ॥ ५४ ॥

तदेतत्पूरितं विश्वं भवेदेतत्स्वरूपकम् ।
शिलापि तस्माज्जगति प्रकाशामर्शपिण्डिका ॥ ५५ ॥

शिलाया अपि चैतन्यं साधितं बहुशः पुरा।
सामान्येन विशेषो हि धातुसंयोगवृत्तिजः॥ ५६॥

अन्यथा सन्निपाते स्यात् कथं चैतन्यविप्लवः।
औषधैस्तत्प्रतीकारश्चेति संश्रुत्य शाम्यताम्॥ ५७॥

प्रकाशामर्शपूर्णत्वमेव चैतन्यजृम्भणम्।
पृथक् तौ जडकल्पत्वतुच्छत्वाभ्यां विदूषितौ॥ ५८॥

प्रकल्प्यैतच्च सम्प्रोक्तं पृथक् तौ नहि जातुचित्।
पौर्वापर्यभ्रमो योऽत्र सोऽपि मातृप्रकल्पितः॥ ५९॥

विषयोऽप्येक एवास्ति तयोः सर्वत्र सर्वदा।
प्रकाशेन गृहीतं हि विमर्शेनावसीयते॥ ६०॥

विषयस्य विभेदोऽत्र सन्नप्येव न किञ्चन।
ग्रस्तः को ग्रसितारं स्वं ग्रस्तीकर्तुं भवेत् क्षमः॥ ६१॥

प्रकाशामर्शयोरैक्यमेव तस्मात् सुयुक्तिमत्।
तन्मात्रं भावजातं स्यात् तोयमात्रं यथा हिमम्॥ ६२॥

माताऽत्र मातृका प्रोक्ताऽहमामर्शस्वरूपिणी।
प्रकाशस्तु पिता प्रोक्तो बीजवापनपण्डितः॥ ६३॥

तद्योगे तु समुत्पत्तिर्भावानां पुत्ररूपिणाम्।
वर्णानां चापि सम्प्रोक्ता वाच्यवाचकभावतः॥ ६४॥

प्रत्येकं सर्वभावास्तच्छिवशक्तिस्वरूपिणः।
प्रत्येकता च का वाऽत्र सन्धिबन्धविवर्जनात्॥ ६५॥

सन्धिबन्धेषु भावानां यद् वस्तु भेदकारणम्।
तद्भावेभ्यो विशिष्यैव शिवशक्त्यैक्यरूपकम्॥ ६६॥

तत्सर्वं शिवशक्त्यात्मवस्त्वेकं पण्डितैः स्मृतम्।
एकत्वमपि वा किं को द्वितीयोऽत्र विजृम्भते॥ ६७॥

अनिर्वाच्यं तदेतत् स्याच्छिवशक्त्यैक्यमद्भुतम्।
अनिर्वाच्यत्ववाक् चात्र विषयित्वं न विन्दते॥ ६८॥

यया तयाऽपि वाचा तत् प्रोच्यते परमं पदम्।
असम्भवप्रवृत्त्याऽलं कस्यैतत् कथने गतिः॥ ६९॥

अघोराख्यो मन्त्रराजो वाचकोऽस्य स्मृतो बुधैः।
शैवे नयेऽतिनिपुणैः परतत्त्वपरायणैः॥ ७०॥

ओंकारसहितं धाम विश्वातीतं विभोः पदम् ।
वक्ति योगेन रूढ्या चारम्भेऽन्ते च वै स्थितम् ॥ ७१ ॥

सम्पुटीकृतिरेवास्ति कुलस्याकुलकर्तृका ।
बीजान्निर्गत्य वृक्षो हि पुनर्बीजे विशत्यलम् ॥ ७२ ॥

"काकीमुखं ककारान्तं मकारं चेतनामुखम् ।
सकारस्य तु लुप्तस्य कोऽर्थः संप्रतिपद्यते" ॥ ७३ ॥

गीतासारेऽपि चेत्येवं विभुनाऽयमुदीरितः ।
अर्थो नीत्वेति संस्थाप्य शेषत्वेनेत्यलं बहु ॥ ७४ ॥

एतदेव च सम्प्रोक्तं तन्त्रालोकेपि दैशिकैः ।
[1]"तदिदं विश्वमन्तःस्थं शक्तौ साऽनुत्तरे पदे ॥ ७५ ॥

तत् तु स्यामिति यत् सत्यं विभुना सम्पुटीकृतिः" ।
[2]"तदेतत्त्रितयं धर्मयोगात् संघाततां गतम् ॥ ७६ ॥

एकमेव परं रूपं भैरवस्याहमात्मकम्" ।
इत्येवं भैरवस्तस्मात् स्वान्तर्नीतद्वयाद्वयः ॥ ७७ ॥

अनुत्तरेण वर्णानां सम्पुटीकृतिरत्र या ।
प्रत्याहारतया पाठे साऽप्यत्रैवास्ति निष्ठिता ॥ ७८ ॥

रहस्योद्घाटनेनालं बहुनाऽत्र विदूषिता ।
वाचालता रहस्येषु यस्मात् सद्भिः पुरातनैः ॥ ७९ ॥

द्वात्रिंशदक्षरीमध्ये वक्ति सर्वमयं वपुः ।
मोचकं बन्धकं चापि तथा मोहविधायकम् ॥ ८० ॥

शान्तानां तत्र रूपाणां मोचकत्वं स्मृतं बुधैः ।
उग्राणां बन्धकारित्वं तराणां मोहकारिता ॥ ८१ ॥

शक्तयो रूपभूता या अघोरस्य महात्मनः ।
मन्त्रराजे तु ताः सर्वा न संस्कार्यतया स्थिताः ॥ ८२ ॥

अथवाऽण्डः समाख्यातो हकारोऽत्र मनीषिभिः ।
बिन्दुश्चैतन्यवागत्रोनता षष्ठस्वरोदिता ॥ ८३ ॥

तदूर्ध्वे मन्त्रराजस्तु वर्णत्वात् त्रिंशदात्मकः ।
पारमित्यविनाशाय प्रोक्तः श्रीविभुना स्वयम् ॥ ८४ ॥

---

१. तन्त्रालोकः ३।२०५-२०६ । २. तन्त्रालोकः ३।२०७-२०८ ।

तदूर्ध्वे यो हकारोऽस्य स शिवत्वप्रकाशकः।
पुनरेव हि जीवोऽयं शिव एव स्वभावतः॥ ८५॥

कुलाकुलगतं त्वैक्यं पूर्णात् पूर्णतया स्थितम्।
सम्पुटीकृतमन्त्रस्य वाच्यं परकुलात्मकम्॥ ८६॥

पराबीजे सिद्धतया प्रोक्तमेतद् विशेषतः।
साध्यमानं मन्त्रराजे शिवशक्त्यैक्यमद्भुतम्॥ ८७॥

स्वशक्त्यैक्यं गतः सोऽयं मन्त्रवाच्यो विभुः स्थितः।
प्रोक्तः परशिवः सद्भिः पूर्णतत्त्वैकनिष्ठितैः॥ ८८॥

निर्विण्ण इव सोऽन्तस्तु बाह्ये क्रीडोन्मुखः प्रभुः।
बाह्योद्याने नृप इव तत्त्वजातं प्रकाशयेत्॥ ८९॥

क्रीडां स्वान्तर्गतस्यैव बहिरुल्लासनं विदुः।
न लौकिकीं तया मूढ इवासौ यत् स्फुरेत् स्फुटम्॥ ९०॥

स्वयं न तत्त्वरूपोऽसौ वेद्यभावाद् गतत्वतः।
तत्त्वाभावो हि वेद्यत्वं मातॄणां विषयत्वतः॥ ९१॥

भगवान् सर्वव्यापी तु सर्वतत्त्वेषु संस्थितः।
सारभावेन तेनायं महासामान्यरूपकः॥ ९२॥

बाह्यैः सत्ता तु या प्रोक्ता महासामान्यभावतः।
सा विशेषैकदेशोऽत्र महासामान्यरूपिणि॥ ९३॥

एकं तत्त्वं तु तत् प्रोक्तं सर्वतत्त्वानुगामि यत्।
वेद्यत्वं नात्र युक्तं तु वेदकाभावतः स्फुटम्॥ ९४॥

सप्तत्रिंशं ततस्तत्त्वं तदेतत् परिकीर्तितम्।
प्रकाशामर्शरूपं तच्छिवशक्त्यैक्यरूपकम्॥ ९५॥

सप्तत्रिंशत्त्वमेतस्य प्रकल्प्य कथ्यते बुधैः।
व्याप्यापेक्षो व्यापकस्य संख्यायोगो हि नेष्यते॥ ९६॥

अष्टत्रिंशत्त्वमप्यस्य कथ्यते ज्ञैः कदाचन।
शिष्योपदेशकाले तु पारमित्यनिवृत्तये॥ ९७॥

सर्वेऽत्र सर्वदा सर्वं तदस्त्येवेह सर्वथा।
संख्यायोगोऽस्तु को नाम युक्तो ब्रूतात्र पण्डिताः॥ ९८॥

स्वस्वरूपैकविश्रान्तिर्याऽहंस्पर्शस्वरूपिणी।
अस्य शक्तिस्तदेवेदं स्वातन्त्र्यं नान्यगं तु तत्॥ ९९॥

अस्वतन्त्रस्य विश्रान्तिः परत्रैव सदोचिता ।
अन्यथाऽस्यास्वतन्त्रत्वं किं नाम स्यान्न विद्महे ॥ १०० ॥

अहमेवेति विश्रान्तिः परापेक्षाविनाशिनी ।
स्वस्मिन् स्वस्यामनेका स्यात् परापेक्षा स्वसिद्धितः ॥ १०१ ॥

तत् स्वातन्त्र्यं परशिवे चिदानन्दस्वरूपकम् ।
इच्छाज्ञानक्रियाख्यं च पिण्डीभूतं निजात्मनि ॥ १०२ ॥

चितिः स्वात्मपरामर्श आनन्दस्तच्च सत्कृतिः ।
बहिः प्रसरणेच्छा तु प्रोक्तेच्छाशक्तिरुत्तमैः ॥ १०३ ॥

ज्ञानं ज्ञेयं परामर्शो ज्ञेयजातस्य भाविनः ।
तत्स्फारणं क्रिया प्रोक्ता स्वभित्तौ ज्ञातृताजुषः ॥ १०४ ॥

स्थितं परशिवे त्वेतत् तादात्म्येनैव सर्वदा ।
भेदेनापि तथा नित्यं मातृभेदेन सुस्फुटम् ॥ १०५ ॥

भेदेऽस्य कथनं तत्र कुर्मस्तत्त्वविविक्तये ।
तत्त्वसोपानपङ्क्त्यैवावरूढो हि शिवः स्वयम् ॥ १०६ ॥

पशुभावं तत्र यात आरूढं(रोढुं) पुनरिच्छति ।
तयैव स्वपदं सोऽयं पतिभावाप्तये पुनः ॥ १०७ ॥

अवरोहो विहारोऽस्य स्वातन्त्र्येणैव तत्कृते ।
आरोहस्त्वन्यथाऽस्यात्र वैवश्येनैव तत्कृतेः ॥ १०८ ॥

परमार्थविचारे तु विहारः सोऽपि संस्मृतः ।
शिवस्य पशुभावो हि महास्वातन्त्र्यजृम्भितम् ॥ १०९ ॥

अज्ञानां दयया तावत् परमार्थो निगूहितः ।
प्रक्रियानिरतैस्तज्ज्ञैस्तदारोहणसिद्धये ॥ ११० ॥

शिवत्वादधिकस्तस्मात् पशुभावोऽस्ति तद्दृशा ।
शिवोऽवरोह आसक्तः पशुत्वारोहणोन्मुखः ॥ १११ ॥

आरूढस्य पशोर्योऽयं शिवीभावः स आस्पदम् ।
परभावस्य तस्येह चर्चा नास्त्येव लेशतः ॥ ११२ ॥

आरोहश्चावरोहश्च समावेव बुधैर्मतौ ।
यस्मात् परशिवोऽस्त्यूर्ध्वेऽधश्चापि सर्वदा स्थितः ॥ ११३ ॥

अधो यातस्य पृष्ठे स स्थितत्वाद् दूरगः स्मृतः ।
सामीप्येऽपि भृशं यस्मादूर्ध्वं गन्तुं स उद्यतः ॥ ११४ ॥

परस्तस्यैष दूरेऽपि स्थितत्वान्निकटे स्थितः ।
साम्मुख्ये हि स्थितं वस्तु दूरेऽपि निकटे स्थितम् ॥ ११५ ॥

अधोयातस्य दीनस्यारोहमात्रोत्सुकस्य तु ।
निरर्थकं भवत्प्रोक्तं तदेतत् त्वज्ञताजुषः ॥ ११६ ॥

अनुत्सुकेषु प्रोक्तं तु तरां व्यर्थीभवेद् यतः ।
प्राप्ता इव त एतेऽत्र सदा जाड्यस्य वैभवात् ॥ ११७ ॥

जाड्यस्य तु पराकाष्ठा महाचैतन्यरूपिणी ।
भवत्येव परं तत्र नाधिकार्यस्ति कश्चन ॥ ११८ ॥

असामर्थ्यं तु यत् तत्र तन्निन्द्यं केवलं मतम् ।
स्वातन्त्र्येण जडत्वं तु समाधेः परमं फलम् ॥ ११९ ॥

जाड्यं चैतत् परां काष्ठां गतं पूर्वैरुदाहृतम् ।
पृथिव्या एव नान्यस्य तत्त्वाधोवर्तनात् स्फुटम् ॥ १२० ॥

पृथ्वीतत्त्वं तु पूर्णं स्यात् सर्वैस्तत्त्वैर्निरन्तरम् ।
अन्यथा स्थूलता काऽस्य युक्ता स्यादिति विद्महे ॥ १२१ ॥

शिवतत्त्वे यथोर्ध्वे स्यात् स्थितः परशिवे तथा ।
पृथ्वीतत्त्वादधस्तात् स इति नः परमं मतम् ॥ १२२ ॥

सप्तत्रिंशोऽद्धयेनायं गण्यमानः पुनः पुनः ।
अन्यथा व्यापकत्वं स्यात् कथं तस्य महात्मनः ॥ १२३ ॥

तिरोदशेषु(शासु) चर्चाऽस्ति सेयमेव बुधैः स्मृता ।
सर्वथा व्यापकं ह्येतत् तत्त्वं परशिवात्मकम् ॥ १२४ ॥

तत्त्वानां सारभूतोऽपि सोऽयं परशिवः स्मृतः ।
अन्यथा तानि तुच्छानि भवेयुः शून्यभावतः ॥ १२५ ॥

शून्यभावोऽपि तेषां को भवेच्छून्यं हि तत्त्वगम् ।
तत्त्वानि तं विना नैव सत्तां यान्तीति साधितम् ॥ १२६ ॥

अधोऽवस्थापराकाष्ठां न कोऽपि सहते जनः ।
तदूर्ध्वोन्मुखतेवेयं बुधैः श्रेयस्करी मता ॥ १२७ ॥

महते यस्तु प्राप्तः स्यात् स इत्येवं विनिश्चयः ।
स्वातन्त्र्येण तु यज्जाड्यं सैषा वैकल्पिकी दशा ॥ १२८ ॥

शक्त्या सहैक्यमायातः पञ्चधा स्थितया शिवः ।
पञ्चधात्वं तु तस्यास्तद् द्रष्टुमुत्सुकितो भवन् ॥ १२९ ॥

विभागं पञ्चशक्तीनां सम्पन्नमिव पश्यति ।
स्वस्यापि शक्तभावेन जलमूर्मितया यथा ॥ १३० ॥

तत्त्वपञ्चकमेतच्च मातृचक्रेण संयुतम् ।
वेद्यभावेन भातं तु वद के तत्त्वरूपिणि ॥ १३१ ॥

चितियुक्तः शिवोऽत्रास्ति शिवतत्त्वत्वमागतः ।
आनन्दयुक्ता शक्तिस्तु सेच्छः सादाख्य उच्यते ॥ १३२ ॥

ईश्वरो ज्ञानसहितो विद्यातत्त्वं क्रियान्वितः ।
श्रीशिवः स्वयमेवैवं पञ्चतत्त्वतया स्थितः ॥ १३३ ॥

प्रकाशस्यैव प्राधान्यं शिवतत्त्वे स्थितिं गतम् ।
तेनैव शिवनामास्य तत्त्वस्य परिकीर्तितम् ॥ १३४ ॥

शक्तौ प्राधान्यमत्रोक्तमहमामर्शनं बुधैः ।
शक्तीति तेन नामास्य तत्त्वस्य परिकीर्तितम् ॥ १३५ ॥

शिवः प्रकाशरूपोऽयमहमामर्शरूपिणी ।
शक्तिर्द्वयमिदं नैव भेदास्पदतया स्थितम् ॥ १३६ ॥

उपचारेण शिवता शक्तिता चात्र विद्यते ।
राहोः शिरोऽत्र भातीति प्रयोगोऽत्र निदर्शनम् ॥ १३७ ॥

शिवेनैक्यसमायोगाच्छक्तौ मातृप्रकल्पना ।
तेनैव नहि शक्तेः स्याद् भेदः शक्तिमतो मनाक् ॥ १३८ ॥

इदमामर्शयोगोऽयं भेदस्यासूत्रणं विदुः ।
तत्स्पर्शो लेशतो नास्ति द्वयेऽत्राभेदरूपिणि ॥ १३९ ॥

प्रकाशाहंपरामर्शमात्रयोग्येव केवलम् ।
माता भवेद् द्वयेऽप्यत्र तत्स्वरूपं च वक्ष्यते ॥ १४० ॥

अवरूढः शिवस्यात्र स्वात्मैवात्र द्विधा स्फुरत् ।
आरोढुस्तु पशोर्विश्वं शिवशक्तितया स्फुटम् ॥ १४१ ॥

एतत्तत्त्वद्वयाधस्ताद् यत् त्रयं समवस्थितम् ।
शुद्धाशुद्धतया सोऽध्वा भेदाभेदमयः स्थितः ॥ १४२ ॥

अत्राहन्ताग्रहोऽभेदो भेदोऽत्रेदन्तया ग्रहः ।
इदन्ताप्यत्र सामान्यग्रहरूपा न भेदतः ॥ १४३ ॥

अत्र ह्यैक्येन भान्त्येव भावाः स्वात्मापि भेदतः ।
अन्यथेदन्तृतास्फूर्तिर्न स्यादत्र पदत्रये ॥ १४४ ॥

सादाख्येऽत्र पदेऽहन्ता प्राधान्येन लसत्यलम् ।
इदन्ता गौणभावेन बीजभावेन वेत्यलम् ॥ १४५ ॥

शिवशक्तिवदेवैतत् पदं शुद्धतया विदुः ।
इदन्तासूत्रणं त्वत्र भेदाभेदस्वरूपकम् ॥ १४६ ॥

अवरोहरतस्यात्र जायमानाथ रोहतः ।
इदन्ता लीयमानेव भवत्येव न संशयः ॥ १४७ ॥

नष्टप्रायतया नूनं प्रतिबिम्बतया तथा ।
ग्रहः सदाशिवभुवि जगतः परिकीर्तितः ॥ १४८ ॥

प्रतिबिम्बं त्ववरोही जगदत्र प्रपश्यति ।
जानात्यारोहनिरते नष्टप्रायपुरोपमम् ॥ १४९ ॥

सादाख्यां च शिवोऽत्रैव लभते भेदभूश्रुताम् ।
ईषदूनतया भाति स्वात्मानं प्रति वै तथा ॥ १५० ॥

निमेष इति नामास्यापरं प्रोक्तं मनीषिभिः ।
उन्मेषो हि जगत्स्फूर्तिः साऽत्रास्ति विलयोन्मुखी ॥ १५१ ॥

आरोहिणोऽवरोहे तु लग्नस्यात्रास्ति सा भ्रमस् ।
उत्पद्यमानता योगेऽप्यनुत्पन्नैव सौक्ष्म्यतः ॥ १५२ ॥

इदं तत्त्वं महद् ब्रह्म गायत्र्या वाच्यमीरितम् ।
भाविनीनां धियां यस्मादेतदेवास्ति प्रेरकम् ॥ १५३ ॥

शिवतत्त्वसमीपे तु धीकथा नास्ति गोचरे ।
तत्राहमिति सर्वं हि भाति नेदन्तया स्फुटम् ॥ १५४ ॥

निष्कलत्वं तथास्यैव तत्त्वस्य समुदाहृतम् ।
शान्तं ब्रह्म तदेतच्च कथ्यते वेदपारगैः ॥ १५५ ॥

स्वाग्रस्थितविमर्शस्य प्रकाशस्य शिवात्मता ।
यतस्तेनास्य शान्तत्वं निष्कलत्वं च नोच्यते ॥ १५६ ॥

अहमा[म]र्शनं ते हि क्षोभकारितया विदुः ।
शिवस्याग्नेरिव निजां शक्तिं विस्फोटकारिणीम् ॥ १५७ ॥
इदन्तास्पर्शलेशान्तेऽत्राहन्तास्फूर्तिमुज्ज्वलाम् ।
विस्मारयन्तः शान्तत्वमेव सम्यक् प्रपेदिरे ॥ १५८ ॥
महात्मसु कृतं चोच्चैरनिर्वाच्ये पदेऽत्र यत् ।
स्खलनं प्राप्य लज्यन्ते महादृष्टियुता अपि ॥ १५९ ॥

इदन्तास्पर्शतः स्तोकं मालिन्यं यात्यहंस्फुरा।
अत्र नास्तीति तेनेयं वक्तुं युक्ता न सर्वगा ॥ १६० ॥

मायापदादधोऽप्येषा स्थौल्यमाश्रित्य भाविनः।
अहङ्कारतया स्फूर्तिमायास्यति न संशयः ॥ १६१ ॥

क्षोभाद् भीत्या न संत्याज्या त्यक्ताऽप्येषा हि विस्फुरेत्।
आत्मा हि सर्वदा भाति तदामर्शः क्व गच्छति ॥ १६२ ॥

विषयस्य परावृत्तिस्त्यागोऽत्र दैशिकैर्मतः।
अहन्ताया न मुख्योऽसावसम्भवपराहतः ॥ १६३ ॥

शुद्धविद्यान्तमेवायं न्यायो योज्यस्तु धीमता।
तत्त्वत्रयेऽत्र विश्रान्तिर्यस्माद् वेदान्तिभिः कृता ॥ १६४ ॥

शिवतत्त्वे रताः शैवाः शाक्ताः शक्तिपरायणाः।
तदैक्ये तु रता ये ते महापूर्णपदे स्थिताः ॥ १६५ ॥

महाशैवास्त उच्यन्ते महाशाक्ताश्च वा बुधैः।
महत्त्वं तु द्वयेऽप्यत्र द्वयैक्यरतितः स्थितम् ॥ १६६ ॥

शिवतत्त्वाद् गता ये ते भवेयुः पूर्णदृष्टयः।
शक्तितत्त्वाच्च सर्वात्मभावेन सर्वथा स्थिताः ॥ १६७ ॥

वेदान्तिनो महामन्त्रनायकाः कथिता बुधैः।
मन्त्रेशत्वं तथा मन्त्रभावस्तेषां प्रकीर्तितः ॥ १६८ ॥

एते चाभेदनिष्ठाः स्युः शुद्धाध्वनिरताः स्थिताः।
किञ्चिदूनत्वमेतेषामिदन्ताग्रहणात् स्थितम् ॥ १६९ ॥

अहंभावेन बोधो हि पूर्णताऽऽपादकः स्मृतः।
इदन्तालेशसंस्फूर्तिर्लीनतां तत्र भावयेत् ॥ १७० ॥

इदन्तालेशमात्रेण न द्वैतं तत्र कल्पयेत्।
साऽप्यहन्तेव तत्रास्ति पूर्णतत्त्वपदा यतः ॥ १७१ ॥

ज्ञानकालेष्विदन्ताऽस्ति शुद्धतत्त्वपदा परम्।
शुद्धत्वेऽपि च तत्पूर्णं पदं तावन्न विद्यते ॥ १७२ ॥

मायोर्ध्वे शुद्धविद्याधो विज्ञानाकलताजुषः।
सांख्या वृद्धाः परं तेषामणूनां भेदवाग्भ्रमः ॥ १७३ ॥

मायापदादधोदेशे शून्यनिष्ठामुपागताः।
दिगम्बरा बुधैः प्रोक्ताः प्रलयाकलताजुषः ॥ १७४ ॥

बुद्धितत्त्वे स्थिता बोद्धा वासनाविप्लवाद् गते।
अतोऽधो ये त आख्याताश्चार्वाकास्तत्त्वदर्शिभिः॥ १७५॥

सकलाख्याः प्रमातारः स्मृता एते मनीषिभिः।
स्थूलदृष्टितया सद्भिर्महागमविशारदैः॥ १७६॥

देहादस्मादधो याता विषयेषु रता जनाः।
लौकिका इति संप्रोक्ता सौख्यकाष्ठां परां गताः॥ १७७॥

यथापूर्वं तत्त्वनिष्ठा बुधैः श्रेष्ठाः प्रकीर्तिताः।
प्रसक्तानुप्रसक्त्यालं प्रकृतं ब्रूमहे पुनः॥ १७८॥

सदाशिवपदं किञ्चिदूनं शिवपदात् स्मृतम्।
इदन्तालेशसंस्फूर्तेरप्राधान्येन सुस्फुटम्॥ १७९॥

अधस्त्वस्माद् बुधैः प्रोक्तं तत्त्वमीश्वरसंज्ञितम्।
अहन्तेदन्तयोस्तत्र समत्वेनैव संस्थितिः॥१८०॥

प्रतिबिम्बतया तद्वल्लयोन्मुखतयाऽथवा।
अवरोही तथारोही जगदत्र प्रपश्यति॥ १८१॥

एतस्यानन्तरं शुद्धविद्यातत्त्वमुदीरितम्।
अत्रेदंस्फुरणं मुख्यं गुणोभूता त्वहंस्फुरा॥ १८२॥

शुद्धत्वमस्य भेदाख्यमलस्यासम्भवात् स्मृतम्।
भाविनी या तु विद्या सा भेदेनैव प्रदूषिता॥ १८३॥

सामानाधिकरण्यं चात्रास्त्येवाहमिदंधियोः।
यदेवाहन्तया भाति तदेवेदन्तया यतः॥ १८४॥

मायापदे तु देहादि भात्येवाहन्तया स्फुटम्।
इदन्तया बाह्यभावा एवेति नात्र संस्थितम्॥ १८५॥

स्फुटं प्राधान्यभावेऽपि नेदन्ता व्यपदेश्यताम्।
यात्यत्र का हि सूर्यस्य सान्निध्ये तमसः कथा॥ १८६॥

इदन्तास्फुरणेऽप्यत्र न भेदेन स्फुरा स्थिता।
अयं बोध इमे भावा न भिन्ना इति भानतः॥ १८७॥

अहन्ता न स्फुटा त्वत्र विस्मृत्यौन्मुख्यतः स्मृता।
तत्कालं निर्गतत्वेन तस्या वेति विनिश्चयः॥ १८८॥

आत्मापीदन्तया भाति बाहुल्येनात्र योगिनः।
अहन्तया तथा भावा अपि लेशेन कर्हिचित्॥ १८९॥

बोधोऽयं लेशभावेन स्फुरत्येव न संशयः।
इदन्ताग्रहणं चैष सहते मितयोगिनः ॥ १९० ॥

अहन्ताग्रहणं चात्र लेशतोऽस्त्येव सुस्फुटम्।
लीयमानो वर्धमानोऽत्ररोहारोहभेदतः ॥ १९१ ॥

शिवः शिवपदेऽस्तीशः सदाशिवपदे तथा।
सदाशिवोऽथेश्वरे तु प्रोक्त ईश्वर इत्यलम् ॥ १९२ ॥

न तत्त्वरूपा एते स्युर्वेद्यभाववियोगतः।
नामसादृश्यतस्तत्त्वभावभ्रान्तिर्न शोभना ॥ १९३ ॥

शक्तिः शिवस्य करणं स्वामर्शोपायभावतः।
सादाख्येश्वरयोर्विद्याशक्तित्वं ह्यनयोः स्फुटम् ॥ १९४ ॥

स्थानं वा करणं वापि तत्त्वमेव न संशयः।
अधिष्ठातुः प्रमातुश्च तत्त्वभावो न युक्तिमान् ॥ १९५ ॥

शिवादिशुद्धविद्यान्तं महायोगिपदं स्मृतम्।
मायोर्ध्वे शुद्धविद्याधो मितयोगिपदं स्मृतम् ॥ १९६ ॥

मायाधस्तु पशूनां स्यात् क्षितिर्भेददशाजुषाम्।
अधिष्ठाता त्वनन्तोऽत्र प्रोक्तः शास्त्रविशारदैः ॥ १९७ ॥

सप्तत्रिंशे पदे त्वत्र प्रोक्तानुत्तरता बुधैः।
योगिनो योगिता का वा साक्षात्परशिवात्मनः ॥ १९८ ॥

य एवेशस्तदेवात्र पदं परशिवात्मके।
पदेऽस्त्येव पदत्वं च तत्र नो मुख्यतासहम् ॥ १९९ ॥

मातृमेयविभागोऽपि नात्र किञ्चन विद्यते।
सर्वं तु सर्वरूपं स्यात् पदेऽत्र पूर्णताजुषि ॥ २०० ॥

परमोऽयं शिवो नैव तत्त्ववर्गे प्रकीर्तितः।
तत्त्ववर्गोऽपि सामान्यं महासामान्यमेष सः ॥ २०१ ॥

यद्यप्येव शिवोऽप्येष महासामान्यरूपकः।
शक्तिश्च तस्य तत्रापि तद्भेदः कल्पनाकृतः ॥ २०२ ॥

शिवाद्रिशुद्धविद्यान्तं चिदादिशक्तियोगतः।
तत्त्वपञ्चकमित्युक्तं साक्षाच्छिवमयं बुधैः ॥ २०३ ॥
अधस्ताच्छुद्धविद्याया मायातत्त्वं प्रकीर्तितम् ॥
भेदाभेददशामध्ये सेतुरेतत् प्रकीर्तितम् ॥ २०४ ॥

मोनात्यथ मिनोतीति माया हिंसाकरी स्मृता।
स्वरूपविस्मृतिर्हिंसा साऽस्याः कार्यं बुधैः स्मृतम् ॥ २०५ ॥

मिमीते वाऽनया विश्वं मातेति च स्मृता बुधैः।
माया तन्मात्रमेवेह जगत्सर्वं हि संस्थितम् ॥ २०६ ॥

मात्यत्र विश्वं मायेति मायायामत्र यज्जगत्।
सावकाशं भवत्येव न तु संबाधदुःस्थितम् ॥ २०७ ॥

स्वरूपं विस्मरन्नत्र शिवः स्वातन्त्र्यवैभवात्।
शून्यभावमुपाधत्ते पारमित्योन्मुखं स्फुटम् ॥ २०८ ॥

मूर्च्छां गतो यथा जीवः शून्यरूपो भवेत् स्फुटम्।
मायापदं तथा यातः शिवोऽपीति विनिश्चयः ॥ २०९ ॥

शून्यमेतत् समाख्यातं प्रलयाकलगोचरम्।
भाविनस्तत्त्ववर्गस्य कारणं मुख्यभावतः ॥ २१० ॥

बाह्यं शून्यं तु यद् भावि भूताकाशमयं बहिः।
विषयः सकलस्यैतन्न शून्यं परमार्थतः ॥ २११ ॥

मायापदे स्थितस्यास्य प्रकाशस्य महात्मनः।
कलादिवेष्टनेनैवाणुभावो भविता ध्रुवम् ॥ २१२ ॥

मायातत्त्वात् कलातत्त्वं किञ्चित्कर्तृत्वरूपकम्।
जातं तद् बिन्दुभूतं स्यात् कर्तृतामयवारिधेः ॥ २१३ ॥

कलाऽधोदेशगा विद्या किञ्चिज्ज्ञातृत्वरूपिणी।
सा चापि बिन्दुरेव स्याज्ज्ञातृतामयवारिधेः ॥ २१४ ॥

कर्तृत्वस्यैव सिद्ध्यर्थं ज्ञातृत्वमुपजायते।
ज्ञाता हि कर्ता भवति न मूढो जातुचित् क्वचित् ॥ २१५ ॥

पुष्टिं गता ज्ञातृता तत्कर्तृता पण्डितैः स्मृता।
प्राधान्यं तेन सम्प्रोक्तं कर्तृताया बुधैः स्फुटम् ॥ २१६ ॥

जानामीति करोमीति द्वयं रूपमवस्थितम्।
विद्याकलागतं तच्चागुणं धर्मद्वयं स्मृतम् ॥ २१७ ॥

अत्र द्वयेऽथ यः स्नेहो भाविनोऽणोः स्वभावतः।
रागतत्त्वं तदेतत् स्यात् तत्त्वेषु गणित बुधैः ॥ २१८ ॥
बाह्यरागात्तु भिन्नोऽसौ वैराग्याभावरूपतः।
रागवैराग्यविषया भावा अत्र हि न स्थिताः ॥ २१९ ॥

वैराग्येऽपि च यः स्नेहोऽणोर्भावी सोऽपि निश्चितम् ।
रागस्यास्यैव कार्यं स्यादिति का तस्य कल्पना ॥ २२० ॥

ज्ञानाद् विद्याऽपि भिन्ना स्याद् बुद्धिधर्मतया स्थिता ।
बुद्धेर्गन्धोऽपि नात्रास्ति तद्धर्मस्य तु का कथा ॥ २२१ ॥

बाह्यकर्तृत्वचर्चा या भाविदेहादिनिष्ठ(ष्ठि)तेः ।
कथा कैवात्र जीवोऽपि नहि तावत् प्रतिष्ठितः ॥ २२२ ॥

अधुनेति तु कालाख्यतत्त्वं रागादनन्तरम् ।
नवोद्गानमिवेषोऽत्र कर्तृत्वादेः करोत्यलम् ॥ २२३ ॥

आन्तरः कोऽपि कालोऽयं सम्प्रोक्तः शास्त्रपारगैः ।
न प्राणादिस्वरूपस्तु बाह्यवस्तुस्वरूपकः ॥ २२४ ॥

एवेति, नियतिः प्रोक्ता कालतत्त्वादनन्तरम् ।
कर्तृत्वादेस्तु सर्वस्य नियामकतया स्थिता ॥ २२५ ॥

कलाविद्याद्यभावे तु शून्यमात्रमणुर्भवेत् ।
दृषत्कल्पस्य तु ततो जगद् भायान्न लेशतः ॥ २२६ ॥

नियतेरथ कालस्याभावेऽणोरपि कर्तृता ।
ज्ञातृता च शिवस्यैव भवेत् सर्वपदा स्फुटम् ॥ २२७ ॥

विषयादेरभावेऽपि सत्तैषां भवति स्फुटम् ।
शक्तिभावेन संस्थित्या कणभावोन्मुखे शिवे ॥ २२८ ॥

नियमेनैकनिष्ठत्वं पञ्चकस्यास्य संस्मृतम् ।
सूक्ष्मत्वे स्थूलतापत्तौ भिन्नदेशमिदं स्मृतम् ॥ २२९ ॥

मायैकैवाऽस्ति सर्वेषां पञ्चकं भिन्नमीरितम् ।
मायापदे ततोऽणूनां भेदेन स्फुरणं विदुः ॥ २३० ॥

अभेदोऽपि च नात्रास्ति शून्यमात्रैकरूपिणि ।
सेतुभूता ततः सेयं माया सद्भिः प्रकीर्तिता ॥ २३१ ॥

नाप्यदि प्रेक्षणे जातु रसाद् वैवश्ययोगतः ।
एकीभवेत् पञ्चकं चाऽणूनां भेदैकदर्शिनाम् ॥ २३२ ॥

रसाभिव्यक्तौ सर्वो हि विभावादिगणो नृणाम् ।
साधारण्येन भात्येव यथास्वं तिष्ठतामपि ॥ २३३ ॥

मायादिषट्कयोगेन प्रकाशः कणतां भजन् ।
अणुतत्त्वं भवत्येव जीवभावेन संस्थितम् ॥ २३४ ॥

मायाद्यनन्तरं जीवोऽणुरूपस्तत्त्वभावभृत् ।
वेदकत्वेऽपि वेद्योऽत्र ततः सोऽयं प्रकीर्तितः ॥ २३५ ॥

वेत्तीति सद्भिः सोऽयं स्याच्छिवबिन्दुरिति स्मृतः ।
नादोऽस्य शक्तिरेषोक्ता चेतनाख्या मनीषिभिः ॥ २३६ ॥

प्रकृत्यादीनि तत्त्वानि तस्यावृत्तिकराणि तु ।
बाह्ये प्रकाशरूपस्य चतुर्विंशतिधा स्फुटम् ॥ २३७ ॥

अन्तस्तु षट्कमेवास्ति मायान्तं तु तथास्थितम् ।
अतोऽन्तरेवास्य मुखं शिवः प्राप्यतया स्थितः ॥ २३८ ॥

आन्तरं षट्कमेतच्च सुखोच्छेद्यं स्मृतं बुधैः ।
स्थूलत्वाद् बाह्यमेतत्तु दुरुच्छेद्यं स्वभावतः ॥ २३९ ॥

बाह्यं च लङ्घितत्वेन न किञ्चित्कर्तुमस्त्यलम् ।
अस्याणोरणुभावस्तु साध्यो यत्नेन पण्डितैः ॥ २४० ॥

एतत्पदं च नैवास्ति सुप्रापं लौकिकैर्यतः ।
देहादधोगतास्ते स्मः स्वात्मस्वातन्त्र्ययोगतः ॥ २४१ ॥

पुंस्तत्त्वे ये स्थितिं याता नराः केनापि यत्नतः ।
ते शून्याख्यं पदं प्राप्ता न चिरात् स्युः स्वयोगतः ॥ २४२ ॥

अणोरधस्तात् तत्त्वानि यानि तेषु स्थितोऽस्त्ययम् ।
सकलाख्यः प्रमातैव साक्षिभावेन चिन्मयः ॥ २४३ ॥

प्रथमं तत्र तत्त्वं स्यात् प्रकृतिर्मूलकारणम् ।
भाविनस्तत्त्वजातस्य महदादेर्निरत्ययम् ॥ २४४ ॥

अव्यक्तमेतत्तद् भावितत्त्वानां व्यक्तताऽत्र यत् ।
महदादिस्वरूपाणां घटादीनां यथा मृदि ॥ २४५ ॥

प्रधानत्वं तथाऽस्योक्तं तत्त्वस्य सांख्यदृष्टिषु ।
प्राधान्यान्महदादिभ्यो विकृतिभ्यो न संशयः ॥ २४६ ॥

सत्त्वं रजस्तम इति गुणाः सामे(म्ये)न संस्थिताः ।
स्वरूपं प्रकृतेः प्रोक्तं साम्यं स्वात्मन्यवस्थितिः ॥ २४७ ॥

पत्युर्ज्ञानक्रिये जीवे कलाविद्यात्मतां गते ।
रजःसत्त्वे अभावोऽथ तयोस्तु स इहोच्यते ॥ २४८ ॥

सत्त्वं सुखस्वरूपं स्याद् रजो दुःखमिति स्मृतम् ।
मोहरूपं तमः प्रोक्तं जाड्यमात्रमिति स्मृतम् ॥ २४९ ॥

गुणभावोऽत्राणुतत्त्वाद् भेदेनैव स्फुटं स्थितेः ।
भेदोऽपि कार्यभावेन परिणामितया स्थितः ॥ २५० ॥

गुणानां तत्र भावोऽत्र प्रत्येकं नोपपद्यते ।
मिश्रीभावं विना कार्यसम्पत्तौ शक्यभावतः ॥ २५१ ॥

क्षोभं यातास्तु ते न्यूनाधिक्यभावेन पूरणाम् ।
कुर्युः परस्परस्यातस्त्रिगुणात्म जगद् भवेत् ॥ २५२ ॥

त्रयोविंशतिधा कार्यमस्याः सद्भिः प्रकीर्तितम् ।
साक्षाद् द्वारेण चाप्येव क्षोभतः परिणामतः ॥ २५३ ॥

त्रिधाऽन्तःकरणं बुद्धिमनोऽहङ्कारनामकम् ।
ज्ञानेन्द्रियगणस्तद्वत् कर्मेन्द्रियगणोऽपि च ॥ २५४ ॥

तन्मात्रपञ्चकं चाथ भूतानां पञ्चकं तथा ।
सांख्यशास्त्रस्य निष्ठाऽत्र प्रोक्तोपयोगतो मया ॥ २५५ ॥

प्रकृतिः पुरुषस्यार्थे केवलं वृत्तिभागिनी ।
नानाविधं कार्यजालं सृजत्येव न संशयः ॥ २५६ ॥

तेन दृष्टा लज्जयेव निवृत्ताऽथ स्ववृत्तितः ।
विमुखीभूय निर्वाणं याति शान्तेव दीपिका ॥ २५७ ॥

स्वात्मार्थं नैव तस्याः स्यात् प्रवृत्तिर्जातुचित् स्फुटम् ।
सुजडानां यतो वृत्तिः स्वात्मार्थे न कदाचन ॥ २५८ ॥

प्रकृतेः प्रथमं जाता बुद्धिः सत्त्वमयी स्फुटम् ।
प्राधान्यतो महच्छब्दवाच्या सेयं बुधैः स्मृता ॥ २५९ ॥

नैर्मल्यवशतः सेयं पुं[सि] यां चेतनाभिधाम् ।
धारयन्ती स्थिता साक्षाद् व्यवधानवियोगतः ॥ २६० ॥

प्रकृत्या व्यवधानं तु न शङ्क्यं लेशतोऽपि यत् ।
व्यवधिस्तत्कृता तस्य न युक्तं सहतेतराम् ॥ २६१ ॥

वस्तूनां प्रतिबिम्बानि धारयन्ती स्वभावतः ।
नानाविधेन्द्रियद्वारैर्बुद्धिः सद्भिः प्रकीर्तिता ॥ २६२ ॥

द्रष्टाऽत्र पुरुषः प्रोक्तश्चिद्रूपः केवलं स्वतः ।
संक्रान्तस्य मतो वस्तुजातस्य बाह्यदेशतः ॥ २६३ ॥

बुद्धिस्तत्रावसायं च जनयत्येव निश्चितम् ।
अवसायं विना वस्तु दृष्टं चादृष्टवद् यतः ॥ २६४ ॥

अथ बुद्धेरहङ्कारो जातो गुणमयस्त्रिधा ।
अहन्ता ममता चास्य वशाद् भावेषु संस्थितेः ॥ २६५ ॥

सात्त्विकात् तत्र संजज्ञे मनोऽहङ्कारतः स्वयम् ।
सङ्कल्पवृत्तिरूपं तु सङ्कल्पाश्रय एव वा ॥ २६६ ॥

मनस्तत्सर्वविषयं बाह्येन्द्रियगणेन यत् ।
समेत्य सर्वं गृह्णाति बाह्यं वस्तुगणं स्फुटम् ॥ २६७ ॥

सुखदुःखग्रहे नास्यापेक्षा कस्यापि विद्यते ।
यत् सुखादि मनोग्राह्यं परं लोकेऽत्र दृश्यते ॥ २६८ ॥

पश्यामि घटमित्यत्र दर्शनं पुरुषे स्थितम् ।
अवसायस्तु बुद्धौ स्याद् विकल्पाख्यः स्फुटं स्थितः ॥ २६९ ॥

दर्शने करणं बुद्धिः प्रतिबिम्बग्रहात् स्मृता ।
चक्षुस्तु करणं तत्र द्वारभावेन संस्थितेः ॥ २७० ॥

अवसाये मनः प्रोक्तं करणं पूर्वसूरिभिः ।
कर्ताऽथ करणं चेति बुद्धिः सद्भिरुदाहृता ॥ २७१ ॥

अहङ्कारोऽभिमाने तु करणं प्रोच्यते बुधैः ।
एकस्य कोऽभिमानः स्याद् गणकार्ये स्फुटं स्थिते ॥ २७२ ॥

करणं त्रिविधं चैतदेकमेवास्ति तत्त्वतः ।
वृत्तिभेदेन भेदस्तु केवलं पण्डितैः स्मृतः ॥ २७३ ॥

बुद्धीन्द्रियाणि पञ्चाथो कर्मेन्द्रियगणस्तथा ।
राजसाहङ्कृतेर्जातस्तत्त्वभावेन संस्थितः ॥ २७४ ॥

शब्दादिग्राहकं तत्र पञ्चकं प्रथमं स्मृतम् ।
श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणमित्येव विश्रुतम् ॥ २७५ ॥

वाक्पाणिपादपायूपस्थेतिविख्यातिसंयुतम् ।
कर्मेन्द्रियतया ख्यातं पञ्चकं समुदाहृतम् ॥ २७६ ॥

शब्दस्य करणं श्रोत्रं त्वक् स्पर्शस्य प्रकीर्तिता ।
चक्षू रूपग्रहे चैव रसे जिह्वा प्रकीर्तिता ॥ २७७ ॥

वाचो वाक्करणं प्रोक्ता प्राणवृत्तिस्वरूपिणी ।
पाणी वस्तुग्रहे प्रोक्तौ पादौ गमिक्रियासु तु ॥ २७८ ॥

पायुः प्रोक्तो मलोत्सर्गे करणं शास्त्रपारगैः ।
उपस्थः करणं प्रोक्त आनन्दे द्विविधश्च सः ॥ २७९ ॥

स्त्रीपुंविग्रहतोऽन्योन्यसंश्लेषेणैव कार्यकृत् ।
द्वन्द्वयोगे यदानन्दो जायते सर्वसाक्षिकः ॥ २८० ॥

पादेन ग्रहणं यत्तद् यन्न कार्यं निगद्यते ।
स्वभावजृम्भणेवात इन्द्रियत्वप्रसाधनी ॥ २८१ ॥

आकाशरूपः शब्दस्तु शब्दग्राहकभावतः ।
सजातीयेन सम्बन्धो यद्युक्तः परमार्थतः ॥ २८२ ॥

वायुरूपं स्पर्शनं स्यात् स्पर्शग्राहकभावतः ।
तेजोरूपं तथा नेत्रं रूपग्राहकतावशात् ॥ २८३ ॥

रसना जलरूपा स्याद् रसग्राहकतास्थितेः ।
घ्राणं तु पृथिवीरूपं गन्धव्यञ्जकतावशात् ॥ २८४ ॥

वाक् श्रोत्रस्यैव रूपं तु स्थूलं सद्भिः प्रकीर्तिता ।
पाणिस्त्वचोऽथ पादस्तु नेत्रस्यैव प्रकीर्तितः ॥ २८५ ॥

उपस्थो रसनारूप आस्वादोद्भावकत्वतः ।
पायुर्घ्राणस्य रूपं स्याद् दुर्गन्धाधारतावशात् ॥ २८६ ॥

त्वचः शक्तेर्विभेदे तु भङ्ग्येन्द्रियप्रपञ्चनम् ।
अभेदे कार्यवैचित्र्यं किं कार्यमिति कथ्यताम् ॥ २८७ ॥

सर्वेन्द्रियाणां सर्वत्र शक्तत्वं कैश्चिदिष्यते ।
यत् तत् सत्यं परं तत्र भेदवादो न युक्तिमान् ॥ २८८ ॥

शब्दादिरूपं तन्मात्रपञ्चकं जडभावतः ।
तामसाहंकृतेर्जातं तथा कामादिपञ्चकम् ॥ २८९ ॥

तन्मात्रता च प्रोक्तैषामन्यस्पर्शवियोगतः ।
मिश्रीभावे यतोऽस्त्येषामाकाशादितया स्फुरा ॥ २९० ॥

तत्र शब्दः श्रोत्रलभ्यस्त्वचा स्पर्शोऽथ नेत्रतः ।
रूपं ग्राह्यं रसश्चैव रसनेन्द्रियतस्तथा ॥ २९१ ॥

गन्धो घ्राणेन लभ्यः स्यादिति तन्मात्रपञ्चकम् ।
पृथक्तत्त्वतया प्रोक्तं स्ववर्गेऽनुगमादिदम् ॥ २९२ ॥

ग्राह्यत्वं चैव नन्वेषां नात्र सूक्ष्मतया स्थितेः ।
स्वकार्यगुणभावे तु तदग्रेऽलं भविष्यति ॥ २९३ ॥

यो यद्गुणः स तन्मात्रं भवतीति विनिश्चयः ।
अन्यथा घटधर्मत्वं मृदो भायान्न जातुचित् ॥ २९४ ॥

शब्दाश्रयस्तदाकाशः शब्दस्थौल्यवपुर्भवेत् ।
न चेद् गुणतया तस्माच्छब्दः प्रादुर्भवेत् कथम् ॥ २९५ ॥

शब्दोऽध्यासस्य वाच्यानां भावानामिव खं बहिः ।
अवकाशं ददातीत्याकाशः कारणमुच्यते ॥ २९६ ॥

एवं स्पर्शादिरूपत्वं वाय्वादीनां स्फुटं स्थितम् ।
यो यद्गुणः स तन्मात्रमिति सर्वार्थसंग्रहः ॥ २९७ ॥

विमर्शः शब्दरूपोऽयमाकाशादिप्रकल्पकः ।
तत्कारणतया प्रोक्त इत्यलं बहुचर्चया ॥ २९८ ॥

शब्दादिगन्धपर्यन्तं पञ्चकं पुष्टिमागतम् ।
आश्यानतां गतं पृथ्वी सर्वाधारतया स्थिता ॥ २९९ ॥

शब्दादिरसपर्यन्तचतुष्टयमयं जलम् ।
त्रिमयं तेज इत्युक्तं द्विमयो वात उच्यते ॥ ३०० ॥

केवलं शब्दतन्मात्रपुष्टिरूपमिदं स्थितम् ।
आकाशः सर्वतोभासि न किञ्चिन्मात्ररूपकम् ॥ ३०१ ॥

द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्चपञ्चतः ॥ ३०२ ॥

पञ्चीकरणमित्येवं वेदान्तेषु स्थितिं गतम् ।
यदस्ति तच्च वाऽस्त्वेव दृष्टिरेषाऽस्त्यनुत्तरा ॥ ३०३ ॥

शब्दकार्यमिदं यस्मादाकाशं सद्भिरीरितम् ।
महामौनस्वरूपत्वं शब्दस्य तेन मीयते ॥ ३०४ ॥

स्वकार्यगुणभावे तु तस्य तद्रूपमुत्तमम् ।
आश्रयस्यैव दोषेणान्यथा भातीति निश्चयः ॥ ३०५ ॥

अप्रकाश्ये प्रकाशे ह्यहंस्फूर्तिर्यैव संस्थिता ।
स शब्दः पुष्टता तस्य भूताकाशमिदं स्थितम् ॥ ३०६ ॥

तत्पुष्टता तु वाय्वादिचतुष्कं तस्य पुष्टता ।
भावजातमिदं प्रोक्तं नात्र कोऽप्यस्ति संशयः ॥ ३०७ ॥

चाञ्चल्यासादनाद्ध्येतन्नभो वायुत्वमश्नुते ।
स्वभावजृम्भणामात्रं तदेतस्य प्रकीर्तितम् ॥ ३०८ ॥

वायुसंघर्षतो जन्म तेजसः समुदाहृतम् ।
वस्तुसंघर्षणं ह्यौष्ण्यं दृष्टान्तोऽत्र स्फुटं स्थितः ॥ ३०९ ॥

तेजःकृतेन घर्मेण मेघा बाष्पतया स्फुटम् ।
सम्पन्ना वारि मुञ्चन्ति स्वेदभावेन निश्चितम् ॥ ३१० ॥

विद्युत्तेजोजृम्भणाच्च मेघास्तेजस उत्थिताः ।
ज्ञायन्ते यन्मयं यद्धि तदुद्गिरति तत् स्फुटम् ॥ ३११ ॥

स जलानां स्वभावस्तु घनानां गर्जनादिकम् ।
तत्र पर्यन्तयोगश्चेदन्यत्रापि विधीयताम् ॥ ३१२ ॥

तेजःकार्यं जलं सिद्धमत एवमयत्नतः ।
वृष्टियोगाज्जलं भूमौ तदभावे क्व तद् भवेत् ॥ ३१३ ॥

जलस्य घनता पृथ्वी .तरवोऽत्र निदर्शनम् ।
पर्वता जलमात्रस्य कार्याणीति विनिश्चयः ॥ ३१४ ॥

आकाशमध्ये सर्वं च परमाणुतया सदा ।
वाय्वादिकं स्फुरत्येव नात्र कापि विकल्पना ॥ ३१५ ॥

साक्षाद् ब्रह्मैव शब्दोऽयं सर्वार्थपूरकः स्मृतः ।
प्रकाशे हि विमर्शोऽयं स्वात्मभावेन संस्थितः ॥ ३१६ ॥

विश्रान्तौ लीनता या साऽऽकाशभावेन जृम्भते ।
तस्य वाय्वादिभावोऽथ तन्मात्रं जगदित्यलम् ॥ ३१७ ॥

तस्माच्छब्दो व्यापकोऽयं सर्वभावेषु तिष्ठति ।
शब्दमात्रं ततो भावा बुधैः प्रोक्ताः सनातनैः ॥ ३१८ ॥

शब्दब्रह्म तदेवोक्तं बाह्या या शब्दकल्पना ।
घोषादिरूपा सेयं तु तदाप्त्यै पण्डितैः स्मृता ॥ ३१९ ॥

रहस्योद्घाटनेनालं प्रसङ्गादागतेन यत् ।
पौनःपुन्येन कथनं तस्य दोषकरं स्मृतम् ॥ ३२० ॥

यथोत्तरं स्थूलताऽस्याऽऽकाशादीनां स्फुटं स्थिता ।
तन्मात्रतारतम्येन नान्यथेति विनिश्चयः ॥ ३२१ ॥

पृथिवीतत्त्वपर्यन्ते स्थिता सेयं यथा शिवः ।
स्थौल्यस्येयं पराकाष्ठा शिवः सौक्ष्म्यस्य सत्यतः ॥ ३२२ ॥

शिवभावेन पुष्टोऽयं शिवः केवलमुच्यते ।
शिवादितत्त्वपूगेन पुष्टा पृथ्वी स्मृता बुधैः ॥ ३२३ ॥

व्याप्योऽपूर्णो व्यापकस्तु पूर्णोऽन्यैः समुदाहृतः ।
व्याप्यस्य पूर्णताऽस्माकं मते व्यापकदेहतः ॥ ३२४ ॥

भावबुद्धिपरैर्दृष्टिरियं भावेषु जातुचित् ।
कर्तुं शक्याऽस्ति नो मोहात् कृता तृष्णात्वमाश्रयेत् ॥ ३२५ ॥

पृथ्वी परशिवस्यैवं समीपे वर्तते स्फुटम् ।
शिवतत्त्वाच्च नास्त्यत्र काऽपि संशयकल्पना ॥ ३२६ ॥

अतः परशिवः सोऽत्र द्वयेनाश्रितसौहृदः ।
सौक्ष्म्यस्य स्थूलतायाश्च स्वस्मिन् स्थितिकरो विभुः ॥ ३२७ ॥

सौक्ष्म्यद्वारेण यद् यानं विहितं सूक्ष्मदर्शिभिः ।
तत्राधिकारिणो भावो हेतुरस्त्येव नेतरः ॥ ३२८ ॥

अनादरकृतस्त्वत्राधिकाराभाव उच्यते ।
जीवन् पृथ्वीमयो यः स साक्षात् परशिवः स्मृतः ॥ ३२९ ॥

योऽधिकारी तु स प्राप्तो यथा शिवपदे स्थितः ।
यानं तस्य किमेत्र स्यादेवं गुरुमुखाच्छ्रुतम् ॥ ३३० ॥

मध्ये स्थितोऽधिकारे तु यानस्य किल कथ्यते ।
परां काष्ठां गतो योऽत्र द्वये परशिवस्तु सः ॥ ३३१ ॥

तत्त्वषट्त्रिंशकं चैतद् विश्वभावेन संस्थितम् ।
तन्मयोऽयं परशिवः प्रोक्तो विश्वमयः प्रभुः ॥ ३३२ ॥

विश्वातीतोऽपि स प्रोक्तः स्वान्तः शिवतया स्थितेः ।
विश्वातीतः शिवो यस्माद् विश्वत्वेऽपि सदा स्थितः ॥ ३३३ ॥

परमोऽपि शिवः सोऽयमुपदेश्यतयाऽऽश्रितः ।
वेद्यतामुपयात्येव का कथाऽस्य शिवस्य तु ॥ ३३४ ॥

दोषोऽयं तु यथा शाम्येत् तथा कार्यं मनीषिभिः ।
शब्दः प्रोक्तो हि सर्वत्र दोषापादनपण्डितैः ॥ ३३५ ॥

अथवा केव चिन्तेयं सर्वं हि विभुना कृतम् ।
स्वातन्त्र्येणेति चिन्ताऽपि वाऽस्तु तन्मात्ररूपिणो ॥ ३३६ ॥

एवं परशिवः सोऽयमवरूढो महेश्वरः ।
पृथ्वीभावमुपायातः स्वयमेवास्ति तत्त्वतः ॥ ३३७ ॥

ब्रह्माण्डमपि तस्यैव देहः पृथ्व्यादिसंयुतः ।
पञ्चभूतमयः प्रोक्तो महाशास्त्रेषु पण्डितैः ॥ ३३८ ॥

ब्रह्माण्डान्तर्गतः सोऽयं शरीर इव जीवकः ।
विराडित्युच्यते देहे क्षेत्रज्ञ इति कथ्यते ॥ ३३९ ॥

विराट् समष्टिरूपोऽयं क्षेत्रज्ञो व्यष्टिरूपधृत् ।
तयोर्भेदोऽस्ति यः सोऽग्निचयतत्कणयोरिव ॥ ३४० ॥

ब्रह्माण्डात् तु बहिर्देशे पराकाशमयो विभुः ।
देहाद् भूताकाशमिव महाव्यापक इष्यते ॥ ३४१ ॥

यथा सूर्यमरीचिस्था रेणवः कोटिशः स्थिताः ।
ब्रह्माण्डानि पराकाशे तथैतद्वत् स्थिताः सदा ॥ ३४२ ॥

यथा ब्रह्माण्डमध्ये स्युर्देहा नानाविधाः स्थिताः ।
पराकाशे तथाऽनेके ब्रह्माण्डा इति मन्यताम् ॥ ३४३ ॥

मा भवन्तु च किं छिन्नं पराकाशस्य शक्तता ।
एतावतैव निर्णीता भाने सर्वतया स्फुटम् ॥ ३४४ ॥

देहेऽपि देहाः कीटानां सन्त्येव विविधाः स्थिताः ।
एष(वं) ब्रह्माण्डमेतेषां नात्र काऽपि विकल्पना ॥ ३४५ ॥

ब्रह्माण्डतो बहिर्देशे प्रोक्तान्यावरणान्यपि ।
ब्रह्माण्डतो न भिन्नानि तदुपादानतावशात् ॥ ३४६ ॥

ब्रह्माण्डाकाशमध्ये तु पृथ्वी कन्दुकवत् स्थिता ।
सर्वतोऽस्याः स्थितं व्योम न्यायेनानेन विद्महे ॥ ३४७ ॥

आकाशदेश ऊर्ध्वं स्यात् पृथ्वीतलमधः स्मृतम् ।
अविशेषेण सर्वत्र नात्र कार्या विचारणा ॥ ३४८ ॥

पिपीलिकानां न्यायेन जनाः पृथ्व्यां व्यवस्थिताः ।
परितः पातशङ्काऽत्र न कार्यैषां तथा स्थितेः ॥ ३४९ ॥

कढ्ढकाख्यं यथा रत्नं वस्तु स्वं प्रति कर्षति ।
तथा पृथ्वी वस्तुजातं स्वभावे कैव चोदना ॥ ३५० ॥

उद्घृता तु मृता पृथ्वी नैवं शक्तिमती भवेत् ।
ऊर्ध्वोद्धृतायास्तस्यास्तन्न वस्त्वाकर्षणे गतिः ॥ ३५१ ॥

सूर्यादयो ग्रहाः सर्वे परितश्चारिणः स्थिताः ।
सूर्यतेजोऽवसाने तु तम एवावतिष्ठते ॥ ३५२ ॥

स एव(ष) नीलिमाभासो व्योम्न इत्येव निश्चयः ।
दृष्टिक्षयस्य नीलत्वकथनं नैव युक्तिमत् ॥ ३५३ ॥

ब्रह्माण्डकर्परं तच्च तम एव प्रकीर्त्यते ।
न भित्तिः काऽपि तत्रास्ति युक्ता शून्यमहार्णवे ॥ ३५४ ॥

लोकालोकस्तमस्तेजोमिश्रीभावमयः स्मृतः ।
लोको हि तेज इत्युक्तोऽलोकस्तु तम उच्यते ॥ ३५५ ॥

ततः परं तु यत् किञ्चिद् महाकाशः स उच्यते ।
तत्र ब्रह्माण्डकोट्यः स्युर्न्यायेनानेन सुस्फुटम् ॥ ३५६ ॥

ब्रह्माण्डाख्येऽत्र देहेऽस्ति पृथ्वी मांसस्य पिण्डिका ।
रुधिरं स्याज्जलं तत्र बहिश्चान्तश्च संस्थितम् ॥ ३५७ ॥

समुद्राः सप्त ये त्वस्याः सन्धिबन्धेषु संस्थिताः ।
महानाड्यस्तु ताः प्रोक्ता दार्ढ्याय विभुना कृताः ॥ ३५८ ॥

वातश्चापि स्फुटं तस्या बहिश्चान्तश्च संस्थितः ।
देहवन्नात्र कोऽप्यस्ति संशयो दोषदः स्फुटम् ॥ ३५९ ॥

विराड् जीवोऽत्र सम्प्रोक्तो जना यूकतया स्थिताः ।
तृणादयस्तु केशाः स्युरस्थिपिण्डाः शिलाः स्मृताः ॥ ३६० ॥

पर्वतास्तु महास्थीनि दार्ढ्याय परिकल्पिताः ।
वृक्षास्तु स्थूलकेशाः स्युर्वाडवो जठरानलः ॥ ३६१ ॥

प्राणापानौ तत्र सूर्यचन्द्रावेव व्यवस्थितौ ।
तावेतौ पाचनं पुष्टिं कुरुतोऽत्र यथाक्रमम् ॥ ३६२ ॥

सूर्यः पित्तं कफश्चन्द्रो वातो वातोऽत्र बाह्यगः ।
पित्तात् पक्तिः कफात् पुष्टिर्वाताच्छोषणमीरितम् ॥ ३६३ ॥

भूकम्पो यस्तु सोऽयं स्यादङ्गानां स्फुरणं महत् ।
नाड्यन्तर्गतवातादिविकृतेरित्यलं बहु ॥ ३६४ ॥

यद्देहे तच्च ब्रह्माण्डे विशेषो नात्र कश्चन ।
शून्ये स्थितिस्तया साम्यस्वभाववशतः स्थिता ॥ ३६५ ॥

चिच्छक्त्यैव धृतो देहोऽप्येष तिष्ठति नान्यथा ।
ब्रह्माण्डे तत्र का शङ्का कर्तुं योग्याऽस्ति धीमता ॥ ३६६ ॥

ब्रह्माण्डान्तर्गताकाशे भूमिस्तिष्ठति निश्चला ।
देहान्तर्मांसपिण्डीव नात्र काऽपि विकल्पना ॥ ३६७ ॥

पक्षी स्वभाववशतो यत्र तिष्ठति खे स्वयम् ।
तत्र भूमेः स्थितौ शङ्का कथं मूढेषु जृम्भते ॥ ३६८ ॥

अवस्थितिः क्रिया सेयं क्रिया चेतनदेहगा ।
भूमिश्च चेतनायुक्ता तृणादेः प्रोद्भवात् ततः ॥ ३६९ ॥

स्वभावादुदिता यस्य या क्रिया स तु तां विना।
क्षणं न सहते स्थातुं चोद्यस्यावसरोऽत्र कः॥ ३७० ॥

निरालम्बा स्थितिः सेयं भूमेः स्यात् स्वस्वभावजा।
शून्ये जले यथा मत्स्यस्येति किं तत्र चोदनम्॥ ३७१ ॥

यद् यथा दृश्यते यत्र तस्य तत्रैव संस्थितिम्।
तथा युक्त्या साधयन्ति तज्ज्ञा इति विनिश्चयः॥ ३७२ ॥

यद् यथाऽस्ति तथैवास्तु तदित्येव विनिश्चयः।
अन्यथा कल्पनेऽत्रापि तच्चोद्यं कृतसंस्थिति॥ ३७३ ॥

अनिर्वाच्यमिदं सर्वं यद् यथा भाति तत् तथा।
विनोदार्थं युक्तिजालं तज्ज्ञानामित्यलं बहु॥ ३७४ ॥

विनोदोऽपि च लौल्यस्य जृम्भणा तत्त्वतः स्मृता।
किं कुर्मस्तं विना तज्ज्ञा अपि निर्वेदमागताः॥ ३७५ ॥

नैतावता न तज्ज्ञास्त इति वक्तुं तु युक्तिमत्।
श्रीशिवोऽपि विनोदस्य वशं यातोऽस्ति यत् स्वयम्॥ ३७६ ॥

अन्यथा कोऽवकाशः स्याज्जगतोऽग्रे विभासतः।
तदभावे तु केऽमी स्युस्तज्ज्ञा इति कृतं बहु॥ ३७७ ॥

प्रक्रियेयं मया प्रोक्ता महाशास्त्रेषु निश्चितैः।
लेशतो यत्र तत्रोक्ता श्रुत्वा गुरुमुखात् तथा॥ ३७८ ॥

शेषोपरि स्थिता भूमिरित्याद्याः कल्पनास्तु याः।
ताः सन्तु परमस्माभिरन्यत्किञ्चिदुदीरितम्॥ ३७९ ॥

विराजश्चर्चनेनालं क्षेत्रज्ञस्य तु या स्थितिः।
सेयं सम्प्रोच्यते सम्यगणूनां हितकाम्यया॥ ३८० ॥

पृथ्वीभावमुपायातो देहे स्वात्मत्वनिश्चयात्।
क्षेत्रज्ञस्तत आरूढः शक्तिपाताच्छिवीभवेत्॥ ३८१ ॥

आरोहस्यापि वा केयं चर्चा यत्रैव यः पदे।
प्रबुद्धः स हि तत्रैव स्थितस्तद्भावमर्हति॥ ३८२ ॥

रूपं परशिवस्यैव सर्वं सद्भिः प्रकीर्तितम्।
बोधमात्रं परं तत्रोपयुक्तं पण्डितैः स्मृतम्॥ ३८३ ॥

उपयोगोऽपि वा कोऽस्य स्वयंसिद्धेषु सर्वदा।
सर्वत्र तदियं चर्चा सिद्धरूपाऽस्ति सर्वथा॥ ३८४ ॥

मास्तु वापि तथाप्यस्ति तदभावोऽपि यच्छिवः।
स्वयमेष परः प्रोक्तो महाशास्त्रेषु पण्डितैः॥ ३८५॥

यद्यप्येवं तथाप्येव बोधोऽन्वेष्यो मनीषिभिः।
शक्तिपातेन प्राप्यस्यान्वेषा का वा निरर्थिका॥ ३८६॥

साऽपि वा शक्तिपातस्य कार्यमित्येव निश्चयः।
इत्यलं कः क्षमोऽस्त्यत्र कथने पण्डितोऽपि सन्॥ ३८७॥

तत्त्वानां निर्णयोऽस्माभिः कृतो यः सारतः स्फुटम्।
तेनैव पदमायातु स्वेप्सितं भक्तिमान् नरः॥ ३८८॥

इति श्रीमदाराध्यतमाचार्यवर्य-श्रीगुरुवरराजानकभास्करकण्ठविरचिते
चित्तानुबोधाख्ये महाशास्त्रे षट्त्रिंशत्तत्त्वनिर्णायकं नाम
दशमं प्रकरणं सम्पूर्णम्। इति शिवम्॥ १०॥

# एकादशं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः ।

ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः ।

ॐ तद्द्वयसामरस्यरूपायै गुरुपादुकायै नमः ।

ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः ।

ॐ प्रमातॄणां निर्णयोऽथ तन्यते तत्त्वभूमिषु ।
पाञ्चदश्यादिभेदश्चान्यत्किञ्चिच्चापि संगतम् ॥ १ ॥

सप्तत्रिंशे पदे मातृमेयचर्चाऽतिदूरतः ।
सर्वं सर्वतया तत्र भात्यसर्वतया च हि ॥ २ ॥

पदत्वमत्र नो वक्तुं युक्तं तुर्यातिगे पदे ।
नापदत्वं च युक्तं स्याद् द्वयं वापि च युज्यते ॥ ३ ॥

यद् यथाऽस्ति तथैवात्र पदे तत् स्थितिमागतम् ।
स्थितिः का वा तदेवास्ति तत्त्वेनात्मनि हि स्थितम् ॥ ४ ॥

स्वस्मिन् स्थितिर्हि या स्वस्य सा स्थितिः क्वेव कस्य वा ।
सन्निवेशेन भेदो यः सा परा भेदजृम्भणा ॥ ५ ॥

अभेदमात्रसद्भावे भेदः स्फुरति निश्चितम् ।
प्रतियोगितया भेदं विना का भेदकल्पना ॥ ६ ॥

भेदाभेदौ यथास्वं द्वावाक्षिप्य प्रतियोगिनम् ।
धर्मिणं चापि भातस्तौ षोढा नात्रास्ति संशयः ॥ ७ ॥

एकत्रैकत्वयोगेऽप्यन्यत्र स्याद् बहुधा स्थितिः ।
शिवो ह्येकः परं भावा नानाभावेन संस्थिताः ॥ ८ ॥

तस्मादभेदसान्निध्ये भेदः केन निवार्यते ।
कथमेवागतः स्वेन महायत्नशतैरपि ॥ ९ ॥

भेदोऽपि यद्यसान्निध्यं भजतेऽत्र स्वयं तदा ।
काऽपेक्षा तस्य नाग्रस्थेऽपेक्षा कस्यापि जायते ॥ १० ॥

अभेदः सारभावेन सन्निवेशेन भिन्नता ।
भावानामस्ति सिद्धैव कं कोऽत्रापेक्षतां वद ॥ ११ ॥

द्वयदर्शननिष्ठायां पूर्णायां तु स्वभावतः ।
महातृप्तिवशेनैव जायते द्वयविस्मृतिः ॥ १२ ॥

विस्मृतौ त्वथ पूर्णायां विस्मारणवशात् ततः ।
साऽपि विस्मृतिमायाति स्वभावबलतः स्फुटम् ॥ १३ ॥

विस्मृतेर्विस्मृतिर्या सा महाचैतन्यजृम्भणा ।
तत्र जाड्यकथा केव च्छाया उपपदे कुतः ॥ १४ ॥

स्वप्रकाशस्य या स्फूर्तिः स्वस्मिन् स्वस्यैव तत्त्वतः ।
विस्मृतेर्विस्मृतिः सेयं न जाड्याज्जडरूपता ॥ १५ ॥

पिपीलिकायाः पादाग्रस्पर्शो निद्रोन्मुखस्य यः ।
तन्मात्ररूपा सेयं स्यात् शुद्धचैतन्यरूपिणी ॥ १६ ॥

कुहनादिप्रयोगेषु बाह्येऽपि जृम्भते तु सा ।
न मूढैर्लभ्यते सेयं मूढतावशतः स्फुटम् ॥ १७ ॥

रस्यास्वादोऽपि रूपं स्यात् तस्या एव स्फुटं स्थितम् ।
वस्तुबुद्धिगृहीतानां मूढानां नात्र दक्षता ॥ १८ ॥

तीक्ष्णसूच्यग्रवेधस्य काले सा स्फूर्तिमीयुषी ।
न लभ्यते विमूढैस्तु भाविदुःखैकभीतितः ॥ १९ ॥

विस्मृतेर्विस्मृतिः प्रोक्ता स्पर्शः कोऽप्यान्तरो बुधैः ।
विस्मृतिः स्पृश्यतेऽत्रेयं लीयमाना नरैः स्फुटम् ॥ २० ॥

स्पर्शेऽत्र कृतनिष्ठा ये तन्मात्रं ते जगद्गतम् ।
भावजातं प्रपश्यन्ति भेदाभेदमयं पुरा ॥ २१ ॥

भावव्याप्तं च तं स्पर्शं पश्यन्तो दिव्यचक्षुषः ।
सर्वं सर्वमयं काले पश्यन्त्येव समाहिताः ॥ २२ ॥

सेयं परशिवावस्था भेदाभेदमयी स्थिता ।
महाभेदैकरूपाऽस्ति पूर्णत्वातिगरूपिणी ॥ २३ ॥

सप्तत्रिंशं पदं चेदं महापूर्णतया स्थितम् ।
न मातृमेयभावस्य पदं सद्भिः प्रकीर्तितम् ॥ २४ ॥

पदेऽत्र माता मेयं स्यात् तद्भावेन स्वयं स्थितेः ।
मेयं च मातृरूपं स्याद् द्वयं चैव द्वयात्मकम् ॥ २५ ॥

शिवतत्त्वे शिवो माता स्वयमेव सदा स्थितः ।
स्वप्रकाशतया नित्यं मातृसारतया तथा ॥ २६ ॥

स्वात्मविश्रान्तिरेवास्याहंस्फूर्तिः शब्दरूपिणी ।
करणं तत्र शक्तिः स्याच्छिवस्य परमेष्ठिनः ॥ २७ ॥

मेयाभावेऽस्य मातृत्वं न युक्तमिति चेच्छृणु ।
योग्यतामात्रमाश्रित्य मातृताऽस्य प्रकीर्तिता ॥ २८ ॥

स्वात्ममात्रेऽपि मातृत्वं स्वप्रकाशस्य युज्यते ।
सूर्यस्य दर्शने दीपापेक्षा नैव हि दृश्यते ॥ २९ ॥

जगत्कथाऽत्र नास्त्येवाहंभावेनास्य भासनात् ।
भासनं चात्र विश्रान्तिर्न शब्दस्मरणात्मकम् ॥ ३० ॥

पूर्णो यत्तु शिवः प्रोक्तो न महापूर्णतापदम् ।
परं शक्त्यैव युक्तत्वाच्छक्त्या भावेन च स्फुटम् ॥ ३१ ॥

सदाशिवपदे सन्ति महामन्त्रेशनामकाः ।
मातारः शिवतो न्यूनाः पादेनापूर्णतावशात् ॥ ३२ ॥

सर्वत्राहन्तया भानेऽप्येषां विश्वमिदं स्फुरेत् ।
इदन्तयाऽपि पादेन पूर्णत्वाभावतः स्फुटम् ॥ ३३ ॥

चिरविस्मृतवस्त्वाभं जगत् स्वात्मतया स्थितम् ।
तेषां स्वयोगतस्ते तच्छिवा न्यूनत्वभागिनः ॥ ३४ ॥

ईश्वराख्ये तु तत्त्वे स्युर्मातारो मन्त्रनायकाः ।
तेषामेवं पूर्णताऽस्ति शिवभावात् स्फुटं स्थिता ॥ ३५ ॥

स्मृत्युन्मुखमिवैषां स्याज्जगदेतत् पुरः स्थितम् ।
अर्धे चेदन्तया भानादर्धे स्वात्मतया तथा ॥ ३६ ॥

विद्यापदे तु मन्त्राः स्युर्मातारः पण्डितैः स्मृताः ।
पदेन पूर्णतायुक्ता अहमामर्शलेशतः ॥ ३७ ॥

स्मर्यमाणमिवैषां स्याज्जगदेतत् पुरः स्थितम् ।
स्वात्मभावेन भानं तु तेषां तस्यास्ति पादतः ॥ ३८ ॥

मायोर्ध्वे शुद्धविश्रान्ते मातारो बहुधा स्थिताः ।
विज्ञानकेवलास्तेषां जगद् विस्मृतवस्तुवत् ॥ ३९ ॥

शून्यभावा निर्गताः स्युरेते चिन्मात्ररूपिणः ।
अचेत्यचित्पदे लीना न तावत् पूर्णतास्पृशः ॥ ४० ॥

एते तुर्यपदे प्राप्ताः सद्य एव प्रकीर्तिताः ।
न तु प्रौढिमुपायाता शिववत् स्युर्महादृशः ॥ ४१ ॥

विस्मृतिर्या तु जगते(तो)ऽमीषां सा शुद्धभावतः ।
न जाड्यतो यथैवैषां प्रलयाकलताजुषाम् ॥ ४२ ॥

मन्त्रादीनां स्मृतिर्या तु जगतां सा न लौकिकी ।
स्वात्मसात्करणायैव जगतः साऽस्ति यत् तदा ॥ ४३ ॥

ज्ञकलानां जगच्चैतत् सत्त्वो(त्त्वे)ऽपि नैव संस्थितम् ।
अचेत्यचिद्दर्शनतस्तेषां शुद्धदृशां स्फुटम् ॥ ४४ ॥

न यावज्जगदेतत् स्याद् योगिभिः स्वात्मसात्कृतम् ।
न तावद् गलतीदं यन्नाभावो विद्यते सतः ॥ ४५ ॥

स्वात्मभावेन यो भावो जगतः साधितो भवेत् ।
सुकरः स बुधैः प्रोक्तस्तदन्यः संभवासहः ॥ ४६ ॥

अभावः प्रोच्यतां सोऽयं भावो वा पारमार्थिकः ।
विवादो नात्र कोऽप्यस्ति वस्तुन्येकतया स्थिते ॥ ४७ ॥

ज्ञकला विस्मृतेर्याता भवन्त्येव न संशयः ।
न तावत् स्मरणे शक्तास्ते शिवस्य परस्थितेः ॥ ४८ ॥

शक्तास्तु मन्त्रभावं ते गताः स्युरिति विद्महे ।
पूर्णतायोग्यता यस्मादेषां योग्या न पूर्णता ॥ ४९ ॥

न संस्कारहतत्वं स्यादेषां चिन्मात्ररूपिणाम् ।
प्रलयाकलवत् तेन शुद्धरूपा इमे स्थिताः ॥ ५० ॥

नाहंस्फूर्तिर्जगत्स्फूर्तिश्चैषां किञ्चन विद्यते ।
भाविनी या तु सेयं स्यात् पूर्णताऽऽपादने रता ॥ ५१ ॥

लङ्घिते ये तु ते चैते सकलस्यैव संस्मृते ।
लयाकलेऽपि ते न स्त इति शास्त्रार्थसंग्रहः ॥ ५२ ॥

मायापदेऽस्ति द्वैराज्यं द्वयोर्मात्रोरसंशयम् ।
सेतुभूता यतः सेयं भेदाभेदद्वयान्तरे ॥ ५३ ॥

मायाधोऽणुपदं तावत् प्रलयाकलताजुषः ।
भवन्त्येव प्रमातारः शून्यमात्रैकरूपिणः ॥ ५४ ॥

जगदेतद् विस्मृतं स्यादेषां जाड्यवशात् स्फुटम् ।
संस्कारभावतश्चित्ते तेषामस्त्येव तत्कथा ॥ ५५ ॥

अन्यथा तत उत्थाने पुनरेव पुरा यथा।
व्यवहारे न योग्याः स्युरिति शास्त्रार्थनिश्चयः ॥ ५६ ॥

निद्रादोषेण या सुप्तिः सा मूर्च्छेव बुधैः स्मृता।
योगेन साधिता या तु सेह सत्फलदायिनी ॥ ५७ ॥

सापि चेत् स्फुरिता स्तोकं शैथिल्यं नोपपादयेत्।
व्यवहारेष्वसौ तर्हि मौढ्यमात्रं बुधैः स्मृता ॥ ५८ ॥

विवेकेन तु या सुप्तिर्भविभ्यः साधिता बुधैः।
सेयं सत्फलदा प्रोक्ताऽवश्यमेव कृतं बहु ॥ ५९ ॥

अणुतत्त्वादधोदेशे भूम्यन्तं स्फुटमोरिताः।
मातारः सकलाख्यास्ते भेदमात्रैकदर्शिनः ॥ ६० ॥

जाग्रत्स्वप्नदशाग्रस्ता एते स्युर्भेदभागिनः।
तदुक्तं स्पन्दशास्त्रेऽपि गुरुभिः सूक्ष्मदर्शिभिः ॥ ६१ ॥

ज्ञानज्ञेयस्वरूपिण्या शक्त्या परमया युतः।
पादद्वये विभुर्भाति तदन्यत्र तु चिन्मयः ॥ ६२ ॥

सकलत्वादपि गताः क्रमाद्या जडताजुषः।
मध्ये दोलायिताः सन्ति तिर्यञ्चः पक्षिणस्तथा ॥ ६३ ॥

तिर्यङ्मानुषयोर्मध्ये वानराः सन्ति संस्थिताः।
नराणां पक्षिणां चैव शुकाद्याः सन्धिदेशगाः ॥ ६४ ॥

तिर्यग्वृक्षगणस्यापि मध्ये खर्जूरकादयः।
वृक्षेभ्यश्च शिला जाड्यं भजन्त्येव न संशयः ॥ ६५ ॥

अत ऊर्ध्वं जडं किञ्चिद् दृश्यते न तु केनचित्।
सेयं दशाऽपि पूर्णत्वाच्छुद्धचित्सदृशी स्थिता ॥ ६६ ॥

सर्वं चिन्मयमेवास्ति तद्घनत्वेन संस्थितेः।
चिदेव माता परमो विश्वं मातृमयं ततः ॥ ६७ ॥

मेयं चापि जगत् सर्वं सर्वे भावा हि तद्गताः।
मातॄणां मेयभावेन स्थिता इति कृतं बहु ॥ ६८ ॥

तत्त्वानि यानि प्रोक्तानि मातृरूपाणि तान्यलम्।
सन्त्येव परमार्थेन शुद्धचिद्भावतः स्फुटम् ॥ ६९ ॥

तत्स्वभावेन कथनं तावन्मूढजनं प्रति।
ते हि सर्वत्र चिद्भावं न सहन्ते स्वभावतः ॥ ७० ॥

सत्ता शुद्धचितो येयं सा सर्वत्र समा स्थिता ।
चेतनं यत्तु तद्रूपं तस्याः क्षोभमयं स्थितम् ॥ ७१ ॥

धातूनां सन्निवेशोऽयं चिदावेशवशोत्थितः ।
नराणां ते हि चेतन्ति स्वचेत्यं नेतरे क्वचित् ॥ ७२ ॥

सन्निपातेऽन्यथा धातुविकारे चेतनं तु तत् ।
गच्छेन्नो विकृतिं शाम्येन्न च पथ्यैः कदाचन ॥ ७३ ॥

यथा धातुविकारोऽयं देहो नृणां तथैव तु ।
चेतनं तद्विकारः स्यादिति शास्त्रार्थनिश्चयः ॥ ७४ ॥

या चिच्छिवे स्थिता सेयं शिलायामपि विद्यते ।
न जानेऽत्र नरैः कोऽयमभिमानो न वा धृतः ॥ ७५ ॥

धातवश्च चितो रूपं परमार्थेन संस्मृताः ।
हिमाद्रिरिव तोयस्य सर्वं रूपं चितेः स्मृतम् ॥ ७६ ॥

सा चिद् यत्र यथा तिष्ठेद् तथा तत्रैव तिष्ठति ।
स्वतन्त्रेषु हि चोद्यानां नावकाशोऽस्ति लेशतः ॥ ७७ ॥

सा चित् किमपि नो वस्तु सर्वभावेन भासनम् ।
सहते यत् स्वभावेनान्यथा किमपि न स्फुरेत् ॥ ७८ ॥

अस्फूर्तेरपि का सत्ता तां विना कस्य सा स्फुरेत् ।
अस्फूर्तेः स्फुरणं यत् तत् चितो रूपं समुज्ज्वलम् ॥ ७९ ॥

नराणां तु विशेषोऽयमस्त्येव परमार्थतः ।
या त्वेतच्छ्रवणे शक्तिर्धातूनां सन्निवेशतः ॥ ८० ॥

एतच्छ्रुत्वाऽभिमानं ये त्यजन्ति भुवि मानवाः ।
चेतनत्वस्य प्रोक्तास्ते नरा नान्ये कुबुद्धयः ॥ ८१ ॥

नराणां चापि मेयत्वं देहादिभावतः स्थितम् ।
शिलानामपि मातृत्वं शुद्धचिद्भावतो भवेत् ॥ ८२ ॥

मातृमेयविभागोऽयं कल्पितो दयया बुधैः ।
मूढान् श्रावयितुं तज्ज्ञा नात्र योग्याः कदाचन ॥ ८३ ॥

तज्ज्ञास्तु शुद्धचिद्भावे निश्चिता मौनमास्थिताः ।
लयाकलत्वान्निर्याता विज्ञानाकलतां गताः ॥ ८४ ॥

कालेन सकलं स्वात्ममयं ज्ञात्वा स्वभावतः ।
शिवभावमुपागत्य साक्षादेव शिवः स्थितः ॥ ८५ ॥

ततोऽथ सर्वभावांस्ते स्वात्मवत् सर्वरूपिणः ।
दृष्ट्वा परशिवीभावं यान्त्येव निजवैभवात् ॥ ८६ ॥

सर्वे भावाः सर्वमयाः स्थिताः परशिवा इव ।
भवन्त्येवेति का चर्चा मातृमेयदशामयी ॥ ८७ ॥

सर्वत्वं वा किमेवात्र भावानां न हि भिन्नता ।
परस्परं मध्यसन्धौ विरुद्धा भावतः स्फुटम् ॥ ८८ ॥

अभावोऽपि च यः सोऽयं न भिन्नः परमाच्छिवात् ।
भानमात्रेण सिद्धत्वाद् भानं हि परमः शिवः ॥ ८९ ॥

एकत्वमपि नास्त्यत्र सन्निवेशविभेदतः ।
अनाख्यत्वं परं तत्र भाति तच्चापि नैव वा ॥ ९० ॥

आख्या हि स्फुटमेवात्र भेदेनाभान्ति सर्वदा ।
कल्पितत्वस्य शङ्का या साऽपि कल्पितरूपिणी ॥ ९१ ॥

यद् यथा भाति तत् तेन भावेनैव महेश्वरः ।
अभातस्य च तत्त्वं स्यात्तरां सूक्ष्मतया स्थितेः ॥ ९२ ॥

स्थूलात् सूक्ष्मं परं विद्धि सूक्ष्मात् स्थूलं तथैव च ।
सारभावात् तथैवैतत् पुष्टिभावाच्च सर्वदा ॥ ९३ ॥

सारभावाच्छिवः श्रेष्ठः पुष्टिभावाद् धरा तथा ।
द्वयभावात् परशिवः श्रेष्ठाच्छ्रेष्ठतरः स्मृतः ॥ ९४ ॥

शिवस्य करणं शक्तिरहमामर्शरूपिणी ।
बाह्योन्मुख्येऽन्यथा लीना रूपे परशिवात्मके ॥ ९५ ॥

सादाख्येश्वरयोर्विद्या करणं संस्मृता बुधैः ।
तामाश्रित्यैव तौ बाह्यं पश्यतो लीनमात्मनि ॥ ९६ ॥

विद्याकले लयं प्राप्ते ज्ञकले करणं स्थिते ।
लयोन्मुखे तु ते स्यातां करणं प्रलयाकले ॥ ९७ ॥

स्थितिं याते तु ते स्यातां करणं सकले स्फुटम् ।
बाह्यान्तःकरणीभावमासाद्यात्मनि पुष्टितः ॥ ९८ ॥

तत्त्वानां करणत्वं वा मेयत्वं वापि भेदतः ।
प्रोक्तं प्रमातृनिचयं प्रति सद्भिः पुरातनैः ॥ ९९ ॥

मलत्रयविभेदेन मातॄणां भेदसप्तकम् ।
यदस्ति तदिदं ब्रूमः प्रत्यभिज्ञानुसारतः ॥ १०० ॥

भेदेऽत्र योग्यतामात्रं मलाः कुर्वन्ति यत् ततः।
अप्राधान्यात् तत्त्ववर्गे गणनैषां न कल्पिता ॥ १०१ ॥

आणवोऽथ च मायीयः कार्मश्च तदनन्तरम्।
मलानां त्रितयं प्रोक्तमागमेषु विशारदैः ॥ १०२ ॥

तत्राणवो द्विधा प्रोक्तो मलः सद्भिर्मलोज्झितैः।
स्वातन्त्र्यहानिरेकः स्याद् बोधस्यामर्शहानितः ॥ १०३ ॥

स्वातन्त्र्याबोधता ज्ञानं द्वितीयोऽत्र निगद्यते।
भिन्नवेद्यप्रथामात्रं मायीयो मल उच्यते ॥ १०४ ॥

करणादिसमायोगः कार्माख्यो मल उच्यते।
मलत्रयमिदं सर्वं मायाकार्यमिति स्थितम् ॥ १०५ ॥

ऊर्ध्वेऽपि मायाविस्फूर्तेर्भेदपञ्चकसम्भवात्।
मलानां चापि विस्फूर्तिरूर्ध्वे भवति निश्चितम् ॥ १०६ ॥

तेन सप्त प्रमातार उत्तिष्ठन्ति शिवादयः।
मलत्रयस्य व्यस्तत्वसामस्त्याभ्यां कृतं बहु ॥ १०७ ॥

स्वातन्त्र्यहानेरुत्थानं शिवस्य परिकीर्तितम्।
शक्तेर्भेदेन गणनामात्रतो न तु तत्त्वतः ॥ १०८ ॥

स्वातन्त्र्याबोधरूपात् तु मलात् प्रादुर्भवः स्मृतः।
शक्तेः सा मातृवर्गेऽस्ति नेति सा नेह गण्यते ॥ १०९ ॥

मायीयात् केवलाज्जन्म महामन्त्रेशनायके।
कार्मात् तु केवलात् तद्वन्मन्त्रेशानामुदाहृतम् ॥ ११० ॥

आणवादिद्वयाज्जन्म मन्त्राणां समुदाहृतम्।
आणवात् कार्मसंज्ञाच्च विज्ञानाकलसंभवः ॥ १११ ॥

मायीयकार्मयोगात्तु प्रलयाकलसम्भवः।
आणवादित्रिकेणोक्तः सकलानां तु सम्भवः ॥ ११२ ॥

मलैक्येनैव भेदोऽत्राणवादिद्वये तथा।
अन्यत्र भेदचर्चाऽस्ति मलाधिक्यात् कृतं बहु ॥ ११३ ॥

पूर्वं प्रत्यपरस्यात्र मेयताऽपि स्थिता भवेत्।
शिवस्तु केवलं माता तत्पूर्वं मातृभावतः ॥ ११४ ॥

तत्त्वभावेऽपि मेयत्वं न स याति कदाचन।
तत्त्वभावस्य कलनाऽप्यत्र कल्पनया स्थिता ॥ ११५ ॥

शिवस्य परमस्यास्य पूर्वताऽथच मातृता ।
न युज्यते व्यापकत्वात् तथा सर्वतया स्थितेः ॥ ११६ ॥

मातृमेयविभागोऽयं महाद्वैतेऽत्र को भवेत् ।
सोऽपि वाऽस्तु स एव स्यान्न तत्त्वेऽपि च सोऽस्ति सः ॥ ११७ ॥

असः स वा न कोऽप्यत्र यस्मात् सद्भिः प्रकीर्तितः ।
तस्मादसः स एवात्र सोऽपि वा स इति स्थितः ॥ ११८ ॥

यो यो भावो यथा यत्र देशे कालेऽपि वा स्फुरेत् ।
स स सोऽयं तथा तत्रान्यथाऽपि स्थितिभाक् स्फुटम् ॥ ११९ ॥

भातानां भानमात्रं यत् तद्रूपं परवस्तुनः ।
अभातानां तथा भानं भानं तच्चापि वा द्वयम् ॥ १२० ॥

भानाभानद्वयातीतमतीतत्वाच्च वा परम् ।
परादपि परं वा तदपरत्वेन च स्थितेः ॥ १२१ ॥

परापरात् किमप्येव चित्रमेकं विदुर्बुधाः ।
शाखादिकानिव तरुमेकं पूर्णतया स्थितम् ॥ १२२ ॥

परं तदपरं चापि द्वयातीतं च सर्वदा ।
अतीतत्वं च तत्रेदमतीतत्वेन संस्थितम् ॥ १२३ ॥

अनतीतं च तज्ज्ञेयं ज्ञेयत्वं चात्र किं भवेत् ।
अज्ञातं ज्ञेयतायोग्यं तन्नात्रास्त्येव लेशतः ॥ १२४ ॥

ज्ञातत्वमपि नो तत्र मात्येव जडतामये ।
ज्ञातता हि मिते योग्या मितत्वं तत्र कीदृशम् ॥ १२५ ॥

अमितत्वादपि गतं मितत्वाच्चापि तत् सदा ।
गतत्वं च किमेवात्र व्यापके सर्वदाऽखिले ॥ १२६ ॥

व्यापकत्वं च किं वा स्याद् व्याप्याभावेन सर्वदा ।
व्याप्याभावेऽपि वा कोऽत्र व्याप्यसंस्पर्शदूषितः ॥ १२७ ॥

व्याप्यसत्ताकृतो दोषः कोऽत्र वाऽस्त्येव शङ्कितः ।
मद्यबिन्दुर्हि जलधिं नैव दूषयितुं क्षमः ॥ १२८ ॥

व्याप्यैस्तु परताऽत्र स्यात् सन्निवेशतया स्थितेः ।
कटकादितया स्वर्णं शोभते ह्येव निश्चितम् ॥ १२९ ॥

दोषोऽपि नैव दोषोऽत्र सर्वरूपे परे पदे ।
दोषो भवन् वा तद्भावाच्च्यवते न ततः पदात् ॥ १३० ॥

च्यावोऽप्यतस्तु न च्यावश्च्यावी यत्र च्युते भवेत् ।
तदप्येव हि तद् वस्तु यतश्च्युतिरसंशयम् ॥ १३१ ॥

भिन्नत्वमपि भिन्नत्वं नास्मात् परशिवात्मकात् ।
पदाद् भवति खं भिन्नं किं खादेव स्वरूपतः ॥ १३२ ॥

खं खाद् भिन्नं भवेद् वापि देशकालप्रवेशतः ।
पराद् भिन्नं न किञ्चित् स्यात् तत्प्रवेशामहत्त्वतः ॥ १३३ ॥

देशकालौ हि येनैव सन्तौ साक्षितया स्थितेः ।
प्रविश्य भागभेदेन न तं स्थापयितुं क्षमौ ॥ १३४ ॥

यत्र देशस्य देशोऽन्यः कालः कालस्य वा तथा ।
नास्ति तत्र कथं योग्यौ तौ तत्सत्तापदे बुधाः ॥ १३५ ॥

आकारकृतभेदस्य कथा काऽत्र तरां भवेत् ।
आकारा हि तथा तेन निराकारेण संस्थिताः ॥ १३६ ॥

निराकारः परशिवः सर्वाकारतया स्थितः ।
साकारोऽथ भवन् सोऽयं तन्मात्रं घटवद् भवेत् ॥ १३७ ॥

आकारा नैव भासेरंस्तस्य तन्मात्रतास्थितौ ।
भासन्ते इति नो तत् स्यात् तन्मात्र इति निश्चयः ॥ १३८ ॥

तन्मात्रमपि वा सोऽयं सर्वभावेन संस्फुरन् ।
स्वशक्तितो भवेद् वाचि भावेनेह यथा जलम् ॥ १३९ ॥

साकाराणां स आकारो भेदेन भासने क्षमः ।
निराकारस्य सोऽयं स्यात् कथं तत्र क्षमो बुधाः ॥ १४० ॥

क्षमो वा तस्य तं भेदं कस्मात् कुर्यादभावतः ।
सजातीयगणस्याथ विजातीयगणस्य च ॥ १४१ ॥

स्वांशात् स्वांशस्य यो भेदः स दूरेऽत्र व्यवस्थितः ।
निरंशेन हि सांशत्वकथा तज्ज्ञेषु राजते ॥ १४२ ॥

त्रिविधोऽयं भवन् वाऽपि भेदो न भेदकृद् भवेत् ।
भानतो भानमात्रं हि रूपं तस्य महात्मनः ॥ १४३ ॥

अभाने तस्य चर्चैव केव स्यात् युक्तिदूषिता ।
सुषुप्तौ भेदभानं हि न केनाप्यनुभूयते ॥ १४४ ॥

भवन् वा तु पराभेदभावकः केवलं भवेत् ।
भेदासहे हि यो भेदः स पराद्वैतसाधनम् ॥ १४५ ॥

सर्वं सर्वतया भाति यत् सा परदशा भवेत् ।
सर्वत्वं वाऽस्ति किं तत्र तस्य तन्मात्रतास्थितेः ॥ १४६ ॥

तत्त्वं वाऽपि किमेतत् स्याद् विशेषापादकं स्फुटम् ।
अतस्माद् व्यावृत्तिं तद्धि कर्तुं भवति दक्षिणम् ॥ १४७ ॥

इदं त्वदादिशब्दानां कथा काऽत्र परे पदे ।
अहंशब्दोऽपि यत्रास्ति योग्यो परिमिते तु नो । १४८ ॥

मौनं वापि च किं तत्र हृतं जाड्येन निश्चितम् ।
यद् यथाऽस्ति तथैवास्ति तदित्येव परं वचः ॥ १४९ ॥

मौनं हि प्रतिपत्त्यैव सा च जाड्यैकरूपिणी ।
जाड्यं च शिवताभिन्नं कथं तत्र स्थितिं व्रजेत् ॥ १५० ॥

सोऽयं परशिवो देवस्तत्त्वोर्ध्वे समवस्थितः ।
तत्त्वाधश्च तरां तिर्यग्देशेष्वपि तमां तथा ॥ १५१ ॥

अत्रारोहस्य का चिन्ताऽवरोहस्य च का कथा ।
मध्यगत्वं च किं तत्र न्यूनाधिकतया स्थिते ॥ १५२ ॥

न्यूनं स्यादधिकं तत्राधिकं च न्यूनतायुतम् ।
समं वाऽस्ति द्वयं तत्र तत्त्वेन कृतसंस्थिति ।. १५३ ॥

आरूढोऽत्रावरूढोऽस्ति सोऽप्यारूढतया स्थितः ।
मध्ये स्थितोऽपि तावेव सोऽपि तौ तौ च मध्यगौ ॥ १५४ ॥

मध्यगं सर्वमेवात्र स्यादन्ताभावतः सदा ।
अन्तरेवादिरत्रास्ति सोऽपि वा स इति स्थितः ॥ १५५ ॥

अद्य पूर्वं तथा पूर्वमद्य तत्र परे पदे ।
ह्यः श्वः श्वो ह्योऽत्र कालस्य लयादेव सदा स्थितः ॥ १५६ ॥

सर्वं च सर्वथैवास्ति पदेऽत्र सर्वथा स्थिते ।
न सर्वथापि सर्वं स्यात् सर्वातीततया स्थिते ॥ १५७ ॥

भावाभावसमाक्रान्तं जाग्रत्स्वप्नसुषुप्तकम् ।
भावाभावविहीनाश्च मध्यदेशास्तदन्तरे ॥ १५८ ॥

तुर्यदेशोऽपि तत्रैव स्थितोऽस्ति परमेश्वरे ।
तुर्यातीते महाभोगे परापरतया स्थिते ॥ १५९ ॥

मातारो ह्यत्र युगपद् रूपद्वयमिदं प्रभोः ।
सर्वातीतं सर्वगं च गृह्णन्त्येव तु सर्वदा ॥ १६० ॥

देशभेदः कालभेदो मातॄणां नात्र लेशतः ।
देशकालौ हि तैः सिद्धौ न ताभ्यां तेषु भेदनम् ॥ १६१ ॥

बहुत्वमपि तेषां तत् किं रूपं स्यादयुक्तिमत् ।
शिवो हि सर्वमातॄणां भावेनैकोऽस्ति संस्थितः ॥ १६२ ॥

तदंशभूता मातारस्तदंशेष्वेव साक्षिणः ।
वृत्तान्ताभिज्ञताभावोऽन्योन्यं तेषामुपाधितः ॥ १६३ ॥

अन्यताऽप्यत एतेषामन्योन्यं प्रति निश्चितम् ।
उपाधिस्तत्र देहादि पुरस्थं नान्यरूपकम् ॥ १६४ ॥

वृत्तान्ताभिज्ञतायां तु यो भ्रमो मातृबुद्धिगः ।
सोऽयं देहात्मताबुद्धिहेतोरेव न संशयः ॥ १६५ ॥

ज्ञानिनामपि सा स्तोकं तपआदिप्रभावतः ।
भवेदेव न तेनैषां ज्ञानित्वं सर्वतोऽधिकम् ॥ १६६ ॥

सर्वाभिमानराहित्यमात्रमेव ज्ञलक्षणम् ।
बुधैः प्रोक्तं पुराविद्भिर्नैन्द्रजालिकविभ्रमः ॥ १६७ ॥

उपाधिश्चापि नो भिन्नो भवेत् परशिवात् ततः ।
सारत्वेन स्थितात् किं स्याद् वीचिस्तोयविभेदतः ॥ १६८ ॥

चिन्मात्रसिद्धं चेत्यं हि भवेच्चिद्रूपमक्षतम् ।
चिन्मात्रं तु शिवः साक्षाद्देहादि चेत्यरूपकम् ॥ १६९ ॥

इत्यलं प्रकृतं ब्रूमो मातारः शिवरूपिणः ।
तैर्गृहीतं शिवेनैव गृहीतं सर्वरूपिणा ॥ १७० ॥

तथा च नाऽत्र काऽप्यस्ति क्रमस्य परिकल्पना ।
युगपत्त्वं च नास्त्यत्र युक्तं कालाप्रवेशतः ॥ १७१ ॥

प्रवेशोऽपि च सोऽयं स्याद् भाववन्मितताषदम् ।
अमितस्य मितेनेह मापनं त्वज्ञकल्पना ॥ १७२ ॥

क्रमोऽत्र भासमानोऽपि नास्त्येवेत्यनुभूयते ।
लिपौ संक्रामसिद्धायां काऽक्षरेषु क्रमस्थितिः ॥ १७३ ॥

अत्र नादिनं चान्तोऽपि मध्यं तत्र तु यद् भवेत् ।
तद् भ्रमेणैव सिद्धं स्याद् भ्रमे का सत्यता वद ॥ १७४ ॥

क्रमेण भासमानोऽपि प्रपञ्चः स्वप्नदृष्टिषु ।
सिद्धसंविद्रूपतया क्रमिको नोच्यते बुधैः ॥ १७५ ॥

जाग्रच्च स्वप्नपक्षेऽस्ति पूर्वमेव प्रसाधितम् ।
नायस्यते पुनः को हि पिष्टपेषणविश्रमः ॥ १७६ ॥

सर्वदा सर्वरूपोऽयं स्थितः परशिवः सदा ।
सर्वातीतश्च नात्रास्ति कापि संशयकल्पना ॥ १७७ ॥

मलानां केव चर्चाऽस्ति चर्चने वापि तत्तया ।
स्थितत्वाद् भेदने शक्तिर्न चैषां स्याच्छिवादिषु ॥ १७८ ॥

सर्वमातृस्वरूपोऽयं स्थितः परशिवः सदा ।
न मातृभावभेदेन शिवादय इवेत्यलम् ॥ १७९ ॥

मलयोगेन भेदोऽयं मातॄणां सप्तधा स्थितः ।
समस्तव्यस्ततायोगादिति नान्येन हेतुना ॥ १८० ॥

शिवादिसकलान्तोऽयं मातृवर्गः स्फुटं स्थितः ।
मेयभेदवशेनैव भेदभागीत्यलं बहु ॥ १८१ ॥

वेदान्तेषु प्रमातॄणां भेद एषोऽन्यथा स्थितः ।
प्रोच्यते सोऽपि सामस्त्यव्यस्ततावशतो द्विधा ॥ १८२ ॥

जाग्रद्देशप्रमातारौ विश्ववैश्वानरौ स्थितौ ।
तत्रान्त्या व्यष्टिरूपाः स्युः समष्टिस्त्वितरः स्मृतः ॥ १८३ ॥

व्यष्टयः स्युः स्थूलदेहाः समष्टि काण्डमुच्यते ।
अन्त्यो विराजो परे तु क्षेत्रज्ञानां कृतं बहु ॥ १८४ ॥

स्वप्ने तैजस इत्युक्तो हिरण्यगर्भ इत्यपि ।
तैजसो व्यष्टिरूपोऽत्र समष्टिस्त्वन्य उच्यते ॥ १८५ ॥

आतिवाहिकदेहः स्यादुपाधिर्व्यष्टिरूपिणः ।
तत्पिण्डस्तु तथोपाधिरन्त्यस्य कथितो बुधैः ॥ १८६ ॥

प्राज्ञेश्वरौ सुषुप्तौ स्तो मातारौ प्रोदितौ बुधैः ।
व्यष्टिः प्राज्ञः समष्टिस्तु प्रोक्त ईश्वर इत्यलम् ॥ १८७ ॥

प्राज्ञस्याविद्याः संप्रोक्ता उपाधिस्तत्र देशिकैः ।
मायेश्वरश्च देहश्च कारणाख्यो द्विधाऽस्ति सः ॥ १८८ ॥

निरुपाधिस्तु चित् प्रोक्ता माता तुर्ये महात्मभिः ।
मातृभावस्तु तत्रास्या नेष्टः शुद्धतया स्थितेः ॥ १८९ ॥

तुर्यातीतकथा नात्र शोभते भेददर्शने ।
स्थिताऽपि शुद्धतुर्यैकपदा न तदतीतगा ॥ १९० ॥

शिवाख्यमपि यन्नैव स्पृष्टमेतैः पदं महत् ।
का कथा स्पर्शने त्वस्य युक्ता परशिवात्मनः ॥ १९१ ॥
सादाख्यं तु पदं तेषां विश्रान्तेर्धामतां गतम् ।
सत्तामात्रमयं ब्रह्म तदेवास्ति कृतं बहु ॥ १९२ ॥
पाञ्चदश्यादिभेदोऽथ तत्त्वमात्रगतः स्फुटम् ।
तन्यते सारशास्त्रेषु निर्णीतो दृढयुक्तिभिः ॥ १९३ ॥
सर्वो मातृगणः सर्वमातृभावेन संस्थितः ।
यद्यप्यस्ति तथाप्यत्र तद्भेदाः सप्तधा स्थिताः ॥ १९४ ॥
कथ्यन्ते स्फुटतामात्रमपेक्ष्य न तु वस्तुतः ।
अस्फुटं हि स्थितं वस्तु नो सद्वदवलोक्यते ॥ १९५ ॥
शिवादिसकलान्तोऽयं मातृवर्गोऽपि सप्तधा ।
तस्यापि शक्तयः सप्त स्वरूपे लीनतां गताः ॥ १९६ ॥
गन्धादिशब्दपर्यन्ततन्मात्रगणपिण्डिका ।
स्थिताऽऽत्मनि धराऽस्त्येका मातृस्पर्शेन वर्जिता ॥ १९७ ॥
निःशक्तिकैः शिवाद्यैस्तु गृह्यमाणाऽथ सा भवेत् ।
पुनः सप्तविधा मातृभेदाद्धि मेयभेदधृक् ॥ १९८ ॥
सशक्तिकैश्च सा तैस्तु गृह्यमाणाऽथ सप्तधा ।
पुनरेव भवेत् पृथ्वी तथा च दश पञ्च च ॥ १९९ ॥
नीराजकोऽन्यथा देशः शक्तिहीनेन पालितः ।
अन्यथाऽथ च शक्तेन पाल्यमानोऽन्यथा भवेत् ॥ २०० ॥
एवं तत्त्वगणोऽप्येषो मातृकोऽथ च मातृभिः ।
सशक्तिकैः शक्तिहीनैर्गृह्यमाणोऽन्यथाऽन्यथा ॥ २०१ ॥
निजावस्थाऽनुसारेण तत्त्ववर्गो विभेदतः ।
अशक्तानां च शक्तानां मातॄणां भाति सर्वदा ॥ २०२ ॥
शिवोऽन्यथैव गृह्णाति भुवं मन्त्रेशनायकः ।
अन्यथैवेति सर्वत्र योजना पण्डितैः कृता ॥ २०३ ॥
जलादेः प्रकृतिं तावत् प्रक्रियैषा बुधैः स्मृता ।
सकलस्यापि तावत्त्वं मलोद्रिक्ततया भवेत् ॥ २०४ ॥
पुंस्तत्त्वादिकलान्तं तु त्रयोदशभिदाः स्मृताः ।
सकलो ह्यत्र माताऽसौ शक्त्या सह लयं गतः ॥ २०५ ॥

लयाकलोऽत्र माता स्यादेकादशविधः स्थितः।
स्वं प्रत्यस्य न मेयत्वं यतो मातृतया भवेत् ॥ २०६ ॥

मायाऽपि तावती प्रोक्ता मातृभेदेन पण्डितैः।
लयाकलोऽत्र यल्लीनः स्वशक्त्या सह निश्चितम् ॥ २०७ ॥

ज्ञकला नवधैव स्युश्चतुष्कस्यैव तद्ग्रहात्।
स्वरूपे तेऽपि मातारो यतो न मेयताजुषः ॥ २०८ ॥

शुद्धविद्या च संप्रोक्ता तावती ज्ञानशालिभिः।
ज्ञकला ह्यत्र लीनाः स्युः स्वशक्त्या सह निश्चितम् ॥ २०९ ॥

मन्त्रास्तु सप्तधैव स्युस्त्रयेण ग्रहणात् स्फुटम्।
स्वरूपे तेऽपि मातारो मेयभूता न यत् स्मृताः ॥ २१० ॥

ईश्वरेऽपि च तावत् स्यान्मन्त्राणां लयतः स्फुटम्।
मन्त्रेशाः पञ्चधा प्रोक्ता द्वयेन ग्रहणाद् बुधैः ॥ २११ ॥

सदाशिवोऽपि तावत् स्यान्मन्त्रेशलयतः स्फुटम्।
मन्त्रेशनायकाः प्रोक्तास्त्रिधैव तु महात्मभिः ॥ २१२ ॥

शिवस्तु भिद्यते नैव स्वशक्त्यैक्यमुपागतः।
परप्रमातृरूपत्वाच्चेत्यलं बहु विस्तरैः ॥ २१३ ॥

पूर्वमातुः समावेश उत्तरस्मिन्नतः स्थितः।
नोत्तरस्य तु पूर्वस्मिल्लय एवास्य तत्र यत् ॥ २१४ ॥

शिवे चिन्मात्ररूपेऽत्र सर्वं भातीति संग्रहः।
यत् तत्र नहि विश्रान्तं तन्नभःकुसुमायते ॥ २१५ ॥

तस्य भानं नोपयुक्तं भातव्यभावहानितः।
अभानं तस्य सौक्ष्म्येण नासत्त्वाच्छशशृङ्गवत् ॥ २१६ ॥

सर्वभावेन शक्तस्य भाने का सत्त्वकल्पना।
शिवस्य कल्पनायां तु शिवतां स्वां परित्यजेत् ॥ २१७ ॥

समाहितास्ततो नित्यं बाह्यान्तरतया स्थितम्।
सर्वं मेयतया तत्रारोपयन्ति शिवे बुधाः ॥ २१८ ॥

प्रबुद्धः सर्वदा तिष्ठेज्ज्ञानेनालोच्य गोचरम्।
एकत्रारोपयेत् सर्वं ततोऽन्येन न पीड्यते ॥ २१९ ॥

आलोचनं हि तत्त्वस्य विवेकः प्रोच्यते बुधैः।
बाह्यान्तरपदार्थौघो गोचरार्थः प्रकीर्तितः ॥ २२० ॥

एकस्त्वत्र शिवः प्रोक्तः शुद्धचिन्मात्ररूपकः।
आरोपणं लीनताया भावनं मेयभावतः। २२१ ॥

अन्यस्तु शिवतो भिन्नः पीडनं तु वशीकृतिः।
शिवाद् भेदेन भाता हि भावा वै वश्यकारिणः॥ २२२ ॥

एकचित्तत्त्वदर्शी तु सर्वसारतया नरः।
न चेत्यवशतामेति स्वातन्त्र्यासादनात् स्वयम्॥ २२३ ॥

उत्तरोत्तरमारूढस्तत्त्वचक्रे शनैः शनैः।
शिवीभूयाथ कालेन पूर्णः परशिवीभवेत्॥ २२४ ॥

तत्त्वव्रातमिदं सर्वं स्वात्मन्येव प्रतिष्ठितम्।
आभ्यन्तरं तथा बाह्यं पश्यन् पूर्णीभवेन्नरः॥ २२५ ॥

तत्त्वे तत्त्वेऽत्र सर्वाणि तत्त्वानि स्थितिमन्त्यलम्।
बीजे वृक्षा इव सदा नात्र काऽपि विचारणा॥ २२६ ॥

प्रतिमातृ तथा सर्वे मातारः स्युः सदा स्थिताः।
मेयतोद्भावने शक्ताः स्वस्मिन् परशिवात्मके॥ २२७ ॥

शिवावस्था तु या तत्र पूर्वव्याप्योऽपरः स्थितः।
तत्त्वं वाथ प्रमाता वा न सा पूर्णतया स्थिता॥ २२८ ॥

व्यापकाः सर्व एव स्युः सर्वत्र परमे पदे।
पूर्णताऽपूर्णते तत्र महापूर्णे पदे स्थिते॥ २२९ ॥

मातुः परशिवीभावे स्वात्मा सर्वतया स्फुरेत्।
सर्वं स्वात्मतया तद्वद् व्याप्यव्यापकताऽत्र का॥ २३० ॥

सर्वं च नात्र सर्वं स्यात् प्रत्येकं सर्वतास्थितेः।
प्रत्येकत्वं च किं वात्र कस्मात् कस्य हि भिन्नता॥ २३१ ॥

भिन्नताऽप्यस्तु वाऽत्रापि प्रत्येकत्वं न युज्यते।
एकभाने यतोऽन्यस्य भानं नात्र स्फुटं स्थितम्॥ २३२ ॥

भाने त्वस्यैव भानं स्यान्न पूर्वस्य गतत्वतः।
उत्पलव्यतिभेदस्य न्यायेनात्र क्रमाग्रहः॥ २३३ ॥

प्रत्येकतायाश्चर्चायाः कथा कात्र न विद्महे।
प्रतिशब्दस्य व्यर्थत्वादेकतामात्रनिष्ठितेः॥ २३४ ॥

य एव भाति सोऽयं स्याद् यत्र सर्वतया स्थितः।
प्रत्येकत्वं तत्र किं स्यात् सर्वताऽपि च कीदृशी॥ २३५ ॥

यद्यदाभाति तन्मात्रं सर्वमेव तदा स्थितम् ।
सर्वस्य सिद्धिदो माता यतस्तन्मात्रतां भजेत् ॥ २३६ ॥

भजनं वापि किं तस्य स तदेव हि निश्चितम् ।
अन्यथा भानमेतस्य कथं तस्मिन् स्थितिं व्रजेत् ॥ २३७ ॥

व्रजद्वा तत्र विश्रान्तिं कथं यायान्निरन्तरम् ।
पयस्येव हि यल्लीनं पयो दृष्टं न शर्करा ॥ २३८ ॥

मातृमात्रं जगत्सर्वं तस्यावस्थास्तु याः स्थिताः ।
नानाविधाः स्वेच्छयैव तेऽमी भावाः पुरोगताः ॥ २३९ ॥

ता अवस्थाश्च नो तस्माद् भिन्ना इति विनिश्चयः ।
पुष्टीभावो हि तस्यैतास्तस्मादपि तदात्मिकाः ॥ २४० ॥

समनेवातिसूक्ष्मत्वादग्राह्यत्वेन संस्थितेः ।
ता एवासौ स्फुटं दृष्टे स्थूलत्वेनावभासनात् ॥ २४१ ॥

माता हि दृश्यते मेयैर्नं स्वतः सूक्ष्मतावशात् ।
तद्भावे तस्य नान्यत्वं तथा स्वेनैव भासनात् ॥ २४२ ॥

भासनं च तथा तस्य न स्वरूपविनाशकृत् ।
नो चेद् मेयस्य भानं स्यात् कथमेव निराश्रयम् ॥ २४३ ॥

मेयं तु नैव शक्तं स्वं मातुं जडतया स्थितेः ।
मिनोति यस्तु माताऽसौ स्फुटमेव पुरः स्थितः ॥ २४४ ॥

माता भावं तु मेयं वा मातामाता स्वरूपतः ।
जलभावमुपायातो ह्यग्निः शैत्येन दाहकृत् ॥ २४५ ॥

मातुर्मेयतया स्फूर्तिरवस्थान्तरमुच्यते ।
स्वरूपतो न नाशोऽसौ तन्नाशे मेयभाक् कथम् ॥ २४६ ॥

भानमात्रं प्रमाताऽसौ भातं चापि तथा भवेत् ।
नहि तस्माद् विना तस्य सिद्धिर्जात्वेव दृश्यते ॥ २४७ ॥
माता स्वरूपतो भानं मेयं विश्रान्तितः परम् ।
तत्र भानस्य रूपं स्यादिति का भेदधीर्भवेत् ॥ २४८ ॥

भानमात्रं ततः सर्वं माता वा मेयधीश्च वा ।
मानादेरत्र का चिन्ता स्फुटं मातृतया स्थिते ॥ २४९ ॥
विश्वं चतुष्टयं त्वेतन्नान्यत् किंचन विद्यते ।
कल्पितं वाऽत्र निर्मग्नं कल्पनाभावतो भवेत् ॥ २५० ॥

अभानं यच्च तद्भानमभातस्य तथा स्थितम् ।
भानं विना हि माता को न च तस्यास्ति नष्टता ॥ २५१ ॥
नष्टताऽपि च या तस्य कल्प्यते स्थूलदृष्टिभिः ।
साधितं साधयत्येव भावमात्रेण सिद्धितः ॥ २५२ ॥
कल्पनं भानसिद्धं यदभावे तस्य का कथा ।
कथायोगेऽपि भानं स्यात् तस्य तन्मातृरूपकम् ॥ २५३ ॥
माता भानं तथा मानं भानमात्रमिदं स्थितम् ।
शिवोऽयं भानमात्रं स्याद् भातव्यस्पर्शवर्जितम् ॥ २५४ ॥
सर्वस्य सर्वथा भाने शक्तता यत्र जृम्भते ।
सेयं परशिवाऽवस्था पूर्णभानस्वरूपिणी ॥ २५५ ॥
अभानं शून्यमाता स्याद् भानैक्यं तु शिवात्मकम् ।
पृथक् पृथग् भानमिह संसारः परिकीर्तितः ॥ २५६ ॥
सर्वस्य सर्वथा भानं प्रोक्ता परदशा बुधैः ।
पाश्चदश्यादिभेदोऽत्र कः स्यादिति न विद्महे ॥ २५७ ॥
धरा शिवाधिकाऽस्त्यत्र सोऽपि तस्यास्तथाऽधिकः ।
अधिकत्वं च किं वाऽत्र न्यूनस्याभावतो भवेत् ॥ २५८ ॥
सकलोऽपि शिवात् पूर्णः सोऽपि तस्मादिह स्थितः ।
पूर्णताऽपि किमेवात्र नापूर्णोऽस्त्यत्र कोऽपि यत् ॥ २५९ ॥
सर्वं वाऽत्रास्तु का हानिः सर्वपूर्णे परे पदे ।
अपूर्णता न्यूनता च यस्मादत्र कृतस्थिती ॥ २६० ॥
पाश्चदश्यादिभेदोऽयमपूर्णेष्वेव राजते ।
महापूर्णे पदे त्वत्र कथा केवास्य शोभते ॥ २६१ ॥
पाश्चदश्यादिभेदोऽयं धरादौ स्थितिभागपि ।
अत्रैवास्तीति मन्तव्यमाधाराधारताजुषि ॥ २६२ ॥
अधो ये हि स्थितं वस्तु तदाधारे स्थितं भवेत् ।
धरादौ संस्थिता धर्माः स्थिताः परशिवे ततः ॥ २६३ ॥
[1]"भारूपं परिपूर्णं स्वात्मनि विश्रान्तितो महानन्दम् ।
इच्छासंवित्करणैर्निर्भरितमनन्तशक्तिपरिपूर्णम् ॥ २६४ ॥
सर्वविकल्पविहीनं शुद्धं शान्तं लयोदयविहीनम् ।
यत् परतत्त्वं तस्मिन् विभाति षट्त्रिंशदात्म जगत्" ॥ २६५ ॥

१. परमार्थसारे १०, ११ ।

एवं परशिवे पूर्णे स्थितिः प्रोक्ता पुरातनैः।
शिवादेर्जगतः साक्षात् तद्धर्माणां ततोऽन्यथा ॥ २६६ ॥

पूर्वश्लोके स्वरूपं तु प्रोक्तं विश्वमयं प्रभोः।
द्वितीयस्य तु पूर्वार्द्धे विश्वातीतं तथापरम् ॥ २६७ ॥

उत्तरार्द्धेऽनुवादेन शिवादेस्तत्र संस्थितिः।
कथिता जगतोऽस्त्यर्थं यत्तच्छब्दानुसन्धितः ॥ २६८ ॥

शिवादिकमिदं सर्वमेवं परशिवे स्थितम्।
भवत्येवाथ तद्धर्माः क्व तिष्ठन्तु चिदादयः ॥ २६९ ॥

न तिष्ठन्ति च ते तत्र स्वाश्रयस्याप्यभावतः।
शिवादयोऽपि यत् तत्र सर्वोत्तीर्णे निरात्मकाः ॥ २७० ॥

विश्वोत्तीर्णदशा विश्वमयी च स्थितिरुज्ज्वला।
सर्वदैवास्ति तत्रोक्तं सामानाधिकरण्यतः ॥ २७१ ॥

सर्वदात्वं च किं तत्र कालावेशासहे विभौ।
सामानाधिकरण्यं वा देशत्वविरहात् स्फुटम् ॥ २७२ ॥

कालावेशोऽथ देशत्वमुभयं वात्र कथ्यताम्।
तत्सत्तया सत्त्वयोगात् किं प्राधान्यं तयोः स्थितम् ॥ २७३ ॥

प्राधान्ये वापि तस्यांशभेदनापादने रतौ।
भवेतामंशभावेन न तु तद्भेदनं स्फुटम् ॥ २७४ ॥

अमूर्तत्वे तु केयं स्यादंशभावस्य कल्पना।
तदभावे स्थितं वस्तु तदेकमिति निश्चयः ॥ २७५ ॥

अंशस्यांशान्तराश्लेषो न दृष्टो बाह्यवस्तुषु।
यथा स्व भिन्नदेशत्वादंशानामंशमूर्तिषु ॥ २७६ ॥

अंशानां भानतो विश्वमयताऽस्ति परे स्थिता।
तदभानात् तदुत्तीर्णं तत् स्यादिति विनिश्चयः ॥ २७७ ॥

मूर्तिश्चैषानुत्तरैव तस्य नो लौकिकी मता।
अनुत्तरेऽनुत्तरं हि सर्वमेव बुधैः स्मृतम् ॥ २७८ ॥

तस्योदरे जगत्सर्वं स्थितं स्थूलतया पुरः।
तथांशत्वेन सोंऽशोऽत्र यथा नो भाति किञ्चन ॥ २७९ ॥

अमूर्तत्वं च तत्रैव परां काष्ठामुपागतम्।
आकाशस्यापि मूर्तत्वं यदपेक्षावशोद्गतम् ॥ २८० ॥

यत्किञ्चिद् वक्ति यस्तेन प्रोच्यतां तदशङ्कितम् ।
यज्जानाति तु यः सोऽयं तज्जानात्वेव का क्षतिः ॥ २८१ ॥

मौनं वापि करोत्वन्यो महामौनं तथा परः ।
सर्वथा स्फूर्तिरस्यैव सर्वदा सर्वथा स्थितेः ॥ २८२ ॥

अधिकारोऽत्र योऽणूनां यथास्वं कल्पितो बुधैः ।
स बुद्धीनां विभेदेन न तु सत्यदृशा स्थितः ॥ २८३ ॥

अथवा सोऽपि कोऽस्त्यत्र परमार्थविदः प्रति ।
यो यत्राधिकृतः स्वेन स तत्रैव रतो भवेत् ॥ २८४ ॥

अरतश्चेन्न तत्रास्याधिकारो विभुना कृतः ।
निजा रुचिर्हि या सेयमधिकारोऽस्ति सत्यतः ॥ २८५ ॥

तस्याश्च निर्णयः पूर्वं कृत एवेत्यलं बहु ।
सर्वं विभूतिमात्रं स्याद् विभोः परशिवात्मनः ॥ २८६ ॥

अविभूतिश्च या सेयं विभूतेर्लेशभावतः ।
स्थिताऽस्तीत्येव मन्तव्यं सा विभूतिर्ह्यनुत्तरा ॥ २८७ ॥

महाविभूतिरेषा हि स्वात्मान्तःकरणे रता ।
विभूतीनां तथैवास्याविभूतीनां चयस्य च ॥ २८८ ॥

केवला या विभूतिः सा न विभूतिर्बुधैः स्मृता ।
विभूतिरविभूतिश्च यत्र सा भूतिरुत्तमा ॥ २८९ ॥

अविभूतिस्तु कीटस्य विभूतिः शिवगा स्मृता ।
महाविभूतिरेषा तु स्थिता परशिवे सदा ॥ २९० ॥

व्याप्यं सदाशिवादि स्याद् व्यापकः शिव एव तु ।
सोऽयं परशिवः प्रोक्तो व्याप्यो व्यापक एव च ॥ २९१ ॥

व्याप्यव्यापकभावो यः सांख्यादौ च स्थितिं गतः ।
स पूर्वापरयोरेव क्रमरीत्या विजृम्भते ॥ २९२ ॥

शिवो व्यापक एवायं पूर्वभावेन संस्मृतः ।
पूर्वत्वं नो परशिवे सर्वभावेन संस्थितेः ॥ २९३ ॥

व्याप्यरूपा स्मृता पृथ्वी परं त्वपरवर्जिता ।
अपरत्वं परशिवे परं नह्यवतिष्ठते ॥ २९४ ॥

योऽयं परशिवः प्रोक्तो व्याप्यव्यापकभावतः ।
पूर्णात् पूर्णतरः सोऽयं सर्वंसह इहेष्यते ॥ २९५ ॥

परेण भावा आरब्धाः सारभावेन संस्थितैः ।
भावैश्च पर आरब्धः पूर्णताभावनोद्यतैः ॥ २९६ ॥

शिवस्य व्यक्तिर्भावाः स्युस्तेषामव्यक्तिरेष सः ।
भावाः शिवः शिवो भावाः इति नः परमं मतम् ॥ २९७ ॥

परं विना हि भावाः के विना तैश्च परोऽपि कः ।
अन्योन्याश्रय एषोऽत्रानुत्तरे नैव दूषणम् ॥ २९८ ॥

नापरं न्यूनमत्र स्यात् परात् समधिकादपि ।
परं वाऽप्यधिकं नात्र न्यूनादप्यपरात् स्मृतम् ॥ २९९ ॥

अपरत्वं परत्वं वा नात्र विश्रान्तिमेत्यलम् ।
अपरे वा परे तत्त्वे नह्यन्तोऽत्रास्ति लेशतः ॥ ३०० ॥

शक्त्यपेक्ष्यं परत्वं तदपरत्वं च कल्प्यते ।
शक्तं हि परमित्युक्तं शक्त्यान्यपरता पदम् ॥ ३०१ ॥

परत्वमपरत्वं वा कथ्यतां तत्र को ग्रहः ।
द्वयं वा ब्रूहि मौनत्वं कुरु वा तच्च मा कुरु ॥ ३०२ ॥

सर्वंसहं हि सर्वं तु सहते शक्तियोगतः ।
अन्यथा सर्वभानं स्यात् कथमेव तु युक्तिमत् ॥ ३०३ ॥

असामर्थ्यं च तस्यैत्र न किञ्चिन्महतामयम् ।
सामर्थ्यातिगरूपत्वान्न सामर्थ्यवियोगतः ॥ ३०४ ॥

सामर्थ्यस्य वियोगोऽत्र न संभवसहः स्मृतः ।
असमर्थतया स्फूर्तौ सामर्थ्यं ह्युपयुज्यते ॥ ३०५ ॥

सामर्थ्यातिगता चेयं सामर्थ्यातिशयात्मिका ।
पूर्णीभावं गतं वस्तु शान्तमेव हि तिष्ठति ॥ ३०६ ॥

सर्वदा परमं वस्तु सर्वभावेन संस्थितम् ।
अन्यथा सर्वभानं स्यात् कथमेवेति मे वद ॥ ३०७ ॥

भानं च सर्वलेशश्चेदस्तु का क्षतिरागता ।
यदेवास्ति तदेवास्तु भाने का पक्षपातिता ॥ ३०८ ॥

कोऽपि नो भाति तादृङ् न इति चेन्ननु विस्मृतिः ।
केयं त्यक्तस्य शरणीकरणं नहि तज्ज्ञता ॥ ३०९ ॥

विस्मृतिर्नात्र किं कुर्मः सत्ता भानेन साध्यते ।
सर्वेषामिति चेद् भानमेव सर्वमितीष्यताम् ॥ ३१० ॥

अभानं चापि भानं स्यात् तदभावस्य भानतः।
अभावोऽपि हि भावः स्याद् भाववत् पारमित्यभाक् ॥ ३११ ॥

भाने विश्रान्तिमासाद्य भातव्यैः पूर्णताजुषि।
स्थेयं परशिवे सद्भिः सदा नवनवे स्थिते ॥ ३१२ ॥

नियतोऽयं शिवः कोऽस्ति पुराणो जीर्णतां गतः।
ग्राह्यः परशिवः सोऽयं सदा नवनवाकृतिः ॥ ३१३ ॥

यद् यदा भासते तद्धि तदैव परमेश्वरः।
अभासनं तरांशोऽयं तद्भोग्यानां शिवात्मता ॥ ३१४ ॥

भोग्यानां भोगरूपाऽत्रावस्था भोक्तृगता त्वियम्।
शिवभावेन संप्रोक्ता जीवन्मुक्तेषु देहिषु ॥ ३१५ ॥

विदेहमुक्ताः स्वेनैव स्वयं परशिवाः स्थिताः।
तेषां चर्चा तु केहास्ति गतानां देहदोषतः ॥ ३१६ ॥

भोग्यग्रस्तैर्नाभिमानः कर्तुं शक्योऽस्त्ययं महान्।
तदर्थे कृपणत्वस्य वशं याता हि ते स्थिताः ॥ ३१७ ॥

भोग्यान् स्वरूपलीनान् ये भावयन्ति नरोत्तमाः।
तेषां सेयं शिवावस्था स्फुरत्येव न संशयः ॥ ३१८ ॥

"भोग्यं भोक्तुर्विलीनं चेद् भोक्ता तद्वस्तुतः स्फुटः"।
इत्युक्तं हि महातन्त्रे तन्त्रालोके महात्मभिः ॥ ३१९ ॥

तेऽमी तु सर्वदा तृप्ता भवेयुर्भुवि मानवाः।
भोग्यैर्विनापि भोग्यैश्च भोग्यसत्ताप्रदत्वतः ॥ ३२० ॥

भोगार्थं कृपणा ये ते भोग्यग्रस्ताः स्मृता बुधैः।
तद्भोगमात्रतस्तेषां तृप्तिः स्यात् साऽपि वा न वा ॥ ३२१ ॥

भोक्ता भोग्यं तथा भोगस्त्रयमेकं स्मृतं बुधैः।
शिवभावेन तस्मात् स्यात् सर्वावस्था शिवात्मिका ॥ ३२२ ॥

नियतोऽत्र शिवः कोऽपि नास्त्येव परमार्थतः।
यद्यत् स्फुरति तत् सर्वं शिव एव न संशयः ॥ ३२३ ॥

यो नेता यत्र भवति स स एव स्वरूपतः।
वैमत्यं शङ्कितं त्वत्र न युक्तं तच्च वाऽस्तु सत् ॥ ३२४ ॥

व्याघातो जगतो नैवं शङ्क्योऽग्रे स्फुरणात् सदा।
सर्वस्य कथमेतच्चेदिति मा ब्रूहि भानतः ॥ ३२५ ॥

क्रीडायां कैव शङ्काऽस्ति स्वतन्त्राणां महात्मनाम् ।
यद् भाति तत्र तेनैव मङ्क्तव्यं परमे सुखे ॥ ३२६ ॥

स्वयमानन्दरूपस्य मज्जनं कुत्र वा भवेत् ।
निरानन्दे पदे तस्मात् स्थातव्यं परताजुषि ॥ ३२७ ॥

प्रतिक्रीडनकं यद्वा क्रीडकत्वविमर्शनात् ।
जगदानन्द एकत्र योगिनां स्थितिरुत्तमा ॥ ३२८ ॥

सर्वदा नवरूपेऽस्मिन् विभौ परशिवात्मके ।
पाञ्चदश्यादिभेदोऽपि नवतासूत्रणोद्यतः ॥ ३२९ ॥

नवताऽप्यत्र या सेयं स्वान्तःकृतपुराणता ।
भवत्येव न तद्धीना तत्त्वे लौकिकतां भजेत् ॥ ३३० ॥

याऽवस्था स शिवः प्रोक्तो महातज्ज्ञेषु पण्डितैः ।
तज्ज्ञेषु तु शिवः सोऽयं प्रकाशामर्शरूपकः ॥ ३३१ ॥

किञ्चित्तज्ज्ञेषु सोऽयं स्यान्नियताकारकल्पितः ।
मूढेषु तु शिवः प्रोक्तः शिलाभावेन संस्थितः ॥ ३३२ ॥

ततोऽपि विमुखानां तु चर्चा नास्तीह काचन ।
सर्वत्राधिकृतौ स्वात्मा केवलं शरणं यतः ॥ ३३३ ॥

तेषामपि यदा स्वेच्छा जायते स्वात्मवैभवात् ।
स्वात्मावलोकने शास्त्रमुखाद् गुरुमुखाच्च वा ॥ ३३४ ॥

ते चापि तत्पदं प्राप्ता भवेयुर्नात्र संशयः ।
अन्यथा तत्र यत्नो यः स लोष्ठैर्व्योमताडना । ३३५ ॥

प्राप्तानामथवा तेषां का चिन्ता परमार्थतः ।
प्राप्तं प्रति हि सर्वे स्युः प्राप्ता एव न संशयः ॥ ३३६ ॥

प्राप्तिरत्राथवा प्रोक्ता ज्ञानमात्रस्वरूपिणी ।
अज्ञातो हि पुरस्थोऽपि बन्धुरप्राप्त उच्यते ॥ ३३७ ॥

प्रमातृभेदनिर्देशः कृतः शास्त्रानुसारतः ।
एकमातृत्वविज्ञप्त्यै मातृणामित्यलं बहु ॥ ३३८ ॥

इति श्रीमदाराध्यतमाचार्यवर्य-श्रीगुरुवरराजानकभास्करकण्ठविरचिते चित्तानुबोधाख्ये महाशास्त्रे प्रमातृनिर्णयिकं नामैकादशं प्रकरणं सम्पूर्णम् । इति शिवम् ॥ ११ ॥

## द्वादशं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः ।

ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः ।

ॐ तद्द्वयसामरस्यरूपायै गुरुपादुकायै नमः ।

ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः ।

ॐ अथ निर्णीयते कृत्यं मेयं च भेदतः स्फुटम् ।
मातॄणां मातृभेदो हि ताभ्यामेवेह सुस्थिरः ॥ १ ॥

प्रोक्तः परशिवः पूर्वं सर्वरूपो निरामयः ।
कृत्यं मेयं च किं तस्य सर्वरूपस्य भेदतः ॥ २ ॥

मातुश्च मेयभावोऽत्र मेयस्यापि च मातृता ।
कर्तुश्च कार्यताऽस्त्यत्र कार्यस्यापि च कर्तृता ॥ ३ ॥

सर्वं हि सर्वभरितं सर्वदाऽत्रेति निश्चयः ।
न चेत् कस्मात् किमेवेह जायते तुच्छतावशात् ॥ ४ ॥

तुच्छताऽपि च मेयं स्यात् कथं संभवयोगिनी ।
तुच्छमपि हि वस्त्वेव साराभावे तु तत् कुतः ॥ ५ ॥

एकं चेत् सर्वभरितं तत् सर्वे तादृशाः स्मृताः ।
तदन्तरे स्थितास्तद्धि तस्माज्जातं न भिद्यते ॥ ६ ॥

शून्यं च सारहीनं नो युक्तं भानात् स्फुटं स्वयम् ।
स्वयंभावो हि सारेण केनाप्येव प्रजायते ॥ ७ ॥

जननं चात्र किं रूपं सारस्य जननं कुतः ।
यतो जायेत सारस्तु स एवेति हि निश्चयः ॥ ८ ॥

कार्यस्य कारणाद् भेदो यो मूढैः परिकल्प्यते ।
भ्रमादेव स कार्यं हि कारणस्यैव जृम्भणम् ॥ ९ ॥

भातीति कथनं चात्र न युक्तं परमार्थतः ।
स्वयं स्थितस्य किं भानमस्ति तस्यापि तत् कथम् ॥ १० ॥

कर्तृताकथनेनात्र भाति भातव्यता परम् ।
सा न युक्ता स्वयं रूपे प्रकाशे भानरूपिणि ॥ ११ ॥

यस्य भाति स चाप्यत्र तन्मात्रं न विभानतः ।
पृथक् कोऽपि प्रमाता स्याद् भानसंबन्धितापदम् ॥ १२ ॥

यत् स्वयं भानमेवैतद् भाति यच्चापि तच्च तत् ।
यस्य भाति स चाप्येतदेव भेदोऽत्र कः स्थितः ॥ १३ ॥

भेदो न कल्पितो भानमात्रतां त्यक्तुमर्हति ।
त्यजनं चापि भानं स्यादर्हणं चापि तत् स्मृतम् ॥ १४ ॥

भानमेव स्वयं वाच्यं तच्च वा तस्य संस्मृतम् ।
स्वयं शब्दप्रयोगे तद् भातिशब्दो निरर्थकः ॥ १५ ॥

शून्यशब्दप्रयोगस्य कथा काऽत्रास्ति दूषिता ।
विशेषवाचकत्वेन तस्य वाऽस्त्वत्र संस्थितिः ॥ १६ ॥

सम्बन्धिनोऽपि संबन्धो नात्र दृष्टो वुधैर्मतः ।
स्थितौ पर्यायभावेनाप्याश्रयस्यास्य सूचनात् ॥ १७ ॥

सम्बन्धी युष्मदर्थो वाऽस्मदर्थो वाऽस्तु का क्षतिः ।
तदाद्यर्थतया वाऽस्तु सर्वथा मातृधीर्यतः ॥ १८ ॥

मातॄणां हि विभेदोऽयमुपाधिवशतः स्थितः ।
न स्वाभाविक इत्येवं पूर्वमेव प्रसाधितम् ॥ १९ ॥

भातीति कथनं चापि लोकेऽत्र युज्यते यतः ।
क्रियाभावेन तत्स्थित्वा कारकान् योजयेत् स्फुटम् ॥ २० ॥

प्रकाशतेऽथ भातीति प्रयोगे नैव भेदधीः ।
यः प्रकाशः स एवेह भानं नान्याऽस्ति कल्पना ॥ २१ ॥

जानामीतिप्रयोगस्तु कर्तृभेदेन भेदितः ।
आपाततः फले त्वैक्यं भजत्येव न भिन्नताम् ॥ २२ ॥

शून्येतरकथायां च न्यायोऽयं योजनीयताम् ।
भजत्येव हि कुत्रापि भेदयोगेन युज्यते ॥ २३ ॥

स्वयं स्वेनेति चैकार्थं पण्डितैः समुदाहृतम् ।
सारस्य वाचकं शब्दद्वयमेतद्धि संस्थितम् ॥ २४ ॥

सारश्च सर्वरूपः स्यात् सर्वानुग इति स्थितिः ।
स्वं सर्वस्य हि सिद्धं स्यात् तदसिद्धौ न सर्वता ॥ २५ ॥

परोऽपि स्वेन रहितो न जातु परिदृश्यते।
नो चेत् सा परता तस्य कुत्र भायादसत्त्वतः॥ २६॥

स्वमेवातः परः स्वस्य स्वत्वे केवाऽस्ति कल्पना।
परे विशेषाः स्वस्यैव सामान्यभावताजुषः॥ २७॥

यत्र शून्यस्य स्वं तत्र भावानां तन्न किं भवेत्।
स्वस्य स्वभावकथने कथनं किं निमित्तकम्॥ २८॥

अहं चापि विशेषोऽस्य त्वं स इत्यादि च स्फुटम्।
स्वभावः सर्वगो यस्मान्नो चेन्नासौ तथा स्थितः॥ २९॥

महासामान्यवशतो भान्ति भावाः पृथक् पृथक्।
स्वं हि तद्रूपमेवेह तेन भावा विभेदतः॥ ३०॥

अहो सर्वानुगेनैव स्वभावेन पृथक् पृथक्।
भावाभावाः स्फुरन्त्येते साङ्कर्यं तं विना यतः॥ ३१॥

द्वैतमेव महाद्वैतमिति सिद्धमभीप्सितम्।
स्वमेव सर्वगं यस्माद् व्यवस्थाकरणोद्यतम्॥ ३२॥

भावशब्दप्रयोगोऽत्र पुनरुक्तो बुधैर्मतः।
स्वमेवास्ति यतो भावः सत्तावाचकतां गतः॥ ३३॥

या हि सत्ता स्वमेवैतत् स्वं विना किं नु भावयेत्।
बाह्यैरपि स्वमेवेह सत्तावाचितया मतः॥ ३४॥

अथासाधारणः स्वः स्याद् भावः सत्तेति योजना।
स्वं तु सर्वानुप्रोतं तद् साधितं काऽत्र विस्मृतिः॥ ३५॥

स्वस्य भावः स्वभावोऽथ चेदस्त्यभिभवस्तव।
राहोः शिरो विभेदेन ततो निश्चित्य शाम्यताम्॥ ३६॥

तद्धि तेनेव तत् तत्र भावशब्दस्य योजना।
व्यर्थैव स्वं यत्र तत्र तस्य भावे क आशयः॥ ३७॥

स्वमेतत् सारमात्रं स्याज्जड़चेतनभासकम्।
महासामान्यवाची तद् स्वयंशब्दः प्रकीर्तितः॥ ३८॥

महासामान्यमेवैतत् सर्वसारतया स्थितम्।
सत्तामात्रं तु भागोऽस्य निर्विभागस्य कीर्त्यते॥ ३९॥

स्वयंशब्दः सर्ववाची यतोऽयं पण्डितैः स्मृतः।
सामानाधिकरण्यं तद् सहते सर्ववाचकैः॥ ४०॥

अहंशब्देन च यतस्तदस्य सुस्फुटं स्थितम् ।
सामानाधिकरण्येऽन्यैः शब्दैः केव विगर्हणा ॥ ४१ ॥

शिवादितृणपर्यन्ते स्वयंशब्दोऽस्ति संस्थितः ।
वाचकत्वेन सर्वैकसारवाचितया ततः ॥ ४२ ॥

तत्सर्वे सर्वरूपाः स्युः सर्वसारतया स्थितेः ।
सारस्तु किमपीहैव पूरकं सर्वविग्रहे ॥ ४३ ॥

यत् स्वयं तस्य सर्वस्य सारभावेन सर्वता ।
सर्वं स्वयं स्थितं तेन सर्वं सर्वमयं भवेत् ॥ ४४ ॥

जडेषु यस्य वा मूढैर्लक्षणावृत्तिराश्रिता ।
सा तान् प्रत्येव यत्तेऽमी जडेभ्योऽतिजडाः स्मृताः ॥ ४५ ॥

सर्वेषां सर्वरूपत्वज्ञानं परदशा स्मृता ।
एकस्य सर्वताज्ञानं मध्यगानां दशा स्मृता ॥ ४६ ॥

द्विविधेयं दशा जीवन्मुक्तेषु विबुधैः स्मृता ।
विदेहमुक्ताः स्वेनैव साक्षात् परशिवाः स्थिताः ॥ ४७ ॥

केवलाऽहंमयी स्फूर्तिः प्रोक्ता शिवदशा बुधैः ।
सर्वथा सर्वभावोऽयं दशा पारशिवात्मिकी ॥ ४८ ॥

व्यापकं स्वं हि सर्वत्र नाहं वाच्यं कदाचन ।
व्याप्ये व्याप्यतया स्थित्या व्यापकत्वं हि संस्मृतम् ॥ ४९ ॥

शिवो व्यापकभावेन परं व्याप्येषु संस्थितः ।
सर्वभावेन सर्वत्र स्थितः परशिवो विभुः ॥ ५० ॥

अहं प्रकाशवाची स्यात् स्वशब्दः पूर्णवाचकः ।
स्वं तु सर्वस्य प्रत्येकं सर्वता वाचि कीर्तितम् ॥ ५१ ॥

असाधारणमेवाहो रूपं साधारणं स्थितम् ।
अनुत्तरोऽनुत्तरं हि सर्वमेव प्रकीर्तितम् ॥ ५२ ॥

समनन्तरमेवास्ति युक्तिः प्रोक्ताऽथ यद्यपि ।
तथापि साधनं कुर्मोऽन्यथा भूयो विविक्तये ॥ ५३ ॥

असाधारणमेवास्ति साधारणतया स्थितम् ।
सन्निवेशदृशस्त्यागे सा हि नो भावलक्षणम् ॥ ५४ ॥

सन्निवेशस्तु भावस्य भूषणं न तु दूषणम् ।
कल्पितत्वं च तत्रास्ति महाशोभाविधायकम् ॥ ५५ ॥

या साधारणता तेन तत् स्वात्मनि समर्पणम् ।
समर्पणं च विश्रान्तिदानं सद्भिः प्रकीर्तितम् ॥ ५६ ॥

स्वात्ममात्रे तु विश्रान्तो माता नान्यगतो भवेत् ।
यत्र स्वं न गतं तस्य सत्ता का संभवासहा ॥ ५७ ॥

तदभावे तदन्यत्वं तस्य वा कीदृशं भवेत् ।
सन्नेवान्यो यतो नासन् खपुष्पे साऽन्यता कुतः ॥ ५८ ॥

अन्यभावे स एवैको नान्यचर्चाऽत्र काचन ।
अद्वैतनिष्ठा सेयं स्याद्वेदान्तिगृहगा स्फुटम् ॥ ५९ ॥

जडा वा चेतना भावाः स्वात्मविश्रान्तिचर्वणे ।
स्वात्मन्येव विलीयन्ते योगिनां ज्ञानशालिनाम् ॥ ६० ॥

स्वमात्रभावनं यत् सा प्रोक्ता द्वैतमयी स्थितिः ।
अद्वैते हि न कोऽप्यत्र तिष्ठत्येव विभेदतः ॥ ६१ ॥

तृणादयो विशेषाश्च यदा भान्त्येव सर्वतः ।
सर्वभावेन साऽवस्था पराद्वैतमयी स्थिता ॥ ६२ ॥

जडानां सर्वभावः किं मैवं हि तव गोचरे ।
यत्रास्ति तत्र वाऽस्त्येव यदन्यमात्रगोचरः ॥ ६३ ॥

अस्थिजालस्य ते देहे तुष्टिहानी कथं वद ।
रोम्णां रोहणमेतच्चाजीवत्वे ननु संस्थिते ॥ ६४ ॥

चित्सत्ता निर्विकल्पेयं साम्येन कृतसंस्थितिः ।
सर्वत्रैव तु हृद्देशे विकल्पवशतः स्फुटा ॥ ६५ ॥

शिलायामपि चैतन्यं निर्विकल्पतया स्थितम् ।
जडत्वं तत्र यत् सेयं विकल्पाक्षमता परम् ॥ ६६ ॥

विकल्पोऽपि च तत्रास्ति सत्तामात्रेण निश्चितम् ।
प्रसारमात्रं नात्रास्य स्वातन्त्र्येण तया स्थितेः ॥ ६७ ॥

प्रसारेण विहीनोऽयं विकल्पो ननु देशिकैः ।
अतिसूक्ष्मः परामर्शः प्रोक्तः शिवपदे स्थितः ॥ ६८ ॥

एतच्च साधितं पूर्वमिति नायस्यते पुनः ।
स्वयंशब्दः सारवाची स्फुटमेव न संशयः ॥ ६९ ॥

सारः परशिवः सोऽयं न शिवो न्यूनभावतः ।
घटो हि न शिवोऽस्त्येव सर्वमेव परः शिवः ॥ ७० ॥

१"घटो मदात्मना वेत्ति वेद्म्यहं च घटात्मना"।
इत्युक्तं हि महादृष्टिपरैर्गुरुवरैः स्फुटम् ॥ ७१ ॥

मदात्मत्वं परशिवभाव एव प्रकीर्तितः।
पराहन्तापदं यस्मात् सद्भिः परशिवः स्मृतः ॥ ७२ ॥

सेयं परशिवावस्था सर्वेषां सर्वरूपता।
नियतो नास्ति कोऽप्येव देवस्तत्संज्ञितो बहिः ॥ ७३ ॥

कृत्यभेदो मेयभेदः कोऽयमत्र कृतस्थितिः।
तस्मात् परशिवं हित्वा कथ्येते तौ शिवादिषु ॥ ७४ ॥

शिवस्य कृत्यमेतद् यत् सर्वभावेन जृम्भणम्।
सर्वं शिवदशायां हि स्वात्मभावेन जृम्भते ॥ ७५ ॥

सेयं शिवदशैवास्य सर्वाभेदस्वरूपिणी।
साक्षाद्द्वारेण सर्वाणि तत्त्वान्येवेत्यलं बहु ॥ ७६ ॥

शक्तिः करणमत्रास्याहमामर्शस्वरूपिणी।
तयैवासौ यतः सर्वं सद्यः स्वात्मीकरोत्यलम् ॥ ७७ ॥

शिवतत्त्वेऽथ शक्तौ न जगन्नामापि विद्यते।
प्रकाशामर्शभावेन केवलं भानतः सदा ॥ ७८ ॥

मन्त्रेशनायकानां तु सर्वभावेन जृम्भणम्।
पादोनं पूर्णतायास्तु च्यावात् पादेन लेशतः ॥ ७९ ॥

इदन्तया ग्रहस्तेषां पादेनात्र स्थितः स्फुटम्।
तथाऽपि भेदशङ्काऽत्र न कार्या लेशतो बुधैः ॥ ८० ॥

इदन्तया ग्रहो ह्यत्राहन्ताग्रहमहोदरः।
शुद्धबोधतया स्फूर्तेर्जगतो न तु भेदतः ॥ ८१ ॥

शुद्धविद्यान्तमेवायं न्यायो योज्यस्तु धीमता।
इदन्ताग्रहणेनैतद् वक्तुं शक्यः पुनः पुनः ॥ ८२ ॥

एषां मेयतया प्रोक्ता सादाख्या भूमिरुत्तमा।
साक्षाद् द्वारतयेशादितत्त्वानि च मनीषिभिः ॥ ८३ ॥

मन्त्रेशानां तु कृत्यं स्यात् सर्वभावेन जृम्भणम्।
अर्धेनार्धेन प्रच्यावात् पूर्णता या निजात्मनि ॥ ८४ ॥

---

१. शिवदृष्टि : ५।१०५।

एषां च मेयमेकं स्यात् तत्त्वमीश्वरसंज्ञितम् ।
साक्षाद् द्वारतया चाथ शुद्धविद्यादिकं स्फुटम् ॥ ८५ ॥

पूर्वेषामथ चैतेषां करणं संस्मृता बुधैः ।
शुद्धविद्या शुद्धबोधरूपिणी तत्त्ववर्गगा ॥ ८६ ॥

मन्त्राणां सर्वभावेन पादतो जृम्भणं स्मृतम् ।
पादत्रयेण गलनात् पूर्णता या निजात्मनि ॥ ८७ ॥

मेयमेषां शुद्धविद्या साक्षादेव स्थिता स्वयम् ।
द्वारेणाथ च मायाऽपि तत्त्वग्रामो न संशयः ॥ ८८ ॥

एषां न करणापेक्षा करणे स्थितिसत्त्वतः ।
करणे करणापेक्षा नेह काचन दृश्यते ॥ ८९ ॥

ज्ञाकलानां तु कृत्यं स्याच्छुद्धबोधतया परम् ।
दर्शनं जगतः सम्यग् बोध्यास्पर्शवशादिह ॥ ९० ॥

शून्यभावान्निर्गतास्तु सद्य एते शनैः शनैः ।
जगत्किञ्चिन्न पश्यन्ति शुद्धबोधमयाः स्थिताः ॥ ९१ ॥

पूर्णता योग्यतैवेषां न तु पूर्णतया स्थितिः ।
जगतोऽन्तःकृतिर्येयं सैव पूर्णा स्थितिर्यतः ॥ ९२ ॥

जगन्नामापि तेनैव सहन्ते भयकम्पिताः ।
पिशाचाः शून्यरूपास्ते प्रोक्ताः पूर्णतया स्थितेः ॥ ९३ ॥

नाभिमानोऽस्ति कोऽप्येषां शुद्धभावेन संस्थितेः ।
अभिमानो ह्ययं शून्यभावान्तं न ततः परम् ॥ ९४ ॥

शुद्धविद्योन्मुखत्वेऽपि मायाया आद्यखण्डकम् ।
प्रमेयमेषां साक्षात्तु तत्परं द्वारतः स्मृतम् ॥ ९५ ॥

मायैव करणं त्वेषां प्रोक्ता शास्त्रविशारदैः ।
करणं हि विना कार्यं न युक्तमिह दृश्यते ॥ ९६ ॥

लयाकलानां मातॄणां कृत्यशून्यतया ग्रहः ।
जगतः करणं तेषां कलाविद्ये लयं गते ॥ ९७ ॥

मेयमेषां तु मायाया अन्त्यमर्धमुदाहृतम् ।
पुंस्तत्त्वान्तं च तत्त्वानि साक्षाद् द्वारेण चापरम् ॥ ९८ ॥

सकलानां तु मातॄणां कृत्यं भिन्नतया ग्रहः ।
जगतो भावरूपस्य स्थैर्यास्थैर्यविभेदतः ॥ ९९ ॥

मेयमेषां प्रकृत्यादि भूम्यन्तं तत्त्वजालकम् ।
करणं त्वथ वा ह्यन्तःकरणानि बुधैः स्मृतम् ॥ १०० ॥

विद्यापुष्टिमयस्त्वत्र ज्ञानेन्द्रियगणः स्मृतः ।
कलापुष्टिमयस्तद्वत् कर्मेन्द्रियगणो मतः ॥ १०१ ॥

शिवादिज्ञाकलान्तोऽत्र चित्प्रमाता स्मृतो बुधैः ।
प्रकाशरूपता योगाच्चिद्भावेनैव संस्थितेः ॥ १०२ ॥

प्रलयाकलवर्गोऽथ द्विविधः सम्प्रकीर्तितः ।
शून्यमातृस्वरूपोऽथ प्राणमातृस्वरूपकः ॥ १०३ ॥

आद्योऽपवेद्यस्तत्रापि द्वितीयोऽस्ति सवेद्यकः ।
वेद्यं च सुखमात्रं स्यात् स्वात्मरूपं न भेदतः ॥ १०४ ॥

सकलाश्चापि मातारो द्विविधाः सम्प्रकीर्तिताः ।
धीमातृरूपा अथ च देहमातृस्वरूपकाः ॥ १०५ ॥

तत्राद्याः स्वप्नद्रष्टारः परे जाग्रद्गताः स्मृताः ।
सकलत्वादपि गता विषयोभावतां गताः ॥ १०६ ॥

अत एवाद्यवाक्येऽत्र विषयादेः पदान्मया ।
आरोहः कीर्तितो यत्नाद् भृशं सुखकरः स्फुटम् ॥ १०७ ॥

विषयादेः समारुह्य विश्रान्तिः सूक्ष्मदर्शिभिः ।
विभौ परशिवे कार्या स्वान्तःकृतजगद्गणे ॥ १०८ ॥

मन्त्राद्याः शिवपर्यन्ता मातारः पूर्णतोन्मुखाः ।
पूर्णाश्च रूपमस्यैव चित्पदस्य स्मृता बुधैः ॥ १०९ ॥

इति तेषां नाद्यवाक्ये सूत्रभावेन संस्थितेः ।
कथनं कृतमेवास्ति सूत्रताहानिशङ्कया ॥ ११० ॥

सम्पन्ना वयमित्येवं भावभावमुपागताः ।
दुःखाद् दुःखं व्रजन्त्येव मोहान्मोहं तथैव च ॥ १११ ॥

समताऽप्येषु भावेषु दुःखायैव परं भवेत् ।
अहन्तायां तु कस्तत्र संशयो दुःखदोषगः ॥ ११२ ॥

अहन्तां दूरमुत्सृज्य समतां चापि दोषदाम् ।
देहे स्थितिर्बुधैः कार्या लोकायतदृगाश्रयात् ॥ ११३ ॥

संसारो हि त्रिधा प्रोक्तो मलिनो मध्यमस्तथा ।
शुद्धश्चेति बुधैस्तत्र विभागोऽयं मयोच्यते ॥ ११४ ॥

मलिनो ममतारूपो भावेष्वेतेषु कीर्तितः।
अशुद्धिर्ममतास्फूर्तिर्यस्मादाद्यैः प्रकीर्तिता ॥ ११५ ॥

मध्यमः स्याद् विमुखता परतत्त्वावलोकनात्।
ममतारहितोऽप्यत्र मूढो यद्विमुखो भवेत् ॥ ११६ ॥

शुद्धस्तु परतत्त्वेच्छारूपः प्रोक्तो महात्मभिः।
योपेक्षा परतत्त्वेऽपि संसारातीतता त्वसौ ॥ ११७ ॥

तस्माद् भावेषु ममता न कार्या जातुचिद् बुधैः।
अहन्ताया ग्रहस्यात्र चर्चाऽपि दोषदा स्मृता ॥ ११८ ॥

देहात्ममुक्ताय ततो बुद्धिग्राह्या तु पण्डितैः।
मातृभावेन तदनु प्राणाः सूक्ष्मोऽथ शून्यकम् ॥ ११९ ॥

तत्साक्षिभूतं चिन्मात्रं ततो ग्राह्यं मनीषिभिः।
ततः शिवः पूर्णरूपो ग्राह्यः स्वात्मतया स्वयम् ॥ १२० ॥

विभुः परशिवः स्वात्मा भावनीयोऽथ पण्डितैः।
स एव सर्वं सर्वं च स एवेति विनिश्चयः ॥ १२१ ॥

एतावन्मात्रमेवास्ति कार्याणां कार्यमुत्तमम्।
विषयादेः समुत्थाय या स्थितिः परमे पदे ॥ १२२ ॥

तत्त्वारोहोऽयमेवास्ति सर्वाध्वारोह एव च।
आरोहादपि चारोहोऽयमेव समुदाहृतः ॥ १२३ ॥

आरोहो वाऽस्ति कुत्रायं मिते यस्मात् स युक्तिमान्।
अमितत्वादपि गते तत्र काऽऽरोहकल्पना ॥ १२४ ॥

मायापदं मितं प्रोक्तममितः शिव उच्यते।
द्वयादपि गतोऽस्त्येव विभुः परशिवः स्वयम् ॥ १२५ ॥

गतत्वमपि किं तस्य मितामितपदद्वये।
स्थितस्य सारभावेन कार्याभावेन चाप्यलम् ॥ १२६ ॥

मितं तु मितमेवास्त्यमितं चाप्यमितं परम्।
द्वयाद् गतो द्वयं चैष पश्य वैभवमुत्तमम् ॥ १२७ ॥

कस्य वैभवमेतच्चेत् वक्षि मा ब्रूहि दुर्वचः।
किंशब्दो मितवाच्यत्र कथं योग्यो भवेद् वद ॥ १२८ ॥

यत् प्रश्ने तव सामर्थ्यं तत् तस्यैव निरन्तरम्।
विभोः परशिवस्याथ स्वद्भावेनैव तिष्ठतः ॥ १२९ ॥

ममोत्तरे च या शक्तिः सापि तस्यैव निश्चितम् ।
मामाश्रित्यैव तिष्ठन्ती केन वार्या महीयसी ॥ १३० ॥

मूकानामपि मूकत्वं तस्यैव परमेशितुः ।
यदस्ति तत् स एवायं यच्च नास्ति तदप्यसौ ॥ १३१ ॥

शिवमाश्रित्य या शक्तिस्तृणमाश्रित्य च स्थिता ।
वैभवं तत् परशिवस्यैव प्रोक्तं मनीषिभिः ॥ १३२ ॥

अशक्तिर्या च वाऽशक्ते साऽपि वैभवमुत्तमम् ।
प्रोक्तं परशिवस्यैवाशक्तभावेन संस्थितेः ॥ १३३ ॥

यो यया भाति यत्रैव यदा चैवाथ यन्मयः ।
स तदा तत्र तद्भावेनैव साक्षात् परः शिवः ॥ १३४ ॥

भाति यस्यास्य तद्भावे कल्पना कैव युज्यते ।
साध्ये हि कल्पना युक्ता न सिद्धे सिद्धभावतः ॥ १३५ ॥

कल्पनाऽपि च तद्भावमेवाश्रयति तत्क्षणात् ।
किमाश्रयणवाचा वा स्वयमेव हि सा तथा ॥ १३६ ॥

शिवावस्था परं ह्येषाऽस्त्यभेदामर्शनात्मिका ।
प्रोक्ता परदशा सेयं द्वयत्वेऽपि ततो गता ॥ १३७ ॥

अभेदो भेदवत् तत्र वस्तुभावेन तिष्ठति ।
स्फूर्तिमात्रैकरूपत्वात् सर्वदा सर्वरूपिणि ॥ १३८ ॥

अयं प्राप्यतया भातु भेदाभावो मनीषिणाम् ।
मनीषा स्पर्शनिष्क्रान्ता नैतत्स्पर्शेन दूषिता ॥ १३९ ॥

अभेदिनामभेदोऽस्तु भेदिनां भेदभावना ।
अतितज्ज्ञदृशां सर्वं सर्वथैव शिवीभवेत् ॥ १४० ॥

अशिवाद् व्यतिरिक्तोऽयं शिवः सद्भिः प्रकीर्तितः ।
शिवाशिवद्वयं तज्ज्ञदृशा परशिवः स्वयम् ॥ १४१ ॥

सर्वरूपतया सर्वं भावयन् सत्यभावतः ।
तत्रैव लीनचित्तोऽत्र योगी मुक्तो निगद्यते ॥ १४२ ॥

भेदी भावतया भावान् पश्यन् भेदी स्मृतो बुधैः ।
महाभेदी तथा पश्यन्नेव भेदाद् गतः स्मृतः ॥ १४३ ॥

केयं भेदकथा वाऽत्र यदभेदादपि स्फुटम् ।
सोऽयं गतोऽस्ति त्यक्तस्य किमादानं पुनर्वृथा ॥ १४४ ॥

अभेदी त्वेकभावेन भावान् पश्यन् पुरोऽपि यत् ।
भेददर्शी बुधैः प्रोक्तस्तत्र मोहोऽस्ति नो भृशम् ॥ १४५ ॥

स्वेनैवाभेदयुक्तेषु भेदारोपणमेव यत् ।
तदेव भेदशङ्कायां बीजं सद्भिरुदाहृतम् ॥ १४६ ॥

अभिन्नाः सन्त्यमी भावास्तज्ज्ञानां काऽत्र चर्चना ।
चर्चनैव हि यद् भेदं सन्तं वाऽसन्तमानयेत् ॥ १४७ ॥

यथा सन्ति पुरोभावास्तथा भान्त्येव निश्चितम् ।
भेदाभेदपदा काऽत्र कल्पनामात्रगोचरे ॥ १४८ ॥

सापि वा भाववत् सत्त्वं न जहात्येव चिन्मयम् ।
तत्रापि कल्पना केयं साऽपि यस्मात् तथा स्थिता ॥ १४९ ॥

भावा भान्त्वथ मा भान्तु कल्पनापि च तत्पदा ।
भानं स्वभूतेर्विस्तारोऽभानं स्वात्मनि विश्रमः ॥ १५० ॥

विभूतिर्विश्रमाच्छ्रेष्ठा विश्रान्तिश्च तथा ततः ।
द्वयं तत्र महाभूतिभावेन युगपत्स्थितम् ॥ १५१ ॥

अविभूतिस्तथा भूतिर्महाभूतेर्बुधैर्मतम् ।
एकदेशद्वयं, ताभ्यां साऽऽरब्धा हि तथा स्थिता ॥ १५२ ॥

शिवे भूतिः स्थिता येयं तृणे चाभूतिरुत्तमा ।
द्वयरूपा महाभूतिः सेयं परशिवे स्थिता ॥ १५३ ॥

स्वयं शक्तः शिवः प्रोक्तस्तृणं चाशक्तमुच्यते ।
शक्ताशक्ततया भाति महाशक्तः परः शिवः ॥ १५४ ॥

शक्ताशक्ततया भानमपूर्णानां तु यत् स्थितम् ।
शक्याशक्यविभागेन शक्तत्वान्न्यूनमेव तत् ॥ १५५ ॥

शक्तेभ्यः शक्तता येयं महद्भ्योऽपि महत्तरा ।
अशक्येभ्यस्तथा शक्तताऽस्ति सा परमा दशा ॥ १५६ ॥

अशक्तिश्चापि या तत्र शक्त्युपेक्षामयी तु सा ।
न शक्यभावरूपा सा तत्त्वेऽत्र न गता भवेत् ॥ १५७ ॥

दशात्वमत्र किं नाम कालकार्यतया स्थितम् ।
स्वान्तर्गतविकारोऽत्र कं स्वान्तर्गततां जयेत् ॥ १५८ ॥

भवत्वस्या अपि कथा पदे परशिवात्मके ।
तद्विकारविकारेऽपि स्वयं परशिवो यतः ॥ १५९ ॥

शिवे नान्यकथा युक्ता प्रकाशे तमसो यथा ।
परे सर्वकथा युक्ता सर्वसहतया स्थिते ॥ १६० ॥

महातेजश्चये मातृदृष्टिक्षीणतया स्फुटम् ।
तमस्त्वं भाति घूकानां दृष्टयोऽत्र निदर्शनम् ॥ १६१ ॥

तत्तमस्तत्र मुख्यं तु तेजसोऽपि यथा स्थितम् ।
एवं तृणादिकं तत्र शिवादप्यधिकं स्मृतम् ॥ १६२ ॥

मातृदृष्टेस्तु या गर्हा सा मूढानां विचेष्टितम् ।
दृश्यवत् सापि यत्तत्र प्रकाशघनतामयी ॥ १६३ ॥

गर्हाऽपि तत्र का गर्हा परभावेन संस्थितेः ।
मूढता च तरां तत्र प्रोक्तः परशिवः स्वयम् ॥ १६४ ॥

सा येषां तेऽपि तत्रालं तथा भावेन भान्त्यलम् ।
अतितज्ज्ञास्तदेतत् तु जानते वयमत्र के ॥ १६५ ॥

तज्ज्ञो जानाति सर्वं त्वभेदतोऽज्ञस्तु भेदतः ।
अतितज्ज्ञो यथा भातं सर्वमेव परः शिवः ॥ १६६ ॥

महोपेक्षावशेनैषामज्ञत्वमिह लक्ष्यते ।
अभेदविषयाऽप्येषा ह्युपेक्षा दोषदा स्मृता ॥ १६७ ॥

यथा भाति तथैवेदं सर्वं परतया स्पृशन् ।
अतितज्ज्ञो महोपेक्षां गत एवास्ति तत्त्वतः । १६८ ॥

परता सा च भावानां स्वयं सिद्धाऽस्ति तद्दृशा ।
स्पर्शनं तत्र किं तेन महोपेक्षाऽस्ति सर्वतः ॥ १६९ ॥

स्पर्शनं चापि तत् तस्य स्तोकं देहवशाद् भवेत् ।
उपेक्षाविषयस्तेन सोपेक्षाऽप्यस्य संस्मृता ॥ १७० ॥

यत्नेनै(ना)वाह्यतोपेक्षाप्यपेक्षैव वुधैः स्मृता ।
अपेक्षाऽपि स्वयं भाताऽस्त्युपेक्षैव स्वभावतः ॥ १७१ ॥

पूर्वं त्वपेक्षा विलयं सर्वा नेयाऽतियत्नतः ।
तानवेऽस्यास्ततः स्फूर्तावपि नैवातिदुष्टता ॥ १७२ ॥

अनादृति विनाऽपेक्षा स्वभावेनैव जृम्भते ।
अनादृतः स्वयं गच्छेदिति ज्ञानिविनिश्चयः ॥ १७३ ॥

मा वा गच्छतु का शक्तिः स्यादनादृतियोगतः ।
अनादृतः परस्थोऽपि न सन्नेव कदाचन ॥ १७४ ॥

त्यागः पूर्वमपेक्षायाः साधनं नाशने स्मृतम् ।
तानवेऽनादृतिस्तेषां परोपायः प्रकीर्तितः ॥ १७५ ॥

अथानादृतिरप्येषा नायाता नादृतिं नयेत् ।
अतितज्ज्ञे तदेतत् स्यात् महोपेक्षाप्रसाधकम् ॥ १७६ ॥

मूढैस्तु क्रियमाणा साऽनादृतिस्तत्र मोहतः ।
अपेक्षया सदा ग्रस्तैर्महादोषकरी स्मृता ॥ १७७ ॥

प्रसक्तानुप्रसक्त्याऽलं परतत्त्वाधिरोहणे ।
विषयादि बुधैः प्रोक्तं महानिश्रेणिभावतः ॥ १७८ ॥

विमुखानां यदेवास्ति महावरणमग्रगम् ।
सैषाऽधिरोहिणी प्रोक्ता प्रोन्मुखानां परे पदे ॥ १७९ ॥

आरोहविषयो योऽयं प्रोक्तः परशिवो विभुः ।
चिदादिशक्तिभिः स्वेऽयं निर्भरः पञ्चभिः स्थितः ॥ १८० ॥

तच्छक्तिपञ्चकस्यैव तदाश्रितवपुर्धृतः ।
शिवादिपञ्चकं पुष्टिरूपं नान्यस्वरूपकम् ॥ १८१ ॥

चित्पुष्टिः शिव इत्युक्ता शक्तिरानन्दपुष्टता ।
इच्छापुष्टिस्तु सादाख्यमीश्वरे ज्ञानपुष्टता ॥ १८२ ॥

क्रियापुष्टिः स्मृता विद्या शुद्धबोधस्वरूपिणी ।
अभेदाख्यं परं त्वेतत् प्रोक्तमस्ति महात्मभिः ॥ १८३ ॥

माया मेतु(सेतु)तया प्रोक्ता भेदाभेदान्तरे बुधैः ।
अस्या ऊर्ध्वे स्थितोऽभेदो भेदोऽधस्तु यतः स्फुटम् ॥ १८४ ॥

अणुर्भेदपदस्थोऽत्र शून्यमाता शिवः स्मृतः ।
प्राणमाता शक्तिरूपो धीमाताऽथ सदाशिवः ॥ १८५ ॥

मन ईश्वररूपं स्यात् विद्यारूपं शरीरकम् ।
कलादिपञ्चकं यत् तच्छिवस्याणुत्वसाधकम् ॥ १८६ ॥

मेयभेदपदे खं स्याच्छब्दतन्मात्रसंयुतम् ।
शिवरूपं स्वसूक्ष्मत्वान्निर्मलत्वेन च स्थितेः ॥ १८७ ॥

वायुः शक्तितया प्रोक्तः स्पर्शतन्मात्रसंयुतः ।
स्पन्दमात्रस्वभावत्वाच्छक्तिर्हि स्पन्दरूपिणी ॥ १८८ ॥

तेजः सदाशिवः प्रोक्तं रूपतन्मात्रसंयुतम् ।
ईश्वरस्तु जलं प्रोक्तं रसतन्मात्रभूषितम् ॥ १८९ ॥

भूमिस्तु शुद्धविद्येयं गन्धतन्मात्रसंयुता ।
मेयपञ्चकमित्युक्तं स्वगुणैः सहितं बुधैः ॥ १९० ॥

तन्मात्रभावे सूक्ष्मा ये स्फुटं शब्दादयः स्थिताः ।
भूतानां कारणान्येव ते प्रोक्ताः शास्त्रपारगैः ॥ १९१ ॥

स्थूलतां तु गतास्तेऽमी तद्गुणाः परिकीर्तिताः ।
कारणं हि गुणीभूतं कार्यं स्वे भाति सुस्फुटम् ॥ १९२ ॥

प्रथमं पञ्चकं त्वत्र श्रेष्ठं पदमुदाहृतम् ।
मध्यमं मध्यमं प्रोक्तमन्त्यं चावरमिष्यते ॥ १९३ ॥

मेयपञ्चकमेतत् तु त्यक्त्वा ग्राह्यं प्रयत्नतः ।
मातृपञ्चकमेवेह स्वात्मभावेन पण्डितैः । १९४ ॥

तत उक्ताय संग्राह्यं शिवादेः पञ्चकं स्वयम् ।
अभेदात्मकमेवेह प्रकाशैकस्वरूपकम् ॥ १९५ ॥

अतोऽपि गत्वा संग्राह्यं पूर्णात् पूर्णतया स्थितम् ।
पदं परशिवाख्यं तु पराभेदस्वरूपकम् ॥ १९६ ॥

ग्रहणं तस्य नो युक्तं गृहीतं तद्धि सर्वदा ।
स्वभावेनैव सर्वेषां सर्वं तत्रैव यत् स्थितम् ॥ १९७ ॥

गृहीतत्वं च किं वाऽत्र स्वयं सर्वे हि तत्पदम् ।
स्वस्यैव ग्रहणं यत् तत् स्वस्मात् स्वस्य विभिन्नता ॥ १९८ ॥

यस्तु स्वस्माद् विभिन्नोऽस्ति स न किंचन विद्यते ।
सत्त्वे तु तस्य तत् स्वं स्यात् सिद्धमेवास्य का ग्रहिः ॥ १९९ ॥

ग्रहिश्चाप्यस्तु का हानिः पूर्णात्पूर्णतरे पदे ।
सर्वमेव सदैवास्ति स्वभावाश्रितसौहृदम् ॥ २०० ॥

तत्तु सत्त्वं तथा मध्यभागोऽधरतया स्थितिः ।
कस्यात्र युक्ता यत् सर्वं श्रेष्ठाच्छ्रेष्ठतया स्थितम् ॥ २०१ ॥

पञ्चकत्वं च किं वाऽत्र त्रिधाकल्पनया कृतम् ।
किंभावोऽत्र कथं योग्यः कथं भावस्तरां तथा ॥ २०२ ॥

तरां भावस्तत्र कीदृक् कीदृग्भावोऽपि किं भवेत् ।
किंभावस्य पुनः केयं चर्चा त्यक्तस्य पूर्वतः ॥ २०३ ॥

किं कुर्मो मौनमप्यत्र न युक्तं जाड्यदूषितम् ।
सर्वं तत् सर्वदैवास्तु परिपूर्णेऽत्र का क्षतिः ॥ २०४ ॥

क्रीडामात्रमिदं सर्वं भाति कस्यापि सर्वतः।
महास्वातन्त्र्ययुक्तस्य नानाक्रीडनकैर्भृतम् ॥ २०५ ॥

क्रीडाऽपि विवशे भावं द्योतयन्ती न किञ्चन।
न किञ्चनत्वं तस्याश्च न किञ्चनतया स्थितम् ॥ २०६ ॥

लौकिकैस्तु समाधानैरलौकिकतया स्थिते।
निर्वाहणं किमेतन्मे लोकमध्यगतात्मनः ॥ २०७ ॥

अथवा तानि सर्वाणि सन्तु स्वस्य परस्य च।
विनोदार्थं यतो लोकाः स्वात्मा च परमेश्वरः ॥ २०८ ॥

विनोदेऽपि च यः सोऽपि रूपं परशिवस्य तु।
यथावस्था हि सा सर्वा केवलं पररूपिणी ॥ २०९ ॥

यथा रोगानुसारेण भेषजानि भवन्त्यलम्।
रोगापनुत्तये नॄणां विभेदेन सहस्रशः ॥ २१० ॥

उपायाश्च सदैवैते भावनाद्यास्तथापरे।
अधिकारिविभेदेनोपायतां यान्ति निश्चितम् ॥ २११ ॥

येनैव भेषजेनैको भवेत् कल्याणभागलम्।
तेनैवाधिक्यमाप्नोति रोगस्यान्यो न संशयः ॥ २१२ ॥

भिषग्गुरुस्त्वत्र योगी प्रष्टव्यो विनयान्वितैः।
तदुक्तस्यानुसारेण किञ्चित् सा शोभना स्मृता ॥ २१३ ॥

गुरुश्च द्विविधो ज्ञेयः कल्पितोऽकल्पितस्तथा।
तत्त्वज्ञोऽकल्पितो ज्ञेयो धारणाद्यैस्तु कल्पितः ॥ २१४ ॥

कल्पिताकल्पितो यस्तु स तृतीय उदाहृतः।
स श्रेष्ठो द्वयतो ज्ञेयः शिष्यार्थे रुचिभेदतः ॥ २१५ ॥

आदिमान्त्यपरिज्ञेयं गुरोर्लक्षणमुत्तमम्।
महाशास्त्रेषु सम्प्रोक्तं सर्वमन्त्रप्रसिद्धिदम् ॥ २१६ ॥

शिष्याश्वासान्तमेवेह शिष्यस्य गुरुभिः सदा।
उपदेशः प्रकर्तव्यः स्वानुगस्य दयाधनैः ॥ २१७ ॥

आश्वासश्च विचित्रोऽस्ति शक्तिपातानुसारतः।
धारावाहिप्रबोधानामत एवास्तु मानता ॥ २१८ ॥

धर्मपिण्डो हि वस्त्वत्र नैकं किञ्चन विद्यते।
धर्माश्च नैकदा मेयाः सर्वैरिति विनिश्चयः ॥ २१९ ॥

मानानां संप्लवोऽप्यस्ति दुर्निरूपे स्वभावतः ।
तक्षा हि काष्ठं तक्ष्णोति करणैर्विविधैः स्फुटम् ॥ २२० ॥

तादृग्गुरोरलाभे तु शास्त्रानुसरणं वरम् ।
शास्त्रतोऽपि यतः केचित् परां सिद्धिमुपागताः ॥ २२१ ॥

शास्त्रं हि द्वारतः साक्षाच्चाप्युपायप्रदर्शकम् ।
स्फुटमेवास्ति बहुधा नानामतप्रदर्शकम् ॥ २२२ ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
इति पञ्च यमाः प्रोक्ता महाशास्त्रविशारदैः ॥ २२३ ॥

शौचः सन्तोषः स्वाध्यायस्तप ईश्वरचिन्तनम् ।
नियमाः पञ्च सम्प्रोक्ता बाह्याङ्गत्वेन संस्थिताः ॥ २२४ ॥

समाधिर्यस्तु सोऽयं स्यादान्तरं साधनं महत् ।
प्राणायामादिकं तस्य पोषकं केवलं स्मृतम् ॥ २२५ ॥

एतैरुपायैः संस्कारं महाशास्त्रानुसारतः ।
ये कुर्वन्त्यात्मनस्तेऽपि संसिद्धिं प्राप्नुवन्त्यलम् ॥ २२६ ॥

अध्यात्मशास्त्रचिन्ता तु या शास्त्रेष्वफला स्मृता ।
तया ज्ञेयसमापत्तिः सद्य एव हि जायते ॥ २२७ ॥

तस्मान्नक्तन्दिनं कार्या सच्छास्त्रोपासना बुधैः ।
तां विनाऽन्ये निष्फलाः स्युरुपायाः शारदाभ्रवत् ॥ २२८ ॥

संविद्रूपे नोपयोगस्तर्कस्याप्यस्ति लेशतः ।
द्वैतशङ्कानिरासाय केवलं सोपयुज्यते ॥ २२९ ॥

स्वतः सिद्धाश्च केचित् स्युः शक्तिपातेन तीव्रतः ।
द्वित्रास्ते जगति प्रोक्ता महद्भिर्न तु पञ्चषाः ॥ २३० ॥

अनल्पकल्पनातल्पत्रोटनाटङ्कधर्मणः ।
नानुग्रहादृते किञ्चिच्छेषवृत्तौ प्रयोजनम् ॥ २३१ ॥

इत्युक्तं हि पुराविद्भिः सारमात्रेषु निश्चितैः ।
अनुग्रहः शक्तिपातस्तच्चर्चाऽग्रे भविष्यति ॥ २३२ ॥

स्वतःसिद्धास्तत्र श्रेष्ठा मध्यमाः शास्त्रतः स्मृताः ।
अवरा गुरुतः प्रोक्ता आगमेषु विवेकिभिः ॥ २३३ ॥

स्वतःसिद्धेभ्यस्तातेभ्यः श्रुत्वैतत् प्रकटीकृतम् ।
सारशास्त्रेषु दृष्ट्वा च स्वानुगानुजिघृक्षया ॥ २३४ ॥

स्वतःसिद्धाः सर्वं एव यद्यप्येव तथापि ते ।
न तथा स्युर्गुप्तनिधिर्गृहे सन्नपि नास्ति यत् ॥ २३५ ॥

अज्ञातताऽपि का वाऽत्र सा त्वत्रानादृतेः परम् ।
अनादृतो हि बद्धोऽप्यबद्ध एव पुरः स्थितः ॥ २३६ ॥

प्रक्रियाजालमेतच्च यथा दृष्टं बुधैः कृतम् ।
दृष्टे ह्यनादृतिं मूढा भजन्ति मूढभावतः ॥ २३७ ॥

साधितं प्रक्रियाजालैर्दृष्टं तत्त्वेव निश्चितैः ।
मूढा आदृतियोगेन नूतनत्वेन जानते ॥ २३८ ॥

जानन्तश्च ततः काले तत्र निश्चितबुद्धयः ।
पूर्वं भातं स्वयं वस्तु स्मरन्त्येव न संशयः ॥ २३९ ॥

मूढानामपि चित्तेषु सत्यं वस्तु स्फुरत्यलम् ।
अनादृतिवशात् तत्र नाश्वासं यान्ति ते स्वयम् ॥ २४० ॥

सत्यवस्तु स्वतः सिद्धं सर्वेषामेव भासते ।
अतिप्राकट्यतस्तत् तु भवेद् गुप्ततरं बहु ॥ २४१ ॥

वैकल्पिकं तु मातॄणां बुद्धिमात्रेण कल्पितम् ।
रहस्यतां श्रयत्येव प्रत्येकं भिन्नतावशात् ॥ २४२ ॥

अतिप्राकट्ययुक्तं तु रहस्यं परमं मतम् ।
अनादृतिवशाद् यस्मात् पुरःस्थं नैव गृह्यते ॥ २४३ ॥

विकल्प एकचित्ते यः स्फुरितोऽन्यस्य गोचरे ।
न भवत्येव सोऽस्मात् स रहस्यत्वेन भासते ॥ २४४ ॥

दर्शनानां विभिन्नत्वं विकल्पवशतो यतः ।
मातॄणां तदुपायानां जालं तत्र विभेदतः ॥ २४५ ॥

कर्म चापि बुधैस्तत्र नानाभावेन कीर्तितम् ।
विकल्पपुष्टिभावेन स्थितेर्नान्यतया स्फुटम् ॥ २४६ ॥

देशः कालः स्वभावश्च लोकानां तत्र कारणम् ।
विकल्पानां विचित्रत्वे महर्षीणामिति स्थितिः ॥ २४७ ॥

सिद्धं वस्तु तु सर्वत्राविशेषेणेव दर्शितम् ।
दर्शनेषु न तत्रास्ति स्पष्टं काऽपि निरुद्धता ॥ २४८ ॥

धर्मभेदेऽपि नो तत्र धर्मिभेदोऽस्ति लेशतः ।
निषेधेनापि यत् सत्ता तस्य सिद्धस्य साध्यते ॥ २४९ ॥

उपायानां विभेदोऽपि नैव तत्रास्ति सत्यतः।
फलभेदवशाद् भेदो ह्युपायानां बुधैर्मतः ॥ २५० ॥

भावान्तरफलानां तु भेदेऽपि परमं फलम्।
न भिन्नं दर्शनानां स्यादेकवस्तुनि सङ्गतेः ॥ २५१ ॥

दर्शनानि हि सर्वाणि साक्षाद् वा द्वारतोऽपि वा।
विश्रान्ति तत्र यान्त्येव नो चेद् दर्शनता कथम् ॥ २५२ ॥

मूढानां च विकल्पाः स्युर्दर्शनत्वपदे स्थिताः।
यदि दर्शनता तेषामविशेषेण निश्चयात् ॥ २५३ ॥

फलाभेदेऽपि जन्तूनां स्वकीये दर्शने रतिः।
हितावहा बुधैः प्रोक्ता नान्यदर्शननिष्ठता ॥ २५४ ॥

बीजाभावे हि पित्रादेस्तद्दर्शननिवेदिताः।
धर्माः स्वभाववशतः संक्रामन्त्येव पुत्रके ॥ २५५ ॥

संक्रान्तास्ते च जातस्य संस्कारभावतः स्थितेः।
विकसन्त्येव काले तु फलं दास्यन्त्यसंशयम् ॥ २५६ ॥

नवीनाश्चैव तैः सार्धं साजात्येनैव संस्थितेः।
मिलित्वाऽथ परं धर्माः फलमुत्पादयन्त्यलम् ॥ २५७ ॥

फलं च ज्ञानमेवात्र बुधैर्मुख्यतया स्मृतम्।
गौणं स्वर्गादि सम्प्रोक्तं भेषजे खण्डचूर्णवत् ॥ २५८ ॥

चित्तसंशुद्धिद्वारेण धर्मोऽयं फलदो भवेत्।
न साक्षादिति चित्तं स्वं शोधनीयं विजानता ॥ २५९ ॥

चित्तसंस्काररूपोऽयं धर्मस्तेन निजाश्रयम्।
तच्छोधयति तन्मात्रं तत्कार्यं समुदाहृतम् ॥ २६० ॥

सत्कर्मणोऽत्र संस्कारो धर्म इत्युच्यते बुधैः।
मुख्यं तस्य फलं ज्ञानं गौणं स्वर्गादि संस्मृतम् ॥ २६१ ॥

कुकर्मणस्तु संस्कारः पापमित्युच्यते बुधैः।
मोहस्तस्य फलं मुख्यं गौणं तु निरयादिकम् ॥ २६२ ॥

लक्षणावशतो धर्मः सत्कर्म प्रोच्यते जनैः।
कुकर्म पापशब्देन तथैवात्र निगद्यते ॥ २६३ ॥

सत्कर्म निजशास्त्रोक्तं तद्विरुद्धं तु कुत्सितम्।
अन्यदर्शनसम्प्रोक्तमकर्मेति स्मृतं बुधैः ॥ २६४ ॥

कर्मणश्चापि विस्तारो भविताऽग्रे सुयुक्तिभिः।
इह किञ्चित् समाख्यातं प्रसङ्गगतचर्चया ॥ २६५ ॥

स्वदर्शने स्थितं कर्म यस्त्यक्त्वाऽन्यत् समीहते।
कर्तुं स पशुरेव स्याद् दुष्करत्वान्न संशयः ॥ २६६ ॥

परदर्शनकर्मैतन्नागतं बीजभावतः।
अत्रैव सेवनीयं स्याद् बलात्कारेण निश्चितम् ॥ २६७ ॥

चित्तेन यद् गृहीतं तु बाल्यात् प्रभृति निश्चितम्।
तत्तु त्यक्तुं न शक्नोति महायत्नशतैरपि ॥ २६८ ॥

स्वकीयं न स्वकीयं स्याद् यस्य मूढस्य दुर्मतेः।
परकीयं कथं तस्य याति स्वस्य वशं बुधाः ॥ २६९ ॥

तस्मात् स्वदर्शनोक्तं तु कर्म कुर्यादतन्द्रितः।
"स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" ॥ २७० ॥

परं चापि विचाल्येत न स्वधर्मात् कदाचन।
स्वानुगत्वेऽथ भक्त्या तं तद्धर्मेणैव योजयेत् ॥ २७१ ॥

सर्वेषु निर्विशेषं हि दर्शनेषु प्रकीर्तितम्।
साध्यमेकं सिद्धवस्तु नात्र कश्चन संशयः ॥ २७२ ॥

परमार्थविचारे तु नात्र किञ्चन निष्ठितम्।
कर्म वा भावनाद्यं वा स्वयं सिद्धे परे पदे ॥ २७३ ॥

एतन्मात्रावबोधार्थं कर्म वा भावनादि वा।
स्वदर्शनानुसारेण कार्यमेव प्रयत्नतः ॥ २७४ ॥

एतन्मात्रावबोधस्तु बोधमात्रं न विद्महे।
चित्तचाञ्चल्यत्यागस्तु बोधः सद्भिरुदाहृतः ॥ २७५ ॥

चित्तं चञ्चलमेतद्धि स्वभावेनैव संस्थितम्।
तज्ज्ञेषु नास्य संस्पर्शः स्पर्शे तु तज्ज्ञता कुतः ॥ २७६ ॥

तज्ज्ञास्तृप्ता महात्मानः स्वात्ममात्रे विनिष्ठिताः।
कांक्षया हृदये स्फूर्ति न दास्यन्ति कदाचन ॥ २७७ ॥

अतितृप्तास्तु कांक्षायाः काले चाप्यतिसुस्थिताः।
अनादृतिविरक्त्यैव भवन्त्येव न संशयः ॥ २७८ ॥

---

१. गीता ३।३५।

सर्वभावेषु सर्वत्वमतितज्ज्ञः स्फुटं स्वतः ।
पश्यन्तः स्वे च दीनत्वं नैव यान्ति कदाचन ॥ २७९ ॥

तृणस्तम्बः शिवः साक्षात् स्वयं तेषां पुरः स्थितः ।
मूढानामिव मूढत्वाद् देवभावेन भावितः ॥ २८० ॥

यथा मूढास्तथैवातितज्ज्ञाश्च संसृतौ स्थिताः ।
पूर्वं मूढतयाऽन्ये तु परदृष्टिप्रभावतः ॥ २८१ ॥

स्वात्मा परशिवस्तेषां नानावयवभूषितः ।
ते चाप्यवयवास्तेषां दृष्ट्या परशिवाः स्वयम् ॥ २८२ ॥

पूर्णात् पूर्णस्तु भावोऽस्ति तेषां पूर्णे परे पदे ।
महाविश्रान्तियोगेन नेतरस्मात् तु हेतुतः ॥ २८३ ॥

महापूर्णं पदं तत्तु प्रोक्तं परशिवात्मकम् ।
यतः कीटोऽपि तत्रास्ति स्वयमेव परः शिवः ॥ २८४ ॥

नात्र कृत्यविभेदोऽस्ति मेयभेदोऽपि कश्चन ।
सर्वेषां कृत्यमेयानि तस्यैवेति हि निश्चयः ॥ २८५ ॥

कारणानां कथा काऽत्र कृत्याभावे विशेषतः ।
कर्तृजालं समस्तं वा करणं तस्य संस्थितम् ॥ २८६ ॥

सर्वेषां मेयमेवास्य मेयं ज्ञेयं विजानता ।
नास्य मेयं किमप्येव ग्रस्तं मिततयेत्यलम् ॥ २८७ ॥

कृत्यभेदो मानभेदो मातॄणां वर्णितः स्फुटम् ।
मया शास्त्रानुसारेण भूयात् सत्फलदः सदा ॥ २८८ ॥

इति श्रीमदाराध्यतमाचार्यवर्य-श्रीगुरुवरराजानकभास्करकण्ठविरचिते
चित्तानुबोधाख्ये महाशास्त्रे कृत्यभेद-मेयभेदनिर्णायकं
द्वादशं प्रकरणं सम्पूर्णम् । इति शिवम् ॥ १२ ॥

## त्रयोदशं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः ।

ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः ।

ॐ तद्द्वयसामरस्यरूपायै गुरुपादुकायै नमः ।

ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः ।

कृत्यपञ्चककर्तृत्वं शक्तिपञ्चकभेदतः ।
समकालं परशिवे स्थितं निर्णीयते स्फुटम् ॥ १ ॥

सृष्टिः स्थितिस्तथा ध्वंसः पिधानानुग्रहौ तथा ।
कृत्यानां पञ्चकं प्रोक्तमित्येवं शास्त्रदृष्टिषु ॥ २ ॥

विषयाश्रयभावेन कृत्यानां पञ्चकस्य तु ।
स्थितः परशिवः सोऽयं परमार्थेन सर्वदा ॥ ३ ॥

सृष्टिः प्रोद्भावनं प्रोक्तं कार्यजालस्य स्वात्मनि ।
स्थितिस्तु धारणं तस्य तिरोधिध्वंस उच्यते ॥ ४ ॥

संस्कारतोऽपि नाशस्तु पिधानं कीर्तितं बुधैः ।
अनुग्रहस्तु सात्म्यं स्यात् कार्यजालस्य निश्चितम् ॥ ५ ॥

शिवादयः पञ्च वाऽत्र द्वारभावेन संस्थिताः ।
कृत्यपञ्चकमेतद्धि तेषु भेदेन संस्थितम् ॥ ६ ॥

पशुमातृषु सम्प्रोक्तं संस्थितं कृत्यपञ्चकम् ।
क्रमेण युगपद्वाऽपि द्वारभावेन पण्डितैः ॥ ७ ॥

परे शिवेऽस्त्युत्तमं तच्छिवादौ मध्यमं स्मृतम् ।
अवरं तत् समाख्यातं पशुमातृषु पण्डितैः ॥ ८ ॥

क्रिया सृष्टिः समाख्याता ज्ञानं स्थितिरुदाहृता ।
इच्छा ध्वंसस्तु संप्रोक्त आनन्दोऽन्तर्धिरुच्यते ॥ ९ ॥

अनुग्रहश्चितिः प्रोक्ता सात्म्यभावेन संस्थितः ।
सर्वदा युगपत्त्वे तत् स्थितं परशिवे विभौ ॥ १० ॥

प्रादुर्भावनमेतच्च सन्निवेशविभावनम् ।
नापूर्वभावनं किञ्चित् पण्डितैः समुदाहृतम् ॥ ११ ॥

शक्तिपञ्चकमेवास्य कृत्यपञ्चकमीरितम् ।
स्वरूपे लीनतां यातं चेत्यनिर्भरचिन्मये ॥ १२ ॥

यौगपद्यं स्फुटं त्वत्र कृत्यपञ्चक ईरितम् ।
बीजे हि वृक्षसत्ताऽस्ति सम्पन्ना युगपदिह ॥ १३ ॥

ब्रह्माण्डानि त्वनेकानि चिदाकाशे स्फुरन्त्यलम् ।
एतद्ब्रह्माण्डवत् सूर्यदीप्तौ धूलिकणा इव ॥ १४ ॥

शिवादिभूमिपर्यन्तमेकत्र तत्त्वजालकम् ।
ब्रह्माण्डे भावयन् देवः सृष्टिकर्ता प्रकीर्तितः ॥ १५ ॥

तस्मिन् कालेऽन्यब्रह्माण्डे कुर्वंत् स्थितियुतं तु तत् ।
स्थितिकर्तेति सम्प्रोक्तो विभुः परशिवो बुधैः ॥ १६ ॥

तदेव ध्वंसयन् सोऽन्यब्रह्माण्डे तत्क्षणे विभुः ।
ध्वंसकर्तेति सम्प्रोक्तो बुधैः शास्त्रविशारदैः ॥ १७ ॥

तत्संस्कारस्य नाशं तु कुर्वन्नन्यत्र तत्क्षणम् ।
पिधानकर्ता सम्प्रोक्तो भगवान् शास्त्रपारगैः ॥ १८ ॥

तदेवान्यत्र विध्यण्डे स्वात्मभावेन भासयन् ।
तत्त्वजालं विभुः प्रोक्तोऽनुग्रहैकपरायणः ॥ १९ ॥

युगपत् संभवत्येवं कृत्यपञ्चकभावनम् ।
विभौ परे शिवे स्वात्मन्येव ब्रह्माण्डपिण्डके ॥ २० ॥

एकत्रापि च विध्यण्डे शिवादिभावतः स्फुरन् ।
युगपत् पञ्चकृत्यानि करोति भगवान् स्वयम् ॥ २१ ॥

मन्त्रैर्हि सृज्यते विश्वं मन्त्रज्ञैस्त्वथ धार्यते ।
तन्नायकैर्ध्वंस्यते तु शाक्तैरथ शिवोन्मुखैः ॥ २२ ॥

विधीयते शिवेनाथ स्वात्मसात्क्रियते स्फुटम् ।
जगन्मात्र विभेदेन मायापद इव स्थितम् ॥ २३ ॥

मायापदे ज्ञाकलाः स्युरनुग्रहपरायणाः ।
पिधानकारिणस्तत्रापवेद्याः प्रलयाकलाः ॥ २४ ॥

सवेद्या ध्वंसनिरताः स्थितिकारितया मताः ।
सकला द्विविधास्तद्वत् सृष्टिकारितया मताः ॥ २५ ॥

सृष्ट्यादिविषयांश्चैव सृष्ट्यादीन् भावयन् विभुः।
भाति क्रीडापरो देवो युगपत् कृत्यपञ्चके ॥ २६ ॥

पशुमातृतया तिष्ठन् नानाकार्यपदं तथा।
कृत्यपञ्चकमेतच्च करोति युगपत् प्रभुः ॥ २७ ॥

एको हि माता सृजति कार्यं तु तत्क्षणे परः।
स्थितियुक्तं करोत्येव ध्वंसयेदपरस्तु तत् ॥ २८ ॥

अन्यस्तु पिदधात्येव तत्संस्कारविनाशकः।
अनुगृह्णात्यथान्योऽत्र कार्यं विश्रान्तियोगतः ॥ २९ ॥

विकल्पाश्चैव मातॄणां भेदेन युगपद्धृदि।
पञ्चकृत्यपदं(रा) लोके दृश्यन्ते ननु भेदतः ॥ ३० ॥

एको हि माता सृजति विकल्पं तत्क्षणे परः।
स्थितियुक्तं विकल्पं स्वं कुरुते ध्वंसयेत् परः ॥ ३१ ॥

चतुर्थस्तु तिरोधत्ते पञ्चमः स्वात्मसात्तु तम्।
तदेव कुरुते नात्र काऽपि संशयकल्पना ॥ ३२ ॥

एकोऽपि च प्रमाताऽयमेकमेव विकल्पकम्।
सृष्ट्यादिविपयीकर्तुं शक्तोऽस्ति युगपत् स्वधीः ॥ ३३ ॥

एकत्वमिह कालस्य क्रियारम्भावधेस्तथा।
तत्समाप्त्यन्तमत्रोक्तं वर्तमानतया स्फुटम् ॥ ३४ ॥

तत्रावान्तरकार्याणां तन्मध्ये भाविनां तु यः।
सहभावः स एवोक्तो युगपत्त्वेन पण्डितैः ॥ ३५ ॥

मातृचेतनमेवास्य कालस्य प्राणदायकम्।
प्रोक्तं सत्पुरुषैस्तस्याभावे तत्कि स कथ्यताम् ॥ ३६ ॥

विकल्पाच्च क्रियारूपः कल्पते रूपभावतः।
घञो योगे कृतस्यैव भावार्थे शब्दशासने ॥ ३७ ॥

तस्यारम्भात् समाप्त्यन्तमेकः कालः स्मृतो बुधैः।
तदन्तस्तस्य सृष्ट्यादिपञ्चकं युगपत्स्थितम् ॥ ३८ ॥

क्षणत्रये स्थितौ चापि कृत्यपञ्चकसंस्फुरा।
तदन्तरेव भवति सूक्ष्मवस्तुविदः प्रति ॥ ३९ ॥

विकल्पेच्छा यदारम्भो विकल्पस्य बुधैः स्मृता।
विकल्पान्तरकाङ्क्षाया अर्वाक्कालोऽन्त इष्यते ॥ ४० ॥

तद्द्वयान्तर्विकल्पस्य सृष्ट्यादेः पञ्चकं स्थितम् ।
अवधानवतामेतद् गम्यं नाकुलचेतसाम् ॥ ४१ ॥

अनुग्रहस्तु यः सोऽत्र मध्यसन्धिः प्रकीर्तितः ।
अन्येनैव विकल्पेन समनन्तरभाविना ॥ ४२ ॥

तस्याभावे विकल्पस्याऽन्यस्येच्छा नैव संस्फुरेत् ।
अक्षालितं यतो वस्त्रं नैव रागान्तरं श्रयेत् ॥ ४३ ॥

सृष्ट्यादीनां त्रयं त्वत्र स्थूलमेवास्ति संस्थितम् ।
विधानं त्वथ सूक्ष्मं स्यात् संस्कारनाशनात्मकम् ॥ ४४ ॥

अनुग्रहः परात्माऽत्र शुद्धचिन्मात्ररूपकः ।
क्षालनं त्वेतदेवास्ति संविदो मध्यधामनि ॥ ४५ ॥

क्षालिता सा तु सामर्थ्यं धत्ते रागान्तरे स्फुटम् ।
तयोर्मध्यं महायोगिवरैः स्पृश्यं भवेन्न वा ॥ ४६ ॥

सावधानास्तु ये सन्तः कृत्यपञ्चकभेदने ।
मध्यषट्केऽचिरेणैव विज्ञाः स्युस्ते न संशयः ॥ ४७ ॥

कृत्यपञ्चकमेतच्च ततस्ते शान्तकल्पनाः ।
न चिराद् गालयन्त्येव शुद्धचिन्मात्रभावतः ॥ ४८ ॥

अत्यभ्यस्तो विकल्पोऽपि नैर्विकल्प्यदशां श्रयेत् ।
विद्युद्भ्योऽतितरन्नेनो विशेषा भायुरन्यथा ॥ ४९ ॥

नैर्विकल्प्यदशां प्राप्तो विकल्पो द्वारतां व्रजेत् ।
शुद्धचिद्भावताप्तौ तद् बहुद्वारैः शिवात्मता ॥ ५० ॥

सूत्रे स्वान्तर्गते मुक्ता यथा प्रोता भवन्त्यलम् ।
सर्वावस्थास्तथा शुद्धचिन्मात्रे प्रोततां गताः ॥ ५१ ॥

सूत्रं तन्तुविभेदेन मुक्ताभ्यो वर्तते स्फुटम् ।
अवस्थाभ्यस्तु भिन्ना नो शुद्धचित् परमार्थतः ॥ ५२ ॥

तेनास्यां तानि मज्जन्ति तोयबिन्दुरिवाप्चये ।
न मुक्ताः सूत्रदेहेऽन्तर्मज्जन्त्येव कदाचन ॥ ५३ ॥

कृत्यपञ्चकमेतच्च विभागावसरे स्फुटम् ।
न तिष्ठति परस्तद्वा चित्तिष्ठति वरा जिता ॥ ५४ ॥

विकल्पान्वेषणं सद्भिर्विकल्पोन्मूलनं स्मृतम् ।
दीपहस्तेन केनेह तमो दृष्टं पुरो गतम् ॥ ५५ ॥

विकल्पानां प्रसारोऽस्मिश्चित्ते कार्यो न जातुचित् ।
आयातोऽथ बलाद् धार्यो मूलान्वेषणतत्परैः ॥ ५६ ॥

[1]"परमार्थविकल्पेऽपि नावलोयेत पण्डितः ।
को हि भेदो विकल्पस्य शुभे वाऽप्यथवाऽशुभे" ॥ ५७ ॥

इत्येवं परमार्थस्य विकल्पोऽपि प्रकीर्तितः ।
हेयत्वेनैव का चर्चा बाह्यार्थविषयस्य तु ॥ ५८ ॥
अनादरविरक्त्या तु यत् तस्योन्मूलनं स्मृतम् ।
तत् प्रौढविषयेनैव विकल्पाक्रान्तहृत्कृते ॥ ५९ ॥
विकल्पाक्रान्तहृदयैस्त्यागे तेषां स्थितिः सदा ।
कार्यासंभवयोगे तु कृत्यपञ्चकनिर्णयः ॥ ६० ॥

तानवं त्वथ यातेषु विकल्पेषु शनैः शनैः ।
अनादृतिः परं कार्या परोपायतया स्थितः(तैः) ॥ ६१ ॥

ततस्तत्प्रौढियोगेन शुद्धचिद्भाव आगते ।
पूर्णचिद्भाव आयाति सोऽयं परशिवात्मकः ॥ ६२ ॥
पूर्णभावे समायाते सर्वं स्वात्मतया स्फुरेत् ।
योगिनां पूर्णदृष्ट्यैव सर्वान् भावान् प्रपश्यताम् ॥ ६३ ॥

पूर्णदृष्ट्याऽथ तेषां तु नृणां चापि पुरोगतम् ।
भात्येव परभावेन योगिनां परताजुषाम् ॥ ६४ ॥
सर्वं परतया भातं परमेव स्वयं भवेत् ।
तत्रैव लीनो योगीन्द्रो मन्त्रराजे स्थितो भवेत् ॥ ६५ ॥

यदेवायाति पुरतस्तस्य तत्र स्थितस्य तु ।
नमस्कार्यतया भाति तदेवास्य न संशयः ॥ ६६ ॥

नात्रास्ति नियमः कोऽपि कस्याप्युत्कृष्टतास्थितौ ।
सर्वोत्कृष्टं यतः सर्वं परमार्थेन विद्यते ॥ ६७ ॥

रुद्रमन्त्रेषु तेनास्ति यस्मै तस्मै कृता गतिः ।
रुद्रभावेन रुद्रो हि शिव एव बुधैः स्मृतः ॥ ६८ ॥
यदा याति पुरस्तत्र नमनं भक्तिभावतः ।
महायोगिवरेष्वेव युज्यते शुद्धभावतः ॥ ६९ ॥

यदावेशतयेवैते जानते तत्र के वयम् ।
प्रौढिं यातास्तु तेऽत्रापि गूहयन्त्येव तं बलात् ॥ ७० ॥

---

१. आलोकमाला ६ ।

नमनं चापि सर्वत्र परभावेन दर्शनम् ।
चालनं न तु हस्तादेर्बाह्ये योग्यतया हृतम् ॥ ७१ ॥

[1]"विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" ॥ ७२ ॥

इत्यत्र दर्शनं प्रोक्तं समत्वेन स्वयम्भुवा ।
न हस्तचालनं नापि श्वादिभिः सह भोजनम् ॥ ७३ ॥

हस्तादेश्चालनं बाह्यरीत्या कार्यं विजानता ।
बाह्या रीतिर्यतोऽलङ्घ्या देहान्तं पण्डितैरपि ॥ ७४ ॥

यदावेशवशेनास्ति बाह्यरीतेस्तु लङ्घनम् ।
तत्रानुकृतिमात्रं यत् तन्महादोषदं भवेत् ॥ ७५ ॥

आविष्टा इह सम्प्रोक्ता उन्मत्ताः शुद्धभावतः ।
नमस्कारे परं योग्यास्ते न संसर्गकर्मणि ॥ ७६ ॥

आविष्टत्वेऽपि ये प्रौढाः स्वाचारे संस्थिता बुधाः ।
अत्यन्तं तेन संस्कार्याः सेवनीयाश्च भक्तितः ॥ ७७ ॥

तेषां संसर्गतः पुण्यवृद्धिरेवोपजायते ।
पापानां नाशनं चैव ज्ञानं चैवाप्यते परम् ॥ ७८ ॥

उपदेशे न सक्ताः स्युरुन्मत्ता इति निश्चयः ।
दूर एव नमस्कारस्तेभ्यः कार्यो मनीषिभिः ॥ ७९ ॥

कालाद् देशाद् विप्रकृष्टवक्तारः सन्तु ते ततः ।
फलं किमीश्वरस्येह कार्यं यद्भावि तत्परम् ॥ ८० ॥

आवेशे स्वे मनः स्वं स्यात् साक्षिभूतं न वाऽपि तत् ।
मनो हि तत्र लीनं स्यादन्यथा तस्य का कथा ॥ ८१ ॥

या स्यादनुकृतिस्तस्य परार्थं तत्र निश्चितम् ।
आवेशत्वे मनस्तापं महादोषमयं श्रयेत् ॥ ८२ ॥

प्रसक्तानुप्रसंत्या(सक्त्या)लं विकल्पोऽज्ञाशनं परम् ।
मोक्षभावेन सम्प्रोक्तं महाशास्त्रविशारदैः ॥ ८३ ॥

कृत्यपञ्चकभेदस्य समं मात्रैक्यभाविनः ।
विकल्पनाशकत्वं स्याद् यथा तद् ब्रूमहे स्फुटम् ॥ ८४ ॥

---

१. गीता ५।१८।

विकल्पो भावयोगेन सिद्धार्थकथने रतः।
क्रियावाची कथं यस्मात् क्रिया केवलधातुगा ॥ ८५ ॥

क्रियाभावत्वयोगे तु केव कालत्वकल्पना।
तस्या अभावे किं तत् स्याद् यौगपद्यं विकल्पगम् ॥ ८६ ॥

अभावे यौगपद्यस्य तद्विशेषणता कथम्।
सृष्ट्यादीनां त्वमिति चेच्छृणुष्वावहितः स्फुटम् ॥ ८७ ॥

विकल्पोऽपि क्रिया पूर्वैर्भावत्वात् स्फुटमीरितः।
सिद्धत्वकथनान्नास्य क्रियाभावाच्च्युतिर्भवेत् ॥ ८८ ॥

कारकादिभिरस्पृष्टो धात्वर्थो भाव उच्यते।
क्रियाभावः स्मृतो धातुः शब्दशास्त्रविशारदैः ॥ ८९ ॥

भावे यः प्रत्ययः सोऽयं धात्वर्थं विशिनष्टि न।
धात्वर्थद्योतने यत् स केवलं कृतसंभ्रमः ॥ ९० ॥

निजा या साध्यता धातोः साध्यते स्वस्वरूपगा।
सा तं विनापि तस्यास्ति स्वरूपं विजहाति कः ॥ ९१ ॥

कारकाः सिद्धरूपास्ते साधयन्तु क्रियां ततः।
क्रियात्वं स्वे तथाप्यस्याः क्रिया साध्या हि प्रोच्यते ॥ ९२ ॥

कालवाचकता यैषा साऽपि धात्वर्थगाऽपि नो।
साध्यतां नाशयेज्जातु क्रियाप्राणतया स्थिताम् ॥ ९३ ॥

कृद्योगेन तु या तस्य सिद्धता नीयते स्फुटम्।
साध्यतायास्तु सा तत्र गतायाः साध्यताजुषि ॥ ९४ ॥

साध्यतासिद्धता येयं साऽस्य साधितया स्थितम्।
विशेषेण करोत्येव क्रियारूपत्वसाधनम् ॥ ९५ ॥

तिङ्कृत्साधनतो योऽयं भेदः सोऽत्र प्रकल्पितः।
कल्पनामात्रसारत्वान्नास्य सत्यतया स्थितिः ॥ ९६ ॥

प्रकृतेः प्रत्ययस्यापि योऽत्रार्थः स्यादखण्डितः।
खण्डना या निर्गतयोः सोऽयं सत्यतया यतः ॥ ९७ ॥

प्रत्ययार्थस्य प्राधान्यकथनं त्वतिमोहतः।
मूलं हि प्रकृतिः प्रोक्ता शाखाः प्रत्ययकल्पनाः ॥ ९८ ॥

पचतीति प्रयोगोऽयं पचिगां साध्यतां वदन्।
धात्वर्थमात्रे भवति विश्रान्तः साध्यताजुषि ॥ ९९ ॥

पाकाख्येऽयं प्रयोगेऽपि तद्गां सिद्धतया वदन् ।
साध्यतां तत्र विश्रान्तो भवत्येव न संशयः ॥ १०० ॥

एतदेवास्ति तिङ्वाच्यकर्मवच्चेति कीर्तितम् ।
प्रत्यभिज्ञामहाशास्त्रे गुरुभिः सूक्ष्मदर्शिभिः ॥ १०१ ॥

सिद्धसाध्यत्वभेदो यः स मातृकल्पनात्मकः ।
सिद्धे हि सर्वमेवात्रान्यथा तत् कथनं कथम् ॥ १०२ ॥

परत्र सिद्धया कथनं यदत्र शङ्कितं परैः ।
तदस्तु प्रति तानेव नाद्वैतवादिनः प्रति ॥ १०३ ॥

तस्मादसिद्धं नैवास्ति किंचिदत्र कदाचन ।
यच्चास्ति तद्धि सिद्धं स्यादस्तित्वेनैव संस्थितेः ॥ १०४ ॥

साध्येऽपि सिद्धता सिद्धा तज्ज्ञान् प्रति भवेत् स्फुटम् ।
साध्यभावेन सिद्धत्वादग्रे त्वेतद् भविष्यति ॥ १०५ ॥

पचतीतिप्रयोगस्य योऽर्थः पाकस्य स स्मृतः ।
गर्भीकारः करोतेस्तु कर्तृव्यापारसूचकः ॥ १०६ ॥

पाकोऽपि कर्तृगां स्वेनाऽऽक्षिपत्येव क्रियां स्फुटम् ।
कर्मगा तु क्रिया तेन न रूपान्तरमर्हति ॥ १०७ ॥

सत्तायाः साधनं किं स्यान्नहि सिद्धस्य साध्यता ।
स्फूर्तिमात्रं हि सत्ताऽस्ति मन्त्ररूपतया स्थिता ॥ १०८ ॥

स्फूर्तेर्भिन्ना तु या सत्ता साऽस्ति सर्वस्य सर्वदा ।
किं केन क्रियतां तूष्णींभावास्तिष्ठन्तु सुस्थिताः ॥ १०९ ॥

असिद्धस्य कृतिः केयं शशशृङ्गाकृतेः पदम् ।
केन दृष्टं कृतिः सिद्धस्यापि का सिद्धभावतः ॥ ११० ॥

सन्निवेशोद्भवोऽपूर्वः कार्यकारणरूपकः ।
अनाख्यं किमपीवेह परमस्ति स्वयं स्थितम् ॥ १११ ॥

पाकः शिवस्तत्कृतिर्वा कर्ता चापि स ईश्वरः ।
पचतीति प्रयोगोऽयं न जाने केन कल्पितः ॥ ११२ ॥

विकल्पते पदाद् योऽर्थो भापते मातृहृद्भुवि ।
विकल्प इत्यतोऽप्येष एव नास्त्यत्र संशयः ॥ ११३ ॥

कर्तृयोगो द्वयेऽप्यत्र समानः पण्डितैः स्मृतः ।
नहि पाकोऽस्ति पक्तारं विना कोऽपीह कश्चन ॥ ११४ ॥

साध्यतैव द्वयेऽत्रास्ति सिद्धभावेन संस्थिता ।
क्रिया हि साध्या मातॄणां न प्रभोरिव शाश्वती ॥ ११५ ॥

सिद्धभावेन कथनमत्र मूढजनं प्रति ।
साध्ये हि सिद्धता नैषां स्फुरत्येव कदाचन ॥ ११६ ॥

शिवभावेन या त्वत्र सिद्धता परमार्थतः ।
तस्या नावसरोऽस्त्यत्र मूढार्थे यत्नजालके ॥ ११७ ॥

अहंशब्दपरामृश्ये परमात्मादिशब्दतः ।
विश्रान्तिर्नैव मूढानामन्यशब्दैस्तु का कथा ॥ ११८ ॥

फलस्य सिद्धता यैस्तु पाकशब्देन कीर्त्यते ।
अविद्यापथगैस्तैस्तु चर्चा केयं महार्थयुक् ॥ ११९ ॥

विकल्पस्य फलं त्वत्र न किञ्चिद् दृश्यते बहिः ।
भावाः सिद्धाः शिवः सिद्धः स्वयं किं तेन साध्यते ॥ १२० ॥

तथापीह विकल्पाख्या क्रियेयं मातृहृद्भुवि ।
या विभाति तु सा क्रीडा शिवस्य परमेशितुः ॥ १२१ ॥

सिद्धे क्रियात्वे कालस्य चर्चा नात्र विरुद्ध्यते ।
युगपत्त्वं च सृष्ट्यादेस्तत्र केन निवार्यते ॥ १२२ ॥

सृष्ट्यादिपञ्चके त्वत्र विकल्पस्य हृदालये ।
येऽवधानरतास्ते स्युर्न चिराच्छान्तकल्पनाः ॥ १२३ ॥

तत्राप्यन्ते प्रकारे त्वनुग्रहात्मनि ये सदा ।
विश्रान्तास्ते परं धाम प्राप्ता एवेति निश्चयः ॥ १२४ ॥

प्राणचारोऽथवा लोकेऽस्त्येकः काल इति स्थितः ।
तत्रैव सृष्टिर्भवति विकल्पस्य तथा स्थितिः ॥ १२५ ॥

ध्वंसः पिधानमथ चानुग्रहश्चेति निश्चितम् ।
सृष्ट्यादीनां यौगपद्यं पञ्चानां सुस्फुटं स्थितम् ॥ १२६ ॥

द्वितीयचारगां त्वस्यानुवृत्तिं ये तु कुर्वते ।
तेषां चर्चेह नास्त्येव विमुखानां परात् पदात् ॥ १२७ ॥

प्राणचारसमत्वेन विकल्पः कल्पितो हृदि ।
परे धाम्न्येव लीयेत विश्रान्तेर्मध्यधामनि ॥ १२८ ॥

मन्त्रोच्चारे जपे होमे प्राणचारेण कल्पितः ।
महासिद्धिकरः प्रोक्तः सावधानस्य योगिनः ॥ १२९ ॥

आद्यन्तयोर्विकल्पस्य यत्तत्त्वं पारमार्थिकम् ।
नेयस्तन्मयतां सोऽयं परमार्थेन तन्मयः ॥ १३० ॥

सृष्ट्यादिकं विविञ्चानो विकल्पस्य समाहितः ।
कालान्निर्गत्य चिद्रूपः सद्य एव नरो भवेत् ॥ १३१ ॥

विकल्पास्पृष्टमनसां किञ्चित् कार्यं न विद्यते ।
विकल्पनाशनं प्रोक्तं विकल्पग्रस्तहृत्पदम् ॥ १३२ ॥

मूर्च्छावस्था विकल्पानां सुप्तिरेव न नष्टता ।
नो चेत् तस्या निर्गतो न पुनस्तत्कारितां भजेत् ॥ १३३ ॥

प्रयोगादिवशेनैते नष्टा अपि स्वभावतः ।
विकल्पाः पुनरुद्यन्ति प्रयोगा नहि सुस्थिराः ॥ १३४ ॥

अङ्गादिभक्षणाद् या तु निर्विकल्पा स्थितिर्भवेत् ।
महामौढ्यस्य सा काष्ठा महामौढ्यप्रदायिनी ॥ १३५ ॥

वैमुख्यं यत् पदार्थेभ्यो विवेकवशतो भवेत् ।
निर्विकल्पा स्थितिः सेयं न शिलावदवस्थितिः ॥ १३६ ॥

सम्यग्ज्ञानेन सेयं तु नृणां सिद्ध्यति नान्यथा ।
सम्यग्ज्ञाने यतो भावाः स्फुरन्त्येकतया पुरः ॥ १३७ ॥

एकविज्ञानविषया भावाश्चेत् स्युः पुरोगताः ।
निर्विकल्पा स्थितिः सिद्धा तद् भवेन्न तु जाड्यतः ॥ १३८ ॥

प्रत्येकं पूर्णभावेन भानं यद् भावगोचरे ।
तदेतत् स्यान्महाद्वैतपदे पादसमर्पणम् ॥ १३९ ॥

यो विकल्पोऽपि सोऽप्यत्र भाववत् पूर्णतापदम् ।
भावाः सर्वे पूर्णदृष्टौ सिद्धायां पूर्णतापदम् ॥ १४० ॥

स्वैश्वर्यभावतो ज्ञानं विकल्पेषु निरन्तरम् ।
महायोगिवरेष्वस्ति महायोगतया स्थितम् ॥ १४१ ॥

नैषा कथा विमूढानां योग्या वर्णयितुं पुरः ।
वीरा द्वित्रा इहारूढा भविष्यन्ति न वा भुवि ॥ १४२ ॥

येन तेन प्रकारेण नाशनीया विवेकिना ।
विकल्पाच्चित्तमारूढा नास्मीति ज्ञानखड्गतः ॥ १४३ ॥

विकल्पस्फुरणं स्वात्मस्वातन्त्र्यान्नान्यहेतुतः ।
तन्नाशनेऽपि यो यत्नः सोऽपि तन्मात्रतः स्थितः ॥ १४४ ॥

सद्गुरोरथ शास्त्रस्य सतो या प्राप्तिरुत्तमा।
भक्तिश्च तत्र साऽप्येषा स्वात्मस्वातन्त्र्यकल्पिता ॥ १४५ ॥

शक्तिपातश्च सोऽयं स्यात् तच्चर्चाऽग्रे भविष्यति।
प्रसङ्गगतचर्चा हि स्वल्पत्वेनैव राजते ॥ १४६ ॥

एवं परशिवः सोऽयं कृत्यपञ्चकतत्परः।
मातृद्वारा स्वयं वाऽपि युगपद् वर्तते प्रभुः ॥ १४७ ॥

[1]"सदा सृष्टिविनोदाय सदा स्थितिसुखासिने।
सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः" ॥ १४८ ॥

इत्येवमुक्तं पूर्वैश्च भावेनानेन यत्नतः।
पिधानानुग्रहौ त्वत्र संहारेणैव कीर्तितौ ॥ १४९ ॥

मातॄणां द्वारभावस्य कल्पनाऽस्ति विमोहतः।
यस्मात् परशिवाः सर्वे मातारः शक्तियोगतः ॥ १५० ॥

घटोऽपि तत्र सोऽयं स्यात् तन्मयत्वेन संस्थितेः।
शिवोऽपि तन्मयोऽस्त्यत्र भावैः पूर्णतया स्थितेः ॥ १५१ ॥

यद् यथा तत् तथैवास्ति स एव परमेश्वरः।
परमेश्वरताऽप्येषा का वा स्यान्मातृकल्पिता ॥ १५२ ॥

अनीश्वरोऽस्ति को यत्रेश्वरः स्वेश्वरतां भजेत्।
स्वस्मिंस्तु भजतस्तस्य केश्वरत्वप्रकल्पना ॥ १५३ ॥

स्वेश्वरो नेश्वरः प्रोक्तः कीटो हि पि(ऽपि हि)तथा भवेत्।
यस्यान्याधीनता भाति सा तद्देहेऽस्ति केवलम् ॥ १५४ ॥

तद्देहेऽप्यन्यदेहस्याधीनतामपि तां भजन्।
नान्याधीन इत्येवं तु शक्यो वक्तुं विजानता ॥ १५५ ॥

भूतानि नैव भिन्नानि केवलाकाशभावतः।
आकाशमात्ररूपा हि भान्त्येते परमाणवः ॥ १५६ ॥

उद्घोषितेषु देहेषु काऽन्याधीनतया स्थितिः।
तस्यैव तदधीनत्वं स्वातन्त्र्यं हि बुधैः स्मृतम् ॥ १५७ ॥

वैवश्यं वाऽथ दर्पो वा यत्तयोश्चिति वर्तते।
दोहोपाधिवशादेव तदेतन्न स्वभावतः ॥ १५८ ॥

देहेऽहंमानिता येयं सैव वैवश्यकारिणी।
तदभावे न कोऽप्यस्ति कस्याप्येव वशे स्थितः ॥ १५९ ॥

---

१. शिवस्तोत्रावली २०।९।

सा क्रीडामात्रमेवेह देवस्य परमात्मनः।
क्रीडामात्रेण वैवश्यं महास्वातन्त्र्यजृम्भणा ॥ १६० ॥

तृणादिकं भावजातं मध्ये तन्नैव शक्यते।
अन्याधीनतया वक्तुं का कथा जीवतां गणे ॥ १६१ ॥

स्वात्ममात्रे त्वयोग्यत्वमीश्वरत्वस्य कीर्तितम्।
तत्त्वे बहुत्वं त्वेषां स्यादीश्वराणां जगत्पदे ॥ १६२ ॥

ईश्वराणां बहुत्वे तु विरोधवशतः स्फुटम्।
जगन्नश्येत् क्षणात् तच्च न युक्तं तस्य भानतः ॥ १६३ ॥

जगद् यद् भाति तत्रैवेश्वरत्वं स्वं भजत्यसौ।
इति चेद् वक्षि मा ब्रूहि स्वाभीष्टासिद्धियोगतः ॥ १६४ ॥

जगच्चेत् तन्मयं नैतदस्तिताऽस्य कथं वद।
सन्मात्रपूरितं सद्धि न सद्भिः परिकीर्तितम् ॥ १६५ ॥

तन्मयत्वे स एवैतत् का तत्रेश्वरता भवेत्।
प्रोक्तमेवात्र वक्तव्यमिति नायस्यते पुनः ॥ १६६ ॥

ईश्वरत्वे तथाप्यस्य तृणं चेश्वरतापदम्।
भवेदेव न सन्देहः स्वात्ममात्रे तथा स्थिते ॥ १६७ ॥

स्वात्मा तस्य न सत् स्वेन यदि तत् का जगत्कथा।
तदभावे घटेतेशस्यापि कुत्रेशता वद ॥ १६८ ॥

संश्चेत् तदीशवत् तच्च स्वात्मेश्वरतया स्थितः।
किं नास्तीति किमेषाऽस्ति कल्पितेश्वरकल्पना ॥ १६९ ॥

सर्वं सर्वतया भाने शक्तमीश्वरतापदम्।
भावनीयं सेयमेव दशा परतया स्मृता ॥ १७० ॥

किं चोत्पादेऽनीश्वरत्वात् स्वस्य सोऽयं विभुः स्मृतः।
महेश्वरो जगन्नाथः सर्वेश्वरतया स्थितः ॥ १७१ ॥

अन्यथाऽनीश्वरत्वस्य नेश्वरत्वं भजन्नयम्।
न महेश्वरतायोग्यो भवेदेव न संशयः ॥ १७२ ॥

घटादिको भाववर्गः सदा स्वान्तः कृतद्वयः।
महेश्वरतया वक्तुं योग्य एवास्ति संशयः ॥ १७३ ॥

ईश्वरः स हि स्वे कार्येऽनीश्वरेऽन्यत्र सुस्फुटम्।
द्वयभावात् ततः सोऽयं महेश्वरतया स्थितः ॥ १७४ ॥

महेश्वरबहुत्वेऽपि महेश्वरतया स्थितिः ।
एकैव सर्वभावानामीश्वरस्य च कीर्तिता ॥ १७५ ॥

सहिते तेऽपि सोऽयं यत् सन्धिबन्धे न किञ्चन ।
सत्त्वेऽपि कस्यचित् सोऽपि स एव हि बुधैः स्मृतः ॥ १७६ ॥

भावो भावान्तरान्नैव पृथग् यत्रास्ति सत्यतः ।
एकसारतया तत्र कैषां तस्मात् पृथक्कृतिः ॥ १७७ ॥

साऽप्यस्तु नैव तद्भावं त्यजत्येव न संशयः ।
भाववत् सेयमेवेह पराद्वैतस्य चर्चना ॥ १७८ ॥

पराद्वैतं हि तद् यत्र सर्वे भावाः समन्ततः ।
भावभावेन भानेऽपि परमेकं निरामयम् ॥ १७९ ॥

अव्यक्तान्तं भेदचर्चा भेदाभासः स्मृतो बुधैः ।
मायान्तं स्यादभेदोऽथ शिवान्तं पण्डितैः स्मृतः ॥ १८० ॥

पराद्वैतं परशिवे तदेवाद्वैतमुच्यते ।
यत्र सर्वं सर्वतया भाति नैकतया परम् ॥ १८१ ॥

एकभावेन भानं हि स्फुटं भेदहतं भवेत् ।
एकं हि वस्तु किञ्चित् स्यान्न सर्वं भेदभावतः ॥ १८२ ॥

मेयभानेऽपि भेदेन प्रमाणैर्विविधैः स्थितैः ।
एकभावमयी स्फूर्तिर्महाद्वैतं बुधैः स्मृतम् ॥ १८३ ॥

[1]"षट्प्रमाणीपरिच्छेदभेदयोगेऽप्यभेदिने ।
परमार्थैकभावाय वलिं यामो भवाय ते" ॥ १८४ ॥

भट्टनारायणेनैवं प्रोक्तमस्ति निजे स्तवे ।
भेदेऽप्यभेदचर्चायाः पराद्वैतत्वमित्यलम् ॥ १८५ ॥

सर्वेषां सर्वभावोऽत्र प्रोक्तोऽस्त्येव विशेषतः ।
पराद्वैतस्य रूपं हि स एव मुनिभिः स्मृतः ॥ १८६ ॥

प्रमाणैर्हि परिच्छेदभेदयोगोऽत्र सर्वता ।
तद्भावेऽप्येकता सर्वसर्वभावः स्फुटं स्थितः ॥ १८७ ॥

एकं हि बीजभावेन सर्वमेव न संशयः ।
बीजस्य वृक्षभावे हि नैव काऽपि कदर्थना ॥ १८८ ॥

---

१. स्तवचिन्तामणिः ११ ।

सारं विनाऽस्ति किं सर्वं घटः कोऽस्ति मृदं विना।
सर्वं विना च सारः को लक्ष्यः सूक्ष्मतया स्थितेः॥ १८९॥

भावैः परशिवः सिद्धस्ते च तेनेति निश्चयः।
तस्यैव तेन का सिद्धिरलं भेदानुचिन्तया॥ १९०॥

भेदोऽपि भातरूपोऽयं भावत्वात् तन्मयः स्थितः।
भेदाऽभेदविजृम्भेयं पराभेददशा ततः॥ १९१॥

विज्ञानवादिभिः प्रोक्तो विज्ञेयः स्पर्शवर्जितः।
विज्ञानाद्वैतवादोऽत्र पूर्णे भागतया स्थितः॥ १९२॥
शून्यवादोऽपि तत्रायं शून्यवादिभिराश्रितः।
पूर्णे भागतथा(या) भाति न शाकल्यतया स्फुटम्॥ १९३॥
सत्ताद्वैतकथाऽप्यत्र भावमात्रेषु संस्थिता।
भागभावं जहात्येव न कदाचिदिति स्थितिः॥ १९४॥
शब्दाद्वैतस्य चर्चा तु विविधा संप्रकीर्तिता।
स्फोटरूपाऽस्ति तत्रैका वैयाकरणसद्मनि॥ १९५॥

क्रमिकेभ्यो हि वर्णेभ्यो नार्थस्य ज्ञप्तिरित्यतः।
व्यापकत्वं च नित्यत्वं बुधैः शब्दस्य कीर्तितम्॥ १९६॥

सर्वगोऽपि यथा वायुस्तालवृन्तात् स्फुटीभवेत्।
सर्वगोऽपि तथा शब्दो बाह्यहेतोः स्फुटीभवेत्॥ १९७॥
अर्थस्फूर्तौ स्फुटं शब्दस्फूर्तिर्हृद्भुवि दृश्यते।
अवश्यं तेन सर्वेऽर्थाः शब्दमात्रं प्रचक्षते॥ १९८॥

विशेषस्फूर्त्यभावेऽपि सामान्यस्फूर्तिरुज्ज्वला।
विद्यते न निरुल्लेखो मातार्थग्रहणे यतः॥ १९९॥

सद्योजातेषु या मौनावस्था संभावि(व्य)ते परैः।
अर्थानां ग्रहणे साऽपि न संभवसदा(हा) स्मृता॥ २००॥

अन्यथाग्रे स्वयं त्वेषां वस्तुसंकल्पदक्षता।
कथं भवेद्धि यद् यत्र नास्ति तत् तत्र न स्फुरेत्॥ २०१॥
शिलायाः पुत्रिका जातु शिक्षितापि न वक्त्यलम्।
सत्तामात्रेण तत्रापि शास्तीति साधयिष्यते॥ २०२॥
[1]"बालास्तिर्यक् प्रमातारो येऽप्यसंकेतभागिनः।
तेऽप्यकृत्रिमसंस्कारसारामेनां हि संविदम्॥ २०३॥

---

१. तन्त्रालोकः ११।६६-६७।

भिन्नभिन्नामुपाश्रित्य यान्ति चित्रां प्रमातृताम् ।"
तन्त्रालोके महातन्त्रेऽप्येतदुक्तं पुरातनैः ॥ २०४ ॥

संविद्धि शब्दरूपेव परामर्शस्वरूपिणी ।
प्रकाशसारतां याता तां विना हि जडोऽस्ति सः ॥ २०५ ॥

वस्तुदर्शनकाले तच्छब्दस्फूर्तिरिह स्थिता ।
सर्वेऽर्थाः शब्दमात्रं तन्नान्यदृष्टौ हि नान्यभाः ॥ २०६ ॥

कर्णौं पिधाय मौनार्थं तिष्ठतो हृदयान्तरात् ।
भवेच्छब्दसमुद्भूतिर्लयीकरणपण्डिताः ॥ २०७ ॥

अन्तःशब्दो बहिःशब्दो भावाश्च शब्दरूपिणः ।
मौनं च शब्दसारं स्यादिति काऽन्यस्य कल्पना ॥ २०८ ॥

[1]"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः" ॥ २०९ ॥

इत्येवमुक्ता पूर्वैश्च भावानां शब्दरूपता ।
विवर्तो हि परे(री)णामः शब्दभावेन संस्मृतः ॥ २१० ॥

[2]"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते ॥ २११ ॥

वाग्रूपता चेदुत्क्रामेदवरो(बो)धस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी" ॥ २१२ ॥

एवं श्लोकद्वयेनैषां ज्ञानानां शब्दमात्रता ।
कथिता ज्ञानमात्रं तु सर्वे भावा विचारिताः ॥ २१३ ॥

ज्ञानातिरिक्ता भावास्तु गृहीता केन हे बुधाः ।
गृहीता अपि नो तस्माद् भिन्ना यद्ग्रहणात्मकाः ॥ २१४ ॥

स्फोटत्वं चास्य शब्दस्य यस्मादेष बहिः स्थितम् ।
स्वं रूपं स्वार्थभावेन कथयत्येव निश्चितम् ॥ २१५ ॥

अन्यथा क्रमिकत्वेन वर्णानां काऽत्र मेलना ।
तदभावेऽर्थ एषोऽत्र कस्य वाच्यो भवेत् स्वयम् ॥ २१६ ॥

संस्कारभावतः स्थित्या तार्किकैः स्वार्थनिष्ठता ।
शब्दस्योक्ता तु यैस्ते स्युर्नाभिज्ञाः स्मृतिसंभवे ॥ २१७ ॥

---

१. वाक्यपदीयम् १।१ । २. वाक्यपदीयम् १।१२३-१२४ ।

तत्रापि क्रमिकत्वं तत् क्व गच्छति यतः स्मृतः।
संस्कारः प्रतिबिम्बोऽयं चित्तस्व इत्यलं बहु॥ २१८॥

पश्यन्ती स्फोट एवायमतिसूक्ष्मस्वरूपकः।
अविभागस्वरूपा सा भेदरूपा स्मृता वुधैः॥ २१९॥

अत्र निष्ठां गता ये ते परं ब्रह्म सनातनम्।
प्राप्ता एवेति मन्तव्यं निर्विकल्पस्वरूपकम्॥ २२०॥

[1]"शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति"।
इत्युक्तं हि वुधैः पूर्वैर्निष्णाताः कुशलाः स्मृताः॥ २२१॥

शब्दाद्वैतस्य चर्चेयं भागभावेन संस्थिता।
पराद्वैतस्य नात्रापि विश्रान्तिः पण्डितैः स्मृताः॥ २२२॥

अहमामर्षरूपाऽथ द्वितीया शब्दचर्चना।
पराद्वैतस्वरूपाऽस्ति प्रोक्ता सद्भिः पुरातनैः॥ २२३॥

प्रकाशस्यात्मविश्रान्तिरूपायाः किल चर्चनम्।
तस्या बहुक्तं पूर्वमिति नाऽऽयस्यते बहु॥ २२४॥

परारूपा त्वियं वाक् स्यात् स्वात्मामर्षस्वरूपिणी।
प्रकाशस्य शिवस्यास्य स्वरूपे लीनतां गता॥ २२५॥

सर्वे भावा भवन्तीह प्रकाशामर्षरूपिणः।
शिवादितृणपर्यन्तं नात्र काचिद् विकल्पना॥ २२६॥

यः प्रकाशः स आमर्षो नात्र भेदोऽस्ति कश्चन।
विद्यमानोऽपि भेदोऽत्र पराद्वैतं प्रसाधयेत्॥ २२७॥

शीतेन श्यानतां यातं यथा तोयं शिलीभवेत्।
स्वातन्त्र्येण तथा यातं तद्द्वयं भावतां स्फुटम्॥ २२८॥

शक्तस्य चोद्ययोगो न युक्तः शक्यप्रकाशने।
अग्नेः का चोदना दाहकार्ये स्फुटतया स्थिते॥ २२९॥

दारुकुड्ये यथैवास्ति वासन्तिकरसात्मता।
प्रकाशाऽहंस्वरूपत्वं तथाऽर्थानां न संशयः॥ २३०॥

नात्र विश्वासभाजो ये स्फुटं सिद्धतया स्थिते।
सङ्गतिर्नैव तैः कार्या निःस्वरूपैर्महाजडैः॥ २३१॥

---

१. मैत्रायण्युपनिषत् ६।२२।

प्रत्येकं तदमी भावाः सर्वे परशिवात्मकाः ।
प्रकाशामर्षरूपत्वान्नात्र कोऽप्यस्ति संशयः ॥ २३२ ॥

सर्वे सर्वमयास्तेऽमी वीजं बीजमयं यथा ।
महाद्वैतं तदेवैतत् सर्वेषां सर्वभावतः ॥ २३३ ॥

द्वैतं द्वैतेन निष्पिष्याद् द्वैताभासे स्थितिं भजेत् ।
तत् त्यक्त्वाऽद्वैतमाश्रित्य पराद्वैतं समाश्रयेत् ॥ २३४ ॥

महाद्वैते स्थितः पूर्णः साक्षात् परशिवः स्वयम् ।
गृहे वाऽस्तु वने वाऽस्तु सर्वत्रैव स संस्थितः ॥ २३५ ॥

तत्त्वेनैव स्थितस्तत्रेदन्त्वेनैवेह संस्थितः ।
त्वन्त्वेन त्वयि मय्येषोऽहन्त्वेनैव स्थितो विभुः ॥ २३६ ॥

न संस्थितः स कुत्रापि यतस्तेनास्ति संस्थितः ।
युगपत् सर्वदेशेषु मूर्तिभावं गतेष्वहो ॥ २३७ ॥

संस्थितत्वं किमत्रास्य सर्वान्तःकृतिशालिनः ।
सर्वान्तःकरणं चात्र न युक्तं भेददूषितम् ॥ २३८ ॥

सर्वदा सर्वथा सर्वत्रास्य समतया स्थितिः ।
युक्ताऽस्ति साऽपि वा नास्ति प्रत्यंशं भिन्नरूपिणः ॥ २३९ ॥

प्रत्यंशं भेदयोगेऽपि महाभेदोऽस्य दृश्यते ।
शाखादेर्भेदयोगेऽपि वृक्ष एकोऽस्ति यत् स्थितः ॥ २४० ॥

अभेदेऽपि च यो भेदो भेदे चाभेद एव यः ।
महाभेदः स एवोक्तो विश्रान्तेः परमं पदम् ॥ २४१ ॥

अभेदो भानसारोऽयं भेदश्चापि तथा स्मृतः ।
भानमात्रं महाभेद इत्युक्तं बहुधा पुरा ॥ २४२ ॥

अभानं चापि भानस्य रूपमेव स्मृतं बुधैः ।
नञर्थस्यापि भातत्वाद् भानभावेन संस्थितेः ॥ २४३ ॥

भानमात्रं परशिवः स यथाऽस्तु तथाऽस्तु वा ।
माऽस्तु वाऽपि तथाप्यस्य भानता केन वारिता ॥ २४४ ॥

शिवः परशिवः साक्षादशिवस्तु तरां तथा ।
नञ्योगे नास्य परता द्वैगुण्यं भजते यतः ॥ २४५ ॥

अशिवस्य शिवत्वं ये नेच्छन्ति मूढबुद्धयः ।
शिवेऽपि शिवता तेषां न सिध्यति कदाचन ॥ २४६ ॥

शिवस्य शिवताज्ञाने शिवमात्रं हि भासते।
अशिवाच्छिवभेदे तु सा न सिध्यति जातुचित् ॥ २४७ ॥

अशिवेनैव सत्ताऽत्र दत्ताऽस्ति शिवविग्रहे।
तदभावे शिवः को हि घटवत् स्वात्मनि स्थितेः ॥ २४८ ॥

अशिवेऽशिवभावेन भावनाच्छिवता शिवे।
अशिवश्चेन्न तत् कोऽयं शिवः शिवपदे स्थितः ॥ २४९ ॥

न खल्वेष शिवः शान्तो नाम कश्चिद्विभेदवान्।
सर्वेतराध्वव्यावृत्तो घटतुल्योऽस्ति कुत्रचित् ॥ २५० ॥

[1]"महाप्रकाशरूपा हि येयं संविद् विजृम्भते।
स शिवः शिवतैवास्य वैश्वरूप्यावभासिता ॥ २५१ ॥
तथाभासनयोगोऽतः स्वरसेनास्य जृम्भते"।
तन्त्रालोके च सम्प्रोक्तमित्येवं गुरुभिः स्फुटम् ॥ २५२ ॥

अशिवैस्तु शिवः सिद्धो शिवास्ते शिवतस्तथा।
द्वयान्तःकरणे शक्तं तत्त्वं किमपि तत् स्मृतम् ॥ २५३ ॥

भावैर्विना शिवः कोऽग्रमेकाकी तुच्छतां गतः।
तै पूर्णः परतां सोऽयमाश्रयत्येव चिद्घनः ॥ २५४ ॥
सेयं परदशाप्राप्तिः शक्तिपातेन केवलम्।
सद्योऽथ च क्रमेणापि सोऽयं स्यान्नवधा स्थितः ॥ २५५ ॥

तीव्रतीव्रोऽथ तन्मध्यस्तीव्रमन्दस्तथैव च।
मध्यतीव्रो मध्यमध्यो मध्यमन्दोऽथ संस्मृतः ॥ २५६ ॥
मन्दतीव्रो मन्दमध्यो मन्दमन्दस्तथा स्थितः।
एव नवविधः शक्तिपात एष स्मृतो बुधैः ॥ २५७ ॥

तीव्रतीव्रा स्वतः सिद्धिर्महामोक्षस्य संस्मृता।
सद्य एवोत्तमैः पुंभिर्न क्रमेणेति निश्चयः ॥ २५८ ॥

मन्दमन्दस्तु सोऽयं स्याद् वेत्तुर्भोगादिसाधने।
अन्येषां च यथानाम फलं ज्ञेयं मनीषिभिः ॥ २५९ ॥
पौरुषं शक्तिपातस्य रूपं प्रोक्तं मनीषिभिः।
तत्कृतं तत्कृतं तेन नात्र भेदस्य कल्पना ॥ २६० ॥

शक्तिः सा शक्यमित्युक्तं पातः प्राकट्यमस्य तु।
तदेव पौरुषं नान्यद् भोगमोक्षप्रसाधकम् ॥ २६१ ॥

---

१. तन्त्रालोकः १५।२६५-२६६।

ये कर्मकार्यतां शक्तिपातस्येच्छन्ति मानवाः ।
ते पुत्रात् पितृजन्मैते(न्मेति) कथयन्त्येव निश्चितम् ॥ २६२ ॥

देवो हि शिव इत्युक्तस्तस्यैव शक्तिरिष्यते ।
तस्याः पातः शक्तिपात इति का भेदकल्पना ॥ २६३ ॥

दैवी शक्तिर्हि सर्वत्र कारणं पण्डितैः स्मृता ।
शक्तिपातश्च सोऽयं स्याद् दैवं वा पौरुषं च वा ॥ २६४ ॥

शक्तिपातवशेनैव कर्ममोक्षादिसाधनम् ।
दीक्षादि क्रियते तज्ज्ञैस्तज्ज्ञत्वं चापि तत्स्फुरा ॥ २६५ ॥

भक्तिर्याऽपि च दीक्षादौ साऽपि तेनैव जायते ।
शक्तिपातं विना किञ्चिद् बाह्योऽपि नैव कारणम् ॥ २६६ ॥

शक्तिपातेन रहितः सदाऽऽलस्यहतो भवेत् ।
भोगाद्यौत्सुक्ययोगेऽपि स्ववञ्चनपरायणः ॥ २६७ ॥

महाऽऽलस्यं तु यत् तत् स्याद् महाविश्रान्तिरूपकम् ।
महोद्योगफलं तच्च महायोगिकृतास्पदम् ॥ २६८ ॥

जिह्मजिह्मोपवीतत्वं महाऽऽलस्यस्वरूपकम् ।
गुरोर्लक्षणभावेन स्वच्छन्दे परिकीर्तितम् ॥ २६९ ॥

जिह्मजिह्मोऽलसश्रेष्ठस्तद्भावस्तत्र संमतः ।
भावप्रधाननिर्देशवशतः परमेष्ठिना ॥ २७० ॥

उप स्वात्मसमीपे तु वि विशेषेण संस्मृतम् ।
इतं सम्बद्धमित्युक्तं तच्च तृप्ततया स्थितिः ॥ २७१ ॥

एवं गुरुमुखाच्छ्रुत्वा रहस्यं प्रकटीकृतम् ।
भवत्वास्वादजनकं सदा सज्जनचेतसि ॥ २७२ ॥

जिह्मजिह्मेतिशब्देन स्वरस्यारचनाथवा ।
उपवीतस्य सम्प्रोक्ता धारणे विभुना स्वयम् ॥ २७३ ॥

शवकेशोपवीतत्वं क्षेमराजेन कीर्तितम् ।
गुरोर्लक्षणभावेन पदेनानेन सुस्फुटम् ॥ २७४ ॥

शक्ता विचारणे नात्र मन्दबुद्धितया वयम् ।
महात्मनां मतं कोऽपि न विचारयितुं क्षमः ॥ २७५ ॥

प्रसङ्गगतया बह्वया चर्चयाऽलं प्रकुर्महे ।
प्रकृत्यानुसृति शक्तिपातो मोक्षस्य साधनम् ॥ २७६ ॥

शक्तिपातेन रहितस्त्वशक्तः प्रोच्यते पुमान् ।
बाह्याऽपि चर्चा सेयं स्याच्छक्तिपातैकहेतुका ॥ २७७ ॥

शक्तिपातवशेनैव षडध्वारोहणे पुमान् ।
तद्योगं भजते तत्रारोहत्येव शनैः शनैः ॥ २७८ ॥

तस्यातितीव्रतायां तु प्राप्त एवास्य यत्नतः ।
कोऽध्वा प्राप्तस्य हि प्राप्तावित्युक्तं पूर्वमित्यलम् ॥ २७९ ॥

शक्तिपातवशेनैव मलहानिः प्रजायते ।
मलहानौ च माताऽयं स्वयमेव शिवः स्थितः ॥ २८० ॥

मलहानेः कार्यता यैः शक्तिपातस्य कीर्त्यते ।
न ते विज्ञा यतो हानिर्न तेषां तं विना भवेत् ॥ २८१ ॥

कषायपाको नैवास्ति महताऽपि च कर्मणा ।
शक्तिपातं विना तस्मात् तन्मात्रार्थी नरो भवेत् ॥ २८२ ॥

आकाङ्क्षा शक्तिपातस्य शक्तिपातं विनाऽस्ति न ।
तदाकाङ्क्षा तथाऽप्यत्र रूढि नेया निजे हृदि ॥ २८३ ॥

कषायो मल इत्युक्तः पाकस्तस्य च पक्वता ।
मलस्य पक्वता चेयं या तस्मिन् दोषकृत् परम् ॥ २८४ ॥

वृद्धो मलो महादुःखं करोत्येव यतस्ततः ।
पक्वता वृद्धिरेवोक्ता मलदर्शनरूपिणी ॥ २८५ ॥

मलस्य दुःखकारित्वं न लब्धं यैर्महाजडैः ।
मलस्तेषामपक्वः स्यात् त्यागोऽस्य दुष्करः स्मृतः ॥ २८६ ॥

शिवेऽपि मलराहित्यं न संभवसहं स्मृतम् ।
शिवादिभावः कोऽयं स्यादन्यथा परविग्रहे ॥ २८७ ॥

अक्षोटस्य यथा पक्वात् त्वग् गलत्येव कालतः ।
स्वयमेव तथा पक्वो मलोऽयत्नं विनश्यति ॥ २८८ ॥

अहिस्त्वचं यथा पक्वां त्यजत्येव स्वभावतः ।
तथा पक्वं मलं जीवस्त्यजत्येव न संशयः ॥ २८९ ॥

अपक्वस्त्याज्यमानोऽपि निःशेषं याति नो मलः ।
अपक्वात् त्वगिवाक्षोटादिति शास्त्रार्थसंग्रहः ॥ २९० ॥

मलानां निर्णयः पूर्वं कृत एव विशेषतः ।
रागादयश्च तेषां स्युर्विशेषा इतरे न तु ॥ २९१ ॥

कषायपाक इत्युक्तो मलपाको मनीषिभिः।
शक्तिपातोऽस्य हेतुः स्यान्नायं तेनास्ति हेतुमान् ॥ २९२ ॥

शिवदेहेऽपि लेशेन मलस्पर्शोऽत्र विद्यते।
अन्यथा कोऽस्य भेदः स्यादशिवेभ्यो धरादितः ॥ २९३ ॥

परं सा मलसत्ताऽत्र शिवभावेन भासते।
पराहंमर्शविषयीभावतः स्फुरणात् स्फुटम् ॥ २९४ ॥

पदे परशिवाख्येऽस्मिन् स्थिता एव मलाः स्वयम्।
साक्षात् परशिवा भान्ति मातार इव तज्जुषः ॥ २९५ ॥

शिव एकः प्रधानं स्याच्छिवाख्येऽस्मिन् पदे स्फुटम्।
सर्वे परशिवाख्ये तत्पदे प्राधान्यभागिनः ॥ २९६ ॥

शिवभावनया भावाः शिवाः शिवपदे स्थिताः।
शिवभावनतद्रूपाः स्थिताः परपदे तु ते ॥ २९७ ॥

शिवभावोऽपि कोऽयं वा तेषां तत्रास्ति युक्तिमान्।
स्वभाव एव यत् पूर्णात् पूर्णस्तेषां विजृम्भते ॥ २९८ ॥

शिवोऽयमपि तत्रैव पूर्णात् पूर्णदशां श्रयेत्।
स्वे पदे पूर्णतैवास्य स्वस्यैव सर्वतः स्थितेः ॥ २९९ ॥

भावा लेशाः शिवस्यैते यत्रोत्कृष्टतया स्थिताः।
शिवाद् भान्त्येव तत्रासौ शिवः कीदृङ् न विद्महे ॥ ३०० ॥

स्वामी परः स एवोक्तः स्वभृत्यं भासयेदिह।
स्वस्माद् योऽधिकभावेन नान्यो नीचतया स्थितः ॥ ३०१ ॥

सन्निवेशा यथा हेम्नो हेमभावेन हेमतः।
आधिक्येनैव भासन्ते शोभाधिक्याश्रयत्वतः ॥ ३०२ ॥

तथा शिवमया भावाः शिवभावेन संस्थितेः।
शिवादप्यधिका भान्ति परत्वेनैव संस्थितेः ॥ ३०३ ॥

न ताम्रसन्निवेशाः स्युर्हेम्न आधिक्यभागिनः।
अशिवत्वेन विज्ञाता भावा एते तथा शिवात् ॥ ३०४ ॥

तीव्रात् तीव्रतरेणैषा दशा प्राप्या मनीषिभिः।
शक्तिपातेन यत्रैते भावाः परशिवाः स्वयम् ॥ ३०५ ॥

तुर्यातीतदशा सेयं महापूर्णतया स्थिता।
तुर्यावस्था तु पूर्णैव शून्येतरतया स्थितेः ॥ ३०६ ॥

पूर्णां तुर्यदशामेतां तुर्यातीतदशा यतः।
स्वान्तःकृत्य स्थिता तेन महापूर्णा बुधैः स्मृताः ॥ ३०७ ॥

मलं व्यलक्ष्य यो योगी शक्तिपातप्रभावतः।
तत्त्वजालं बहिर्देशे स्थितं स्वान्तःकरोत्यलम् ॥ ३०८ ॥

तदा परिमितं देवमविज्ञाय स्थितोऽत्र सः।
न दुःखयोगी भवति तथा चोक्तं श्रुतौ स्फुटम् ॥ ३०९ ॥

[1]"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति" ॥ ३१० ॥

स्वात्मोत्कर्षदृशः प्रौढतायां ते कृतवुद्धयः।
तृणं चापि महोत्कर्षयुक्तं पश्यन्ति निश्चितम् ॥ ३११ ॥

देहं तावत् स्वभावस्य वशतो बाह्यवस्तुषु।
वस्तुभावेन वुद्धिं च कुर्वन्त्येव यदा तदा ॥ ३१२ ॥

बाहुल्येन तु सर्वत्र परभावेन दर्शनम्।
कुर्वन्तस्ते महातृप्तियुक्ता एव भवन्त्यलम् ॥ ३१३ ॥

उपादेया विमूढानां हेयाः स्फारविरागिणाम्।
उपेक्ष्यास्तज्ज्ञलोकानां भावाः सन्ति पुरोगताः ॥ ३१४ ॥

अतितज्ज्ञास्तु ये तेषां भावाः परतया स्थिताः।
परोपादेयतां याताः साक्षात् परशिवो यथा ॥ ३१५ ॥

देहान्ते तु ततस्तेऽमी सर्वभावेन संस्थितेः।
स्वयं परशिवा एव नास्माकं वाक्पथे स्थिताः ॥ ३१६ ॥

देहेन सहिताः सिद्धा गच्छन्तीति विनिश्चयः।
मूढानामेव देहस्य नाशाद् दुःखितचेतसाम् ॥ ३१७ ॥

देहेन सहिता मूढा एव गच्छन्त्यसंशयम्।
परलोकं यतो देहभ्रमस्तेषां हृदि स्थितः ॥ ३१८ ॥

स्थूलदेहविनाशेऽपि वासनामय एष सः।
सद्यः प्रादुर्भवेत् तत्र स्वप्नस्तत्र निदर्शनम् ॥ ३१९ ॥

देहाद् विविक्त आत्माऽसौ न मूढैर्जातुचिन्मतः।
तेनैषां परलोकेऽपि तद्भावेनैव सुस्फुरा ॥ ३२० ॥

मूर्च्छाकाले तु देहस्य विस्मृतिः सा स्वशक्तितः।
भवत्येषां पुनर्देहस्मृतिमायाति भावतः ॥ ३२१ ॥

---

१. श्वेताश्वतरोपनिषत् ६।२० ।

आतिवाहिकदेहोऽयं भ्रमे यक्ष इवाग्रगः ।
पुष्टीभूतो भवेत् स्थूलदेहरूपी न संशयः ॥ ३२२ ॥

आतिवाहिकमूलोऽयं स्थूलदेहः प्रकीर्तितः ।
मनोरूपः स सम्प्रोक्तः पण्डितैस्तत्त्वदर्शिभिः ॥ ३२३ ॥

मनो हि प्रोत्थितं तस्माच्चिन्मात्रात् परमात्मनः ।
प्राणमात्रस्वरूपत्वाद् बाह्यवातमयः स्थितः ॥ ३२४ ॥

आद्यः प्रजापतिः सोऽयं प्रोक्तः शास्त्रेषु पण्डितैः ।
जीवास्तदंशा एते स्युः प्राणरूपाः स्फुटं स्थिताः ॥ ३२५ ॥

भूताकाशस्वरूपोऽसौ प्राणरूपः प्रजापतिः ।
वाय्वादिभावमासाद्य भूतभावेन जृम्भते ॥ ३२६ ॥

भूतारब्धस्तु देहोऽथ सन्निवेशविशेषयुक् ।
चेतनाश्रित एवात्र भवतीह स्वभावतः ॥ ३२७ ॥

त एते आद्यपुरुषाः प्रोक्ताः सद्भिः पुरातनैः ।
साक्षात् प्रजापतेर्जातास्तेषां सर्वा इमाः प्रजाः ॥ ३२८ ॥

नासिकाद्वारमाश्रित्य प्राणाः प्राणिहृदन्तरम् ।
विशंस्तु प्राणी भवति देहयुक्तः सुशोभनः ॥ ३२९ ॥

अथवा व्यष्टिभावेन विशत्यन्नेषु भूरिशः ।
ततोऽन्नभुग् शरीरे तु रेतोभावेन जायते ॥ ३३० ॥

तद्द्वारा स्थूलदेहत्वमासादयति पुष्टियुक् ।
जन्मचर्चा परा प्रोक्ता विस्तरेणेत्यलं बहु ॥ ३३१ ॥

आकाशमेतत् सर्वं च भरितं स्यान्मनोगणैः ।
तत्कल्पितजगद्भिश्च नात्र शङ्काऽस्ति काचन ॥ ३३२ ॥

जगत्संस्कारयुक्ता हि मृतप्राणा विनिर्गताः ।
भूताकाशे जगत् सर्वं पश्यन्त्येव यथा पुरः ॥ ३३३ ॥

चिन्मात्रकल्पनारूपं मन एवातिवाहिकम् ।
स्थूलदेहस्य मूलं स्यादिति सिद्धान्तसंग्रहः ॥ ३३४ ॥

स्थूलदेहाद् विनिष्क्रान्तं वातभावेन संस्थितम् ।
मनो देहोपरागात्तमातिवाहिक उच्यते ॥ ३३५ ॥

एवं सति जडा एव स्थूलदेहेन संयुताः ।
गच्छन्ति परलोकं नो सिद्धा मुक्ताः शरीरतः ॥ ३३६ ॥

तैर्हि देहाद् विविक्तं स्वं ज्ञातं देहविनाशतः।
पूर्वमेव ततस्तेऽमी देहाद् विस्मृतिमागताः॥ ३३७॥

मृता अपि न देहं तं ते स्मरन्त्येव जातुचित्।
त्यक्तस्य किमुपादानं विस्मृतस्य तरां तथा॥ ३३८॥

अथवा देहनाशेन नैषां यद् दुःखदा व्यथा।
तदेव देहयुक्तं स्याद् गमनं नान्यथा स्थितिः॥ ३३९॥

अथवा जगदेवैतत् तेषां देहतया स्थितम्।
ततो न तस्य देहस्य नाशः किञ्चन विद्यते॥ ३४०॥

जगद्धयनादिभावेन स्थितं परशिवो यथा।
अनादेश्चाप्यनन्तत्वं भावस्य नियतं स्थितम्॥ ३४१॥

प्रलयानां कथा त्वत्र मातृभेदेन कल्पिता।
प्रलीनं प्रति सर्वं हि प्रलीनं भासते जगत्॥ ३४२॥

महाप्रमातृप्रलये प्रलयोऽपि महान् स्मृतः।
कालस्त्वर्थो हि शक्त्यन्तं मातॄणां पण्डितैः स्मृतः॥ ३४३॥

ब्रह्माण्डा हि पराकाशे कोटिशः प्रोद्भवन्त्यलम्।
लीयन्ते च सदाऽस्माकं ब्रह्माण्डोऽत्र निदर्शनम्॥ ३४४॥

न भाण्डमेकं कुर्वाणः कुलालो निपुणः स्वयम्।
नान्यत्र शक्ता इत्येवं वक्तुं शक्तोऽस्ति केनचित्॥ ३४५॥

लयोदयौ च तौ प्रोक्तौ जगदेव मनीषिभिः।
जगता रहितो जातु नास्त्येव परमेश्वरः॥ ३४६॥

परत्वं च शिवस्यास्य जगतैव दृढीकृतम्।
अपरं हि विना कोऽयं परो नाम स्वयं भवेत्॥ ३४७॥

यथा परशिवो नित्यो जगच्चापि तथा स्मृतम्।
शिवेन जगदेतत् स्याज्जगता च शिवः स्थितः॥ ३४८॥

जगदाख्येन देहेन देहवन्तो महाजनाः।
देहेन सहिताः सर्वे कालमेवेति निश्चयः॥ ३४९॥

गमनं तु किमेतेषां सर्वत्र सर्वभावतः।
स्थितानां परमे व्योम्नि महाव्यापकताजुषि॥ ३५०॥

मांसदेहस्य नित्यत्वं कथयन्ति तु ये जडाः।
मांसपिण्डैकरूपांस्तान् धिगस्तु हतचेतसः॥ ३५१॥

जीवद्भिरेव यैस्त्यक्तो मांसदेहो सदात्मकः ।
मृतेषु तेषु का तस्य चर्चेति बहुना कृतम् ॥ ३५२ ॥

एवं देहेन मुक्ताः स्युः स्वयं परशिवाः स्थिताः ।
योगिनो देहसद्भावे स्तोकं भेदेन भानतः ॥ ३५३ ॥

कृत्यपञ्चकमेतच्च शक्तिपातेन संयुतम् ।
प्रसङ्गगतचर्चाभिः सह सम्यक् स्फुटीकृतम् ॥ ३५४ ॥

इति श्रीमदाराध्यतमाचार्यवर्य-श्रीगुरुवरराजानकभास्करकण्ठविरचिते चित्तानुबोधाख्ये महाशास्त्रे कृत्यपञ्चक-शक्तिपातादिनिर्णायकं त्रयोदशं प्रकरणं सम्पूर्णम् । इति शिवम् ॥ १३ ॥

## चतुर्दशं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः ।

ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः ।

ॐ तद्द्वयसामरस्यरूपायै गुरुपादुकायै नमः ।

ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः ।

ॐ विषयादेः समारोहो निर्णीतो विस्तरान्मया ।
मातॄणां परभावाप्त्यै सारशास्त्रानुसारतः ॥ १ ॥

अतो वैमुख्यभाजां तु कृते कर्मविनिर्णयः ।
क्रियते तद्विना ते हि स्थातुं शक्ता न चञ्चलाः ॥ २ ॥

[1]"अविज्ञातात्मतत्त्वानां क्रियामात्रं परायणम् ।
यस्य नास्त्यम्बरं पट्टं कम्बलं किं त्यजत्यसौ" ॥ ३ ॥

इत्युक्तं श्रीवशिष्ठेन मोक्षोपायेषु निश्चितम् ।
पट्टसूत्रकृतं वस्त्रं पट्टमम्बरमित्यलम् ॥ ४ ॥

ज्ञानिनामपि कर्मैतत् कदाचित् स्याद् विनोदकृत् ।
शीते हि कम्बलं स्थूलं पट्टवस्त्रादिवाधिकम् ॥ ५ ॥

शीतं तु जडता सेयं ज्ञानिनामपि सम्भवेत् ।
देहस्वभाववशतो जीवन्मुक्तदशाजुषाम् ॥ ६ ॥

चलनं कर्म संप्रोक्तं चलनं स्पन्द उच्यते ।
किञ्चित्त्वं चात्र युक्तं स्यात् सामान्यस्पन्दविग्रहे ॥ ७ ॥

सर्वकर्मा परशिवः सर्वकर्तृतया स्थितः ।
अकर्माऽपि च स प्रोक्तः सर्वोत्तीर्णतया तथा ॥ ८ ॥

आद्यस्पन्दः स्मृतं कर्म शिवस्य परमेशितुः ।
अहमामर्शरूपोऽसौ स्वरूपश्चलनं मनाक् ॥ ९ ॥

स्वात्मनोऽपि परामर्शे स्वात्मा मेथतया मनाक् ।
स्फुरत्येव प्रकाशस्य परामृश्यतया लसन् ॥ १० ॥

१. योगवाशिष्ठम्

परामृष्टा परामृश्यभावेन स्फुरणोद्यतः ।
स्वरूपाच्चलितो भाति मनागत्र न संशयः ॥ ११ ॥

सर्वथा चलनं त्वत्र न युक्तं नहि तत्त्वतः ।
परामृश्यो भवत्येव शिवोऽहंस्पर्शदूषितः ॥ १२ ॥

सेयं विमर्शशक्तिः स्याच्चिदानन्दस्वरूपिणी ।
क्रियाशक्तितया पुष्टिं याता कर्मेति कथ्यते ॥ १३ ॥

अन्तःस्फुरा यथा जन्तोर्देहद्वारेण निर्गता ।
क्रियाभावमुपैत्येव शिवस्याहंस्फुरा तथा ॥ १४ ॥

महामन्त्रेषु देहेषु सेयमिच्छास्वरूपिणी ।
ज्ञानरूपा तु मन्त्रेशवर्गे सेयमवस्थिता ॥ १५ ॥

मन्त्रेष्वथ च सम्प्रोक्ता क्रियाशक्तिस्वरूपिणी ।
अभेदपथ एवायं शिवरूपः प्रकीर्तितः ॥ १६ ॥

इदन्ताग्रहणं त्वत्र प्रादुर्भवति यत् ततः ।
भेदेन व्यवहारोऽस्ति वोध्यान् बोधयितुं परम् ॥ १७ ॥

पञ्चधा स्थितया शक्त्या शिवादिकमिदं जगत् ।
करोति भगवान् सोऽयं मातृमेयविभूषितम् ॥ १८ ॥

उपादानं तत्र शक्तिः सर्वान्तःकरणे रता ।
प्रथमाण्डत्वमेतस्याः सर्वावरकतामयम् ॥ १९ ॥

द्वितीयाण्डं तु मायाऽत्र भ्रमकारितया स्थितम् ।
चक्रस्थाने यतश्चक्रं विना न घटनिर्मितिः ॥ २० ॥

प्रकृत्यण्डं तृतीयं तु बुद्ध्याद्यावृतितत्परम् ।
करणत्वेन सम्प्रोक्तं महाकर्तुर्महेशितुः ॥ २१ ॥

चतुर्थमण्डं ब्रह्माण्डं स्वान्तःकृतजगत्त्रयम् ।
तदन्तर्देहवर्गोऽयं तथैवाण्डतया स्थितेः ॥ २२ ॥

शक्तिपञ्चकमेवं तु कर्मभावेन संस्थितम् ।
शिवादेर्मातृवर्गस्यास्याभेदपदगामिनः ॥ २३ ॥

शून्यस्य चेतनं कर्म ज्ञकलानां स्मृतं बुधैः ।
शून्यसाक्षितया स्थित्या चेत्यचिन्मात्ररूपिणाम् ॥ २४ ॥

शून्यमातरि कर्मास्ति न किञ्चिद्भावनात्मकम् ।
न किञ्चिद्भावनं यत्नो यत्नः कर्मैव सुस्फुटम् ॥ २५ ॥

प्राणमातरि कर्म स्याद् बलमात्रस्वरूपकम् ।
प्राणो हि बलमित्युक्तो वायुस्तस्यैव पुष्टता ॥ २६ ॥

धीमातृभावकालस्य बलं तच्चेतनीभवेत् ।
धीमातुश्चेतना सेयं कर्म सद्भिरुदाहृतम् ॥ २७ ॥

स्वात्ममात्रैकविषया चेतना बाह्यवस्तुगा ।
संकल्पवृत्तिरुदिता मनःसत्तास्वरूपिणी ॥ २८ ॥

स्थूलप्राणतया साऽथ स्फुरन्ती क्षुब्धतावशात् ।
प्राणवृत्तिः समाख्याता देहचालकतां गता ॥ २९ ॥

देहमातरि सेयं तु बाह्यकर्मतया स्थिता ।
अङ्गचालनभावं यद् गता स्वेनैव तिष्ठति ॥ ३० ॥

जडानामपि यत् कर्म द्विविधं तत् प्रकीर्तितम् ।
एकं चेतनयत्नेन स्वभाववशतोऽपरम् ॥ ३१ ॥

तत्राद्यं चेतनारूपं चेतनाकार्यतावशात् ।
स्वभावेन च यः सोऽपि तथा चित्सारतावशात् ॥ ३२ ॥

नवोत्थानवतां पूर्वकर्मोत्थानं स्मृतं बुधैः ।
अयोनिजास्त एते स्युः प्रथमे मुनयः स्फुटम् ॥ ३३ ॥

शुक्रशोणितसंयोगो बुधैर्योनिः प्रकीर्तिता ।
नवोत्थानवतां सेयं न सम्भवसहा स्मृता ॥ ३४ ॥

भूतपञ्चकसंयोगाद् देहा सर्वे समुत्थिताः ।
अयोनिजा योनिजा वा देवादीनां समन्ततः ॥ ३५ ॥

शुक्रशोणितयोश्चापि भूतकार्यत्वमिष्यते ।
अन्नपानादितः शुक्रं शोणितं च हि जायते ॥ ३६ ॥

कोऽपि देशस्तथा कालो भूतो यत्र तु पञ्चकम् ।
पञ्चानां देहभावेऽभूत् समर्थं शुक्रतां विना ॥ ३७ ॥

देशकालवशेनेह तेषामेव न वा स्थितिः ।
वस्तूनां दृश्यते सर्वैर्भूतानां किं न युज्यते ॥ ३८ ॥

आदिसर्गे तु कालोऽन्योऽन्योऽद्यापि च संस्थितः ।
देशोऽन्यस्मिश्च ते भूता मुनयः सृष्टिकारकाः ॥ ३९ ॥

केन तेऽवधि(धृ)ताः पूर्वमिति चेच्छृणु निश्चयम् ।
प्रगल्भा एव ते जाताः कारणेभ्यः कृतं बहु ॥ ४० ॥

कथमित्यवकाशोऽस्य चोद्यस्य नैव विद्यते।
दृष्टसाधनमात्रार्थं प्रक्रिया हि बुधैः स्मृता ॥ ४१ ॥

परमार्थेन यद् येन भावेनाभाति तत् तथा।
भवेदाभानमात्रस्य साम्राज्यं पूर्वमीरितम् ॥ ४२ ॥

अत्राधिकारहीनानामर्थे याः प्रक्रियाः स्थिताः।
तासामेवात्र लेशेन पोषणं तु मया कृतम् ॥ ४३ ॥

अद्यापि क्षुद्रजन्तूनां केषाञ्चिद् स्फुटमीक्षते।
भूतेभ्योऽत्र परं जन्म शुक्राऽऽसादनं विना ॥ ४४ ॥

तिर्यञ्चः पक्षिणोऽप्येव वृक्षाद्याः पर्वतास्तथा।
देशकालवशेनैव भूतेभ्योऽत्र समुत्थिताः ॥ ४५ ॥

कुत्रापि काले सामर्थ्यं भूमेरासीद् विशेषतः।
विना बीजं समुत्पादे वृक्षाणां बीजधारिणाम् ॥ ४६ ॥

भूमिर्बीजं तदेका स्यात् सर्ववृक्षसमुद्भवे।
नवीनं बीजमस्यास्तु सारो भागस्तरौ स्थितः ॥ ४७ ॥

ततः परं तु ते वृक्षा जाता बीजान्निजात् स्फुटम्।
जायन्ते च न दृष्टेऽत्र कापि संशयकल्पना ॥ ४८ ॥

अदृष्टमपि दृष्टं स्यात् कार्यद्वारेण निश्चितम्।
कारणं हि विना कार्यं न जातु परिदृश्यते ॥ ४९ ॥

अद्यापि शुद्धाद् भूम्यङ्कतृणादि जायते स्फुटम्।
खातोद्धृतादपि मृदः पिण्डात् तु जायते यतः ॥ ५० ॥

ततः परतृणं तच्च जायते बीजतः स्वकात्।
तृणं च वृक्षपक्षेऽस्ति स्थितं काऽत्र विकल्पना ॥ ५१ ॥

न्यायेनानेन बीजत्वं परं परशिवे विभौ।
विश्राम्यत्येव बीजानामपि बीजतया स्थितेः ॥ ५२ ॥

अनादिभावकथनं कुशकाशावलम्बनम्।
बीजाङ्कुरकथायां तु भेदापातात् कृतं बहु ॥ ५३ ॥

अनादेः सर्वबीजात् तु सर्वे भावाः समन्ततः।
स्वबीजसहिता जाता इति सिद्धान्तसंग्रहः ॥ ५४ ॥

अनादित्वे तु बीजस्य वाऽङ्कुरस्य स्फुटं भवेत्।
भेदापातो हि बीजानामङ्कुराणां च चित्रता ॥ ५५ ॥

भूतपञ्चकजन्मेह निर्णीतो विस्तरात् पुरा।
तत्कार्यं भाववृन्दं तु साक्षाद् वा द्वारतोऽपि वा ॥ ५६ ॥

नवोत्थानमतो युक्तं मुनीनामादिभावतः।
सृष्टिकर्तृत्वमेषां तु शास्त्रेषूक्तं विशेषतः ॥ ५७ ॥

नवोत्थितानामुत्थानं पूर्वं कर्मं स्मृतं बुधैः।
शुभत्वमशुभत्वं वा तस्य वक्तुं न शक्यते ॥ ५८ ॥

शुभाशुभं फलं तस्याऽऽकस्मिकं संस्मृतं बुधैः।
नवोत्थितं यतः कर्म न शुभं नापि वाऽशुभम् ॥ ५९ ॥

य उत्थितो यथा सोऽयं तथैवाग्रे भविष्यति।
भावयुक्तं तदुत्थानं ततः संकीर्तितं बुधैः ॥ ६० ॥

वैषम्यकारिता याऽत्र शिवस्य शङ्क्यते परैः।
सा न युक्ता यतः क्रीडामात्रं तस्यैव तत् स्मृतम् ॥ ६१ ॥

स्वात्मरूपे तु वैषम्यं जीववर्गे शिवः स्वयम्।
कुर्वन्नपि न चोद्यानां विषयीभवितुं क्षमः ॥ ६२ ॥

वैषम्यचर्चिता वेयं मातॄणां दृष्टिदोषतः।
मातॄणामथ दृष्टेश्च वैषम्यं नैव सत्यतः ॥ ६३ ॥

नवोत्थितेभ्यस्तेभ्योऽथ द्वन्द्वभावेन संस्थितेः।
द्वन्द्वरूपस्तथैवान्ये सञ्जाता इति निश्चयः ॥ ६४ ॥

तेभ्योऽप्यन्ये तथा जाता जायन्तेऽथ च कोटिशः।
जनिष्यन्ति च कोटीनां कोट्यो द्वन्द्वभावतः ॥ ६५ ॥

द्वन्द्वयोगोऽत्र केषाञ्चित् स्फुटमेवास्ति बाह्यगः।
केषाञ्चिद् दर्शनायोग्य इत्युक्तं नोच्यते पुनः ॥ ६६ ॥

देहारम्भकभूतानां सारभो(भाग्) योऽत्र शुक्रताम्।
याति यस्मात् प्रजायन्ते देहाद्यन्ये यथोत्तरम् ॥ ६७ ॥

तच्छुक्रं जीवरूपं स्याद् भूतसारतया स्थितेः।
भूतानि हि चितो रूपं जीवोऽयं तत्कणः स्मृतः ॥ ६८ ॥

सत्तामात्रेण भूतेषु विद्यते चिन्न संसृता।
शुक्रे प्रसारमायाति भूतसारतया स्थिते ॥ ६९ ॥

गर्भेऽथ कालवशतो धातुसंस्थानयोगतः।
चेष्टायाः करणे शक्ता भवन्त्येव न संशयः ॥ ७० ॥

सजीवमेव शुक्रं तद् गर्भे पतति योषिताम् ।
न जीवस्य प्रवेशोऽत्र शङ्कनीयोऽस्ति लेशतः ॥ ७१ ॥

अङ्गचालनमात्रेण या प्रवेशस्य कल्पना ।
सा न निर्जीवगर्भस्य सद्यः पातो यतः स्मृतः ॥ ७२ ॥

गर्भस्य स्मरणं यत्तु प्रोक्तं शास्त्रेषु तत्त्वतः ।
भूतस्य भाविनश्चैतत् प्रकाशामर्शजृम्भणम् ॥ ७३ ॥

दृष्टान्तोऽण्डरसोऽस्त्यत्र तोयवज्जाड्यदूषितः ।
कालेन चेतनीभावं गच्छन्नेव स्वभावतः ॥ ७४ ॥

गर्भेऽङ्गभावरचना कथं तत्रोपजायते ।
इति चेन्नात्र प्रश्नस्ते स्वभावे योग्यतासहः ॥ ७५ ॥

बहिर्गतस्य बालस्य भवन्ति रचनाः कथम् ।
गर्भे स्वभावजृम्भासु केयं चोद्यस्य कल्पना ॥ ७६ ॥

स्वभाववादः सोऽयं स्यादस्तु का हानिरुत्थिता ।
स्वं हि प्रोक्तं परं वस्तु भावस्तस्य स्वयं स्थितिः ॥ ७७ ॥

परं वस्तु परं स्वेन सर्वभावेन तिष्ठति ।
जलं तरङ्गभावेन यथेति बहुना कृतम् ॥ ७८ ॥

सस्याङ्गेभ्यो विनिर्यान्ति मक्षिका रचनायुताः ।
शुक्राज्जातेषु ते कोऽयं संगाय रचनापदः ॥ ७९ ॥

अहो जनस्य मोहोऽयं स्वारम्भकतया स्थिते ।
भूतानां तु गणे जाड्यभारोपयति यद् भ्रमात् ॥ ८० ॥

या त्वस्य चेतनाऽस्त्यन्तर्विलक्षणतया स्थिता ।
सा भूतसन्निवेशोत्था चितः क्षुब्धतया स्थितिः ॥ ८१ ॥

एतामपेक्ष्य चार्वाकैर्देहधर्मत्वमुच्यते ।
चितश्चेतनरूपाया महादृष्टियुतैः स्फुटम् ॥ ८२ ॥

संज्ञा तु चेतना प्रोक्ता सा देहे सति युज्यते ।
प्रेत्य देहोऽस्ति नैवास्य सा कथं घटते वद ॥ ८३ ॥

शुद्धा चिद् या तु साऽस्त्येव शिलायामपि सारतः ।
तदारब्धमिदं सर्वं रसनेव महद्घनम् ॥ ८४ ॥

चेतना वासनाबोधः शुद्धचिन्मलरूपकः ।
तस्या अभावे चर्चा का परलोकस्य कथ्यताम् ॥ ८५ ॥

मृतिरस्या विनाशः स्यान्नास्य देहस्य तत्त्वतः ।
देहोऽयं वासनाकायं तत्सत्त्वे क्व नु गच्छति ॥ ८६ ॥

मृता न चेद् वासनाऽत्र चेतनामात्ररूपिणी ।
मृतः कोऽत्र न जानेऽहं जीवो हि वासनामयः ॥ ८७ ॥

शुद्धा चिद् यन्न तैः स्पृष्टा तदनिर्वाच्यतावशात् ।
वासनाया विनाशे तु तत्स्पर्शः क्व नु गच्छति ॥ ८८ ॥

"यावज्जीवं सुखं जीवेद्" इत्यादि कथनं च यत् ।
निर्वासनमवस्थानं तदेतत् कथितं तु तैः ॥ ८९ ॥

उन्मार्गगमनं यत्तु तत्र लेशेन कीर्तितम् ।
सा दुष्टानां कल्पनावत् तृष्णाग्रस्ततया स्थितेः ॥ ९० ॥

प्रसक्तानुप्रसक्त्याऽलं शुद्धा चित् सर्वगा मता ।
न परं चेतनेष्वेव तत्सत्ताकथनं शुभम् ॥ ९१ ॥

देशः कालस्तथा द्रव्यं धर्माधर्मार्जितं स्फुटम् ।
स्त्रीपुंसयोः स्वभावश्च हेतुर्बीजविभेदने ॥ ९२ ॥

स्त्रीपुंसयोः स्वभावोऽपि स्फुटं भिन्नतया स्थितः ।
प्रतिक्षणं स्वभावो हि दशारूपः स्मृतो बुधैः ॥ ९३ ॥

भ्रातॄणामत एवेह स्वभावो भेदभाग् भवेत् ।
एककारणतायां च नात्र कोऽप्येव संशयः ॥ ९४ ॥

मुखसाम्यं च नैवातः कस्यापि केनचित् समम् ।
भूतानां भाविनां मध्ये स्थितानामेव लेशतः ॥ ९५ ॥

संस्कारोऽत्र यथा लग्नो बीजेऽयं शोणितेऽपि वा ।
मातापित्रोस्तथा पुत्रः स्वं कर्माग्रे करिष्यति ॥ ९६ ॥

पूर्वं कर्म तु तस्येदं बीजं संस्काररूपकम् !
पितुरागतमेवास्ति पितुर्हि पूर्वजन्मता ॥ ९७ ॥

तद् यथैवोत्थितो जन्तुरादिसर्गे परात् पदात् ।
पितुर्वा बीजभावेन तथा कर्म करिष्यति ॥ ९८ ॥

इच्छानुसारं सर्वे हि कर्म कुर्वन्ति मानवाः ।
उत्थानाव(नु)गुणा सेच्छा वैषम्यं नान्यथा भवेत् ॥ ९९ ॥

शास्त्रादौ नियमो यस्तु स पथो दर्शनं परम् ।
अनुष्ठाने कर्मणस्तु स्वेच्छामात्रं निबन्धनम् ॥ १०० ॥

यस्येच्छा यत्र सोऽवश्यं तत् कुर्यादनियन्त्रितः।
कुर्वंस्तत्फलमाप्नोति शुभं वा यदि वाऽशुभम् ॥ १०१ ॥

पौरुषं च प्रमाणं स्यात् स्वेच्छामात्रात् समुत्थितम्।
येनाशुभं नाशयन्ति धीमन्तः पौर्वकालिकम् ॥ १०२ ॥

भव्ये कर्मगणे भव्यो यततेऽत्र निजेच्छया।
अभव्येऽभव्य इत्येवं सर्वशास्त्रार्थसंग्रहः ॥ १०३ ॥

अशुभाया वासनाया नाशने ये रताः स्वयम्।
ते भव्या इतरेऽभव्या क्रूरकर्मसु संस्थिताः ॥ १०४ ॥

वासनैव स्मृतं पूर्वं कर्म पूर्वैर्मनीषिभिः।
कर्मणो लेपभावेन स्थितत्वात् स्वात्मनि स्फुटम् ॥ १०५ ॥

बीजभावे तु सा लीना जातस्याथ भवेत् स्फुटा।
कार्यद्वारा स्फुटं धर्माधर्मभावेन संस्थिता ॥ १०६ ॥

पुण्यस्य कर्मणो लेपो धर्म इत्यभिधीयते।
फलं तस्य शुभं कर्म सुखं च कीर्तितं बुधैः ॥ १०७ ॥

पापस्य कर्मणो लेपोऽधर्म इत्युच्यते बुधैः।
फलं तस्याशुभं कर्म दुःखं च परिकीर्तितम् ॥ १०८ ॥

यथा पुष्पस्य गन्धोऽत्र मुकुलीभावसेविनः।
स्फुटो नास्त्येव बीजत्वे वासनेयं तथा नृणाम् ॥ १०९ ॥

विकासे यस्य यो गन्धः स तस्मान्निर्गमिष्यति।
यथा तथैव जातस्य स्वेच्छा स्फुरति वस्तुषु ॥ ११० ॥

नात्र यत्नोऽस्ति कस्यापि पर्याप्तो यद्यपि स्फुटम्।
तथापि यत्नः कार्योऽत्र शुभेच्छास्फारणे नृभिः ॥ १११ ॥

गूढो भस्मचयेऽप्यग्निकणोऽसन्निव लक्ष्यते।
सोऽन्विष्टोऽथ स्फुटीभूतः सत्त्वेन परिचर्य्यते ॥ ११२ ॥

मुखश्वासेन सोऽयं तु वर्धितोऽथ शनैः शनैः।
वृद्धिं यातो भवत्येव तृणकाष्ठादियोजनात् ॥ ११३ ॥

सर्वथा नास(श)ने तस्या वैमुख्यं शास्त्रतस्तथा।
सद्गुरोश्च स्मृतं चिह्नं बुधैः शास्त्रार्थपारगैः ॥ ११४ ॥

साम्मुख्यं भजते यस्तु शास्त्रादौ येन तेन वा।
तच्चित्ते वासनाऽस्त्येव शुभेति बहुना कृतम् ॥ ११५ ॥

येषां स्वभावसिद्धाऽस्ति वासनेयं शुभा हृदि।
दुर्लभास्ते जना लोके भवेयुः शान्तचेतसः॥ ११६॥

वासना चेच्छुभा पूर्वं कृतं कर्म शुभं भवेत्।
नो चेदशुभमेवेति सर्वशास्त्रार्थसंग्रहः॥ ११७॥

शुभत्वं वासनायास्तच्छुभेच्छा कार्यसत्तया।
ज्ञायते साऽपि विज्ञेया शुभे कर्मणि सङ्गतेः॥ ११८॥

कर्मणः शुभता चेयं या शास्त्रे विहिता स्थितिः।
परिग्रहः सज्जनैश्च देशाद्यैश्चाविरुद्धता॥ ११९॥

अशुभाया वासनाया नाशे यत्नः शुभावहः।
नष्टा चेद्धि महाँल्लाभो न नष्टा चेत् तु का क्षतिः॥ १२०॥

क्षतिं पश्यन्ति ये त्वत्र भोगत्यागादियत्नतः।
तदग्रे मौनमेवास्ति युक्तं नो वाग्मिता वृथा॥ १२१॥

कर्म तत् त्रिविधं प्रोक्तं बुधैः शास्त्रार्थपारगैः।
प्रारब्धं सञ्चितं चेति क्रियमाणं तथैव च॥ १२२॥

प्रारब्धं पूर्वकालीनं देहोऽयं जायते यतः।
फलोद्युक्तं च कर्मात्र प्रोच्यते शास्त्रनिश्चितैः॥ १२३॥

सञ्चितं सुप्तमेवास्ति वासनाभावतः स्थितेः।
पुराणं वा नवीनं वा स्वकार्योन्मुखतां गतम्॥ १२४॥

क्रियमाणं साध्यमानं वासनापुष्टतावहम्।
स्वकार्याद् विमुखं तावद् भाविकाले फलप्रदम्॥ १२५॥

प्रारब्धं तत्र नो नश्येद् योगिनामपि यत्नतः।
हस्ताद् गतं शरं को हि प्रत्यावर्तयितुं क्षमः॥ १२६॥

योगिता चापि देहेन योगिनां जायते स्फुटम्।
देहारम्भकनाशे तत् तेषां का शक्तता भवेत्॥ १२७॥

फलोद्युक्तं च कर्मापि देहवैवश्यसाधनम्।
देहेनाव्यभिचारित्वात् कथं नाशं व्रजेद् वद॥ १२८॥

योगिदेहेषु तेनात्र दृष्टा नानाविधा स्थितिः।
न्यायेन मूढदेहानां मूढानां क्षुब्धताऽत्र तु॥ १२९॥

सञ्चितं वासनारूपं योगिनां नाशितं भवेत्।
अन्यथा योगिता कैषां विवशानां विमूढवत्॥ १३०॥

योगी हि वासनोच्छेदमात्रे केवलमुद्यतः ।
भवेदेवाथवा तस्याः शुभीकरणकर्मणि ॥ १३१ ॥

शुभीकरणमेतस्यास्तुच्छीकरणमुच्यते ।
तुच्छीकृता वासना स्याद् भ्रष्टबीजोपमा स्थिता ॥ १३२ ॥
क्रियमाणं नु कर्मैषां बालाङ्गोच्चालनात्मकम् ।
फलेच्छारहितत्वेन फलाकाङ्क्षा हि बन्धनम् ॥ १३३ ॥

[1]"त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः" ॥ १३४ ॥

इत्युक्तं श्रीभगवता गीताशास्त्रेऽर्जुनं प्रति ।
तस्मात् फलेच्छारहितं कर्म नो कर्म संस्मृतम् ॥ १३५ ॥
फलेच्छाविरहस्तेषां तृप्तत्वेनैव संस्मृतः ।
अन्यथा तृप्तता का स्यात् फलाकाङ्क्षा हि तृद् स्मृता ॥ १३६ ॥
तृप्तत्वं च स्थितं तेषां प्र[ति]वस्तु परिग्रहात् ।
परिग्रहश्च सम्प्रोक्तः स्वात्मभावेन भावनम् ॥ १३७ ॥
योगिनां वासनारूपं सञ्चितं कर्म नास्त्यलम् ।
सत्त्वेऽपि भ्रष्टबीजाभं नाङ्कुरोत्पादने क्षमम् ॥ १३८ ॥

क्रियमाणं च तुच्छं स्यात् फलेच्छाविरहात् स्फुटम् ।
प्रारब्धं चेह पर्यन्तमेवेति शास्त्रनिश्चयः ॥ १३९ ॥

योगिनां युगपत्कर्म भोगीकृतिरिहोच्यते ।
यैस्तेन जिज्ञा ज्ञानाग्रे कर्म न स्थातुमर्हति ॥ १४० ॥

[2]"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा" ।
एवं ह्युक्तं भगवता ज्ञानाग्रे कर्मसंश्रयः ॥ १४१ ॥
कर्मभोगाद् वासनैव कर्मणो दृढतामियात् ।
चित्ते नष्टं तु तत्कर्म वासनां नैव साधयेत् ॥ १४२ ॥
प्रारब्धकर्मापेक्षा वा भोगीकृतिरिहोच्यते ।
योगिनां कर्मणां तेन नास्ति काऽपि विरुध्य(द्ध)ता ॥ १४३ ॥

अज्ञानामपि प्रारब्धं देहोत्पादकरं स्मृतम् ।
शुभाशुभप्रदं चैव परं वैवश्यकारणम् ॥ १४४ ॥
सञ्चितं वासनारूपं तेषां हृदि दृढं स्थितम् ।
अग्रे फलसमुत्पादकारणं नाधुनैव तत् ॥ १४५ ॥

---

१. गीता ४।२०   २. गीता ४।३७

क्रियमाणं च तत्रास्ति वासनाफलसाधकम् ।
वासना द्विविधा सेयं धर्माधर्मतया स्फुटम् ॥ १४६ ॥

क्रियमाणं च कर्मेदं द्विविधं संस्मृतं बुधैः ।
एकं चित्तविशुद्ध्यर्थं जपहोमादिरूपकम् ॥ १४७ ॥

द्वितीयं देहयात्रार्थं व्यवहारमयं स्थितम् ।
शास्त्रानुसारतः कार्यं द्वयमेतदसंशयम् ॥ १४८ ॥

मन्त्रोच्चारे जपः प्रोक्तः संख्यापूर्वो विचक्षणैः ।
मन्त्रार्थस्य परामर्शोऽथ तद्दैवतात्मता ॥ १४९ ॥

द्रव्यत्यागस्तु होमोऽग्नौ देवतोद्देशतो भवेत् ।
बाह्यचर्चा त्विह प्रोक्ता नान्तरीति कृतं बहु ॥ १५० ॥

आदिशब्देन सर्वेषां कर्मणां ग्रहणं भवेत् ।
चित्तशोधनहेतूनां पाठार्चादिस्वरूपिणाम् ॥ १५१ ॥

कर्म तच्चित्तशुद्ध्यर्थं सर्वमेवेह तत्त्वतः ।
चित्तशुद्धिस्तु सम्प्रोक्ता संकल्पास्फुरणं बुधैः ॥ १५२ ॥

साधुकर्मसु लग्ना हि कालेनासादयन्त्यलम् ।
चित्ते स्वे शुद्धिमेवेह संकल्पास्फूर्तिरूपिणीम् ॥ १५३ ॥

तदप्राप्तौ तु तेषां तत् कर्म निष्फलमुच्यते ।
स्वर्गादेः फलभावोक्तिरन्याभिप्रायनिष्ठिता ॥ १५४ ॥

तथापि कर्म तत्कार्यं येन तेन यथा तथा ।
तदुक्तं श्रीवशिष्ठेन "मार्गस्थो वा न सीदति" ॥ १५५ ॥

चित्तशुद्धिनिमित्तं च कर्म तत् त्रिविधं विदुः ।
नित्यं नैमित्तिकं काम्यं लक्षणं तत्र मे शृणु ॥ १५६ ॥

अकृतौ प्रतिवायस्योत्पादकं नित्यमुच्यते ।
तच्च सन्ध्यावन्दनादि स्मृतिशास्त्रे प्रकीर्तितम् ॥ १५७ ॥

निमित्तादागतं सद्भिर्नैमित्तिकमुदाहृतम् ।
सूर्योपरागशुद्ध्यादि तच्च विघ्नोपशान्तये ॥ १५८ ॥

काम्यं पुष्टिकरं प्रोक्तं पुष्टिकामैरनुष्ठितम् ।
शान्तिकं चापि तत्प्रोक्तं शान्तिकामैरनुष्ठितम् ॥ १५९ ॥

तत्र काम्यस्य चर्चा नो लेशतो योगिषु स्मृता ।
पुष्टिकाङ्क्षाविहीनत्वात् तृप्तत्वेनैव संस्थितेः ॥ १६० ॥

मूर्खाणामपि काम्यं तत् प्रोक्तं कार्यतया बुधैः।
चित्तशुद्ध्यर्थमेवेह परमार्थेन कोविदैः॥ १६१॥

पुष्टेः प्राप्तिस्तु या तत्र सम्प्रोक्ता लोभनार्थतः।
मूर्खा लोभं विना यन्नो प्रवृत्तिं कुर्वते सदा॥ १६२॥

तिक्तौषधे सिता तज्ज्ञैः क्षिप्यते लोभनार्थतः।
आर्तस्य दोषकारित्वेऽपि च लेशेन सुस्फुटम्॥ १६३॥

नित्यं नैमित्तिकं चापि कर्म कुर्वन्ति योगिनः।
कर्तव्यमिति बुद्ध्यैव न तु लोभेन जातुचित्॥ १६४॥

न कुर्वन्ति तु ये मूढा योगितामददूषिताः।
मूढेभ्योऽपि स्मृता मूढास्त एतेऽलं महाबुधैः॥ १६५॥

भोजनादेस्तु ये तज्ज्ञाः प्राणस्पन्दात् तथैव च।
विमुखाः स्युस्त एते मा कुर्वन्तु कर्म चाखिलम्॥ १६६॥

भोजनादौ प्रवृत्तास्तु सन्ध्यावन्दनपूर्वकम्।
कर्म कुर्वन्तु का हानिर्निजशास्त्रानुसारतः॥ १६७॥

लोकानां सङ्ग्रहं चापि पश्यन्तो योगिनः स्वयम्।
कर्म कुर्वन्ति न ह्येते स्वार्थमात्रैकनिष्ठिताः॥ १६८॥

शैथिल्यं यत्तु सर्वत्र योगिनां सा दशा परा।
न कर्माकरणं तद्धि न संभवसहं स्मृतम्॥ १६९॥

विना कर्म तु मूढाः स्युरुन्मार्गनिरता भृशम्।
अन्यथा कर्मसोपानं न कुर्युर्दयया बुधाः॥ १७०॥

भोगादौ या दृढा प्रीतिः शैथिल्यं कार्यकर्मसु।
यश्च तत् स्यान्महादोषजृम्भितं मूढबुद्धिषु॥ १७१॥

कर्महीनं त्यजन्त्येते बान्धवा धर्मवृत्तयः।
न तत्त्यागं च मूढोऽयं सहते नीचतावशात्॥ १७२॥

यथा तथा कर्म कार्यं कर्तव्यं बुद्धिसंयुतैः।
बाह्याचारो हि देहान्तं त्यक्तुं शक्यो न जातुचित्॥ १७३॥

बहु चेच्छक्यते नैव कर्तुं त्वावेशयोगतः।
तथापि लेशतः कार्यमिति शास्त्रेषु निश्चयः॥ १७४॥

ज्ञानहेतुश्च कर्मास्ति चित्तशुद्धिविधानतः।
शुद्धे चित्ते हि विज्ञानं संक्रान्तिं भजते क्षणात्॥ १७५॥

ज्ञानं च परताज्ञानं सर्वभावेषु संस्मृतम् ।
न ज्ञानं नीलपीतादिज्ञानमज्ञानजृम्भितम् ॥ १७६ ॥

विपरीतं बुधैर्ज्ञानमज्ञानमिति कीर्तितम् ।
नञो विपर्यये वृत्तेः स्वभावादेव नान्यतः ॥ १७७ ॥

नीलादिकं हि चेत्यं स्यात् पूर्णचित्तत्वजृम्भणम् ।
अपूर्णनीलताज्ञानं तत्राज्ञानं प्रकीर्तितम् ॥ १७८ ॥

ज्ञानाभावोऽज्ञानमिति मूर्खाणां तु विकल्पना ।
ज्ञानाभावे हि केयं स्यान्नीलादेः पुरतः स्फुरा ॥ १७९ ॥

शुक्तौ रजतविज्ञानमज्ञानं परिकीर्तितम् ।
ज्ञानाभावे तु का स्फूर्ती रजतस्य न विद्महे ॥ १८० ॥

ज्ञानाभावेति वाक् चैषा व्याघातेनैव दूषिता ।
ज्ञानेन रहितो मूढो किं ब्रूयात् स शिलोपमः ॥ १८१ ॥

ज्ञानी त्वज्ञानमेवैतन्न जानातीति किं वदेत् ।
जानन् वा ज्ञानयुक्तोऽसौ कथमज्ञानवान् भवेत् ॥ १८२ ॥
प्रकल्प्य कथनं यत् तत् पूर्वानुभवहेतुकम् ।
अज्ञानानुभवो योऽयं स युक्तो नेति साधितम् ॥ १८३ ॥

विपरीतं ततो ज्ञानमज्ञानमिति युक्तिमत् ।
विपरीताख्यातिवादः सोऽग्रमत्र प्रकीर्तितः ॥ १८४ ॥

असत्ख्यातिप्रवादोऽयमभावे कृतनिश्चयः ।
न युक्तो ह्यसतः ख्यातिर्न योग्या शशशृङ्गवत् ॥ १८५ ॥

कथा या शशशृङ्गस्य सा गोशृङ्गात् समुत्थिता ।
शृङ्गाभावे तु शृङ्गस्य का कथा स्याज्जगद्गता ॥ १८६ ॥

ज्ञानस्य विषयाद् भेदो न युक्तो जातुचिद् बुधाः ।
असत्ख्यातिप्रवादस्तु ज्ञानाभावस्य चर्चना ॥ १८७ ॥

विवेकाग्रहणाद् यैस्तु प्रोक्ता ख्यातिर्बुधैः स्फुटम् ।
नीलादेर्ग्रहणं तेषां विवेकेन कथं स्थितम् ॥ १८८ ॥

अविवेकेन साम्येन वस्तूनां ग्रहणं स्मृतम् ।
तन्मात्रमिह साध्यं स्यात् का कथा जगतस्तदा ॥ १८९ ॥

आत्मख्यातिप्रवादोऽपि विपरीतैव संस्मृता ।
ख्यातिरात्मा हि पूर्णं तद्भावास्त्वपूर्णतापदम् ॥ १९० ॥

अन्यथाख्यातिरप्येषा विश्रुता ख्यातिपञ्चके।
विपरीताख्यातिरेव नात्र काऽप्यस्ति कल्पना ॥ १९१ ॥

देशो भगवतो मूर्तिः क्रिया कालोऽस्य संस्मृता।
तयोर्विपर्ययः सोऽयं प्रोक्ताख्यातिविजृम्भणम् ॥ १९२ ॥

विपरीताख्यातिवादः सर्वथा सुप्रतिष्ठितः।
अज्ञानेन तु युक्ताऽत्र ज्ञानाभावत्वकल्पना ॥ १९३ ॥

तत्त्वे जगद् दृषत्पूर्णं भवेदेव न संशयः।
द्वित्रास्तु ज्ञानिनस्तत्र किं कुर्युः स्वात्मनि स्थिताः ॥ १९४ ॥

पूर्णभावेन विज्ञानं भावानां ज्ञानमित्यतः।
वैपरीत्येन विज्ञानमज्ञानं सम्भवास्पदम् ॥ १९५ ॥

शिलादीनां च नैवास्ति ज्ञानाभावोऽत्र लेशतः।
तेषां ज्ञानं स्वसत्तायां लीनमेवास्ति सर्वदा ॥ १९६ ॥

अन्यथा वृद्धिह्रासौ स्तां कथमेषां स्वके पदे।
वर्षादि वृष्टिवशतो देहानामिव भोजनात् ॥ १९७ ॥

देहोऽप्ययं शिलारूपः स्फुटमेवास्ति संस्थितः।
आन्तरं तु किमप्येव तत्त्वं ज्ञातृतया स्थितम् ॥ १९८ ॥

शिलान्तरेऽपि तत्सत्तां भजत्येव न संशयः।
किंरूपा साऽन्यथा ब्रूत सर्वमज्जा हि तत्परम् ॥ १९९ ॥

नखानां यत्र चैतन्यं स्वदेहे प्रकटस्थितम्।
बाह्ये शिला भवेत् तत्र कथं चैतन्यवर्जिता ॥ २०० ॥

धातूनां सन्निवेशेन देहेऽन्तःस्फुटता परम्।
चैतन्यस्य स्मृता सद्भिर्विजृम्भा मातृरूपिणी ॥ २०१ ॥

आदर्शे पतितं तेजः प्रसृतिं याति नो पटे।
पुर्यष्टके तथा चित् सा जृम्भते न शिलापदे ॥ २०२ ॥

स्वभावजृम्भणा येयं न सा चोद्यपदं भवेत्।
स्वेन भावः स्वभावस्य नान्यप्रेरणया यतः ॥ २०३ ॥

पुर्यष्टकं च देहेऽन्तस्तन्मात्रं पञ्चकं तथा।
मनोऽहङ्कृतिधीतत्त्वत्रयं चेति विदुर्बुधाः ॥ २०४ ॥

शुद्धा चित् तु शिलायां च सत्तामात्रेण तिष्ठति।
नो चेत् सत्ता कथं तस्याः सा हि तन्मात्ररूपिणी ॥ २०५ ॥

सत्ता हि सहजा स्फूर्तिः शुद्धचित् सैव संस्मृता ।
सा सतां मातृबुद्धौ च स्वात्मान्तश्चापि संस्थिता ॥ २०६ ॥

शिलाया योग्यता तेन कथायाः करणे भवेत् ।
सिद्धिः सामर्शने शक्ता स्फुटमेवास्ति संस्थिता ॥ २०७ ॥

मृदब्रवीच्छ्रुतिश्चेत्थं मृदादेः शक्ततां स्फुटम् ।
कथयत्येव कथने यत्नेन महता स्वयम् ॥ २०८ ॥

आमर्शनं च शब्दस्य स्मृतिरेव न संशयः ।
शब्दोच्चारे ह्यशक्तस्य का शब्दस्मृतिकल्पना ॥ २०९ ॥

चिन्मयी तच्छिला सद्भिर्वाचाला परिकीर्तिता ।
वाचालत्वं च तस्यास्तन्मौनभावेन संस्थितम् ॥ २१० ॥

वाचाल एव मौनस्य करणे शक्त उच्यते ।
मौनं वाचोनियमनं तज्जडे नोपपद्यते ॥ २११ ॥

अत्र विश्वासनिष्ठां च यातैः सह शिलापि तत् ।
कथां करोति वा श्वासमात्रं तत्समुदाहृतम् ॥ २१२ ॥

देहेभ्यो निर्गताश्चित्राः कथा अपि विचारिताः ।
शिलाभ्यो निर्गताः सन्ति तत्साम्येन स्फुटं स्थितेः ॥ २१३ ॥

सर्वेषां सर्वभावेन दृष्टेर्योगी महामतिः ।
चेतनानां कथां त्वेतां जानाति शिलया कृताम् ॥ २१४ ॥

कथाश्चात्र परामर्शः सामान्यात्मक ईरितः ।
न देशकालकलिताः प्रयोजनकथा मिथः ॥ २१५ ॥

देशकालौ योगिनो नो प्रयोजनमथापि वा ।
अतोतत्वाच्छिलादीनामपि जाड्येन संगतेः ॥ २१६ ॥

अपूर्वं रोचते मूढजनाय न तु धीमते ।
सर्वं भगवतो रूपं तन्मते हि प्रतिष्ठितम् ॥ २१७ ॥

अपूर्वो न तु सोऽयं स्यात् सर्वस्मात् पूर्वतः स्थितः ।
भगवान् सर्वभावेन स्थातुं शक्तो महेश्वरः ॥ २१८ ॥

मूढानां विमुखीभावं दूरीकर्तुं तयाः(था) कृताः ।
अपूर्वाः कल्पनास्तज्ज्ञैस्तत्र ज्ञो न विमुह्यति ॥ २१९ ॥

अपूर्वं वाऽस्तु पूर्वं वा सर्वं तस्यैव जृम्भणम् ।
समस्तात् पूर्वसिद्धस्य शिवस्य परमेष्ठिनः ॥ २२० ॥

तज्ज्ञानां विस्मयस्तस्माद् भवेन्नापूर्वदर्शने ।
महाविस्मयमग्नस्य विस्मयो नैव युक्तिमान् ॥ २२१ ॥

सर्वशक्तौ भगवति युक्ति नो याचते महान् ।
युक्त्यलाभकृतः सोऽयं विस्मयः कोऽत्र कथ्यताम् ॥ २२२ ॥

अपूर्वमिन्द्रजालं स्याद् दर्शितं लोभनिष्ठितैः ।
योगिभिर्दर्शितं त्वेतत् परं शिष्यानुकम्पया ॥ २२३ ॥

क्षुद्रमन्त्रादिवशतो द्रव्यादिवशतस्तथा ।
अपूर्वदर्शने शक्ता भवन्त्येव नरा भुवि ॥ २२४ ॥

इन्द्रजालं जगत् तज्ज्ञो तत्रान्यदिन्द्रजालकम् ।
दृष्टं नो विवशो भावं नयत्येनमिहाशयः ॥ २२५ ॥

यद् यथाऽस्ति तथैवैतत् परभावेन संस्थितम् ।
तज्ज्ञदृष्ट्या ततोऽपूर्वं किमर्थं प्रार्थयेदसौ ॥ २२६ ॥

योपेक्षा सर्वभावे तु स्वभावेनैव संस्थिता ।
सेयं योगिदशा प्रोक्ता नापूर्वदर्शने रतिः ॥ २२७ ॥

प्रसक्तानुप्रसक्त्याऽलं शुद्धे चित्ते निरर्गलम् ।
संक्रामेज्ज्ञानतत्त्वं तु नान्यत्रेति विनिश्चयः ॥ २२८ ॥

कर्मणा चित्तशुद्धिः स्याच्छास्त्रोक्तेनैव निश्चितम् ।
स्वबुद्धया साधितं कर्म न कर्मेति विदुर्बुधाः ॥ २२९ ॥

पूर्वैर्दयालुभिः कर्म साधितं चित्तशोधकम् ।
हित्वाऽन्यसाधने सक्तो यस्तं जातु न संस्पृशेत् ॥ २३० ॥

गुरुः शास्त्रानुसारेणोपदेष्टा गुरुरुच्यते ।
नो चेत् स वञ्चकः प्रोक्तो मूढो वाऽथ महाजनैः ॥ २३१ ॥

देशकालादि संप्रेक्ष्य गुरुभिर्यदि लेशतः ।
अन्यथाऽप्युपदिष्टं स्यात् तत्कार्यं यत्नतो बुधैः ॥ २३२ ॥

कर्मणो विमुखीभावं कर्तुं यो गुरुरुद्यतः ।
शिष्यस्य न गुरुः सोऽयं वञ्चकः स उदाहृतः ॥ २३३ ॥

कर्मसूक्तो जपः श्रेष्ठो मन्त्रस्य गुरुणा स्वयम् ।
दत्तस्य स हि सम्प्रोक्तः सद्य एव फलप्रदः ॥ २३४ ॥

मन्त्रस्तत्र प्रयोज्यो यः सोऽपि श्रेष्ठो बुधैः स्मृतः ।
परवाचकतामात्रनिष्ठितो नान्यवाचकः ॥ २३५ ॥

सु(स्व)दर्शनानुसारेण मन्त्रः सेव्यो बुधैः सदा।
परवाचकतानिष्ठो नान्यदर्शननिष्ठितः ॥ २३६ ॥

फलैकत्वेऽप्यनुष्ठानं भिन्नमेव स्मृतं बुधैः।
स्वदर्शनानुसृत्यैव मन्त्रो जप्यो मतो बुधैः ॥ २३७ ॥

ब्राह्मणे ब्रह्मगायत्री महामन्त्र उदाहृतः।
प्रौढस्य तत्र श्रीमन्त्रराजः परपदाप्तिकृत् ॥ २३८ ॥

वैश्यस्य क्षत्रियस्यापि सेयं निष्ठा बुधैः स्मृता।
संस्कारे तु विभेदोऽस्ति स वीक्ष्यः स्मृतिशास्त्रतः ।. २३९ ॥

शूद्राणां स्मृतिशास्त्रोक्तो मन्त्रो सेव्यो न वेदजः।
प्रौढत्वे मन्त्रराजस्तु जप्य एव न संशयः ॥ २४० ॥
स्त्रीणां चापि व्यवस्था स्याच्छूद्रवन्नात्र संशयः।
भर्तुः सेवा तु तासां स्याद् भक्त्या कर्म महत्तरम् ॥ २४१ ॥

बाह्यानां बाह्यशास्त्रोक्ता मन्त्राः सेव्या यथायथम्।
अन्यस्य नान्यधर्मोऽस्ति रतिः श्रेयस्करी यतः ॥ २४२ ॥

स्वयं प्रकल्प्य मन्त्रं यः स्वशिष्याय प्रयच्छति।
स वञ्चकोऽथ तच्छिष्यो मूढान्मूढतरः स्मृतः ॥ २४३ ॥

मन्त्रोच्चारः पुरा प्रोक्तः प्राणसाम्येन सिद्धिदः।
सिद्धिस्तत्र विकल्पानामस्फूर्तिर्हृदि कीर्तिता ॥ २४४ ॥
शब्दे लीनः समुच्चारद्वारा मन्त्रे सुशान्तताम्।
याति मन्त्रान्त्यकोटौ तु न किञ्चिद्रूपतां गतः ॥ २४५ ॥

तत्र प्रौढोऽथ मन्त्रार्थपरामर्शनतत्परः।
जाड्यं त्यक्त्वा चिदेकत्वं याति स्वात्मनि निष्ठितेः ॥ २४६ ॥

मालाया विस्मृतिः सेयं न निद्रा जाड्यदूषिता।
मन्त्रवाच्यस्य तस्यास्य मालायां किं प्रयोजनम् ॥ २४७ ॥
अर्घपात्रादिकं मन्त्रे सोऽथ मन्त्रिणि लीयते।
मन्त्री तु लीयते यत्र तत्पदं किमपि स्थितम् ॥ २४८ ॥
जपः पार्यन्तिकः प्रोक्तः परतत्त्वावमर्शनम्।
यदा तदा यत्र तत्र तदुक्तं परमेष्ठिना ॥ २४९ ॥
[1]"भूयो भूयः परे भावे भावना भाव्यते हि या।
जपः सोऽत्र स्वयत्नादौ मन्त्रात्मा जप्य ईदृशः" ॥ २५० ॥

१. विज्ञानभैरवः १४२

होमोऽपि तत्र सम्प्रोक्तो दशांशेन जपाद् बुधैः।
प्राणसाम्येन सोऽप्यत्र कार्य एव मनीषिभिः॥ २५१॥

असम्भवे जपे सक्तो भवेदेव परं यतः।
जपोऽयं परमां चित्तशुद्धिं कर्तुं क्षमः परम्॥ २५२॥

जपे सक्तोऽर्चनाद्येतदपि कुर्याद् विधानतः।
स्वाङ्गेन तेन पुष्टिं स यात्येव नात्र संशयः॥ २५३॥

अर्चनं चापि लिङ्गस्य शालिग्रामस्य वा तथा।
द्वादशारादिचक्रस्य महाफलप्रदं स्मृतम्॥ २५४॥

[1]"यज्ञानां जपयज्ञोऽहम्" इत्युक्तं विभुनापि यत्।
ततो जपसमं कर्म न भूतं न भविष्यति॥ २५५॥

सन्ध्याया वन्दने चापि जप एवास्ति सारतः।
अन्यत् तदङ्गभावेन कर्म ज्ञेयं विजानतः॥ २५६॥

भक्त्या कृतं तु यत्कर्म तत्कर्म प्रोच्यते बुधैः।
तया विहीनं कर्मैतल्लगुडैर्व्योमताडनम्॥ २५७॥

श्राद्धस्य निर्णयः पूर्वं कृत एव विशेषतः।
सर्वं तु कर्म तत्कार्यं स्मृतिशास्त्रानुसारतः॥ २५८॥

सर्वं कर्म बुधैः कार्यं यथा सम्भवया दिशा।
जपो ह्येवाकृतः कार्यो महाशुद्धिविधायकः॥ २५९॥

युक्त्या कृतो जपश्चित्तं शोधयेन्नियतं नृणाम्।
सेयं गुरुभ्यो युक्तिस्तु मृग्या विनयपूर्वकम्॥ २६०॥

चित्तं चलति चेत् तत्र साधकस्य निजेच्छया।
चलत्वेन पुनस्तत्र भाव्यं यत्नपरेण तु॥ २६१॥

अश्वं निरोद्धुकामस्य चलत्यश्वः पुरोगतः।
न निषण्णस्य तेनास्य चलनं रोधनं स्मृतम्॥ २६२॥

रोधनीयं मनो यत्नाज्जपे यत्नवता बहु।
चलनं तस्य तज्ज्ञेयं रोधनैकफलं वचः॥ २६३॥

यत्रैव वस्तुनियमो नो याति स्वेप्सिते स्वयम्।
तत्रैव धार्यमथवा शिवभावनया बुधैः॥ २६४॥

---

१. गीता १०।२५

[1]"यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्" ॥ २६५ ॥

इत्युक्तं हि स्वयं देवेनैवेह दयया स्फुटम् ।
आत्मा हि शिव एवास्ति वस्तुभावेन संस्थितः ॥ २६६ ॥

गृहस्थस्य व्यवस्थेयं सम्यगुक्ता मयाऽखिला ।
यतीनां प्राणरोधादि युक्तमत्रास्ति सन्ततम् ॥ २६७ ॥

गृहस्थानां लेशतस्तत् कृतमस्ति हितावहम् ।
नैर्विकल्प्यं प्राणरोधाद् भवेदेव स्फुटं यतः ॥ २६८ ॥

परं जाड्यहतं तच्च ज्ञानमिश्रं तु कारयेत् ।
ज्ञानयुक्तं तु तत्प्रोक्तं श्रेष्ठाच्छ्रेष्ठतया बुधैः ॥ २६९ ॥

[2]"प्राणायामो न कर्तव्यः शरीरं येन पीड्यते" ।
एवमुक्तं पुराविद्भिर्मूढान् हेवाकिनः प्रति ॥ २७० ॥

प्राप्तप्राप्तव्यसारैश्च लोकसङ्ग्रहणार्थतः ।
यथा सम्भवया वृत्त्या कर्म कार्यं मनीषिभिः ॥ २७१ ॥

मनोनिश्चलतामात्रं साध्यमत्र यथा तथा ।
तच्च यस्य यथा सिध्येत् तत्करोतु स का क्षतिः ॥ २७२ ॥

परन्तु शास्त्रं सर्वत्र प्रमाणं न तु कल्पना ।
स्वयं कृता यतः सेयं कर्तारं स्वं विनाशयेत् ॥ २७३ ॥

ज्ञानी यती वा भवतु गृहस्थो वाऽत्र को ग्रहः ।
ज्ञानमात्रं हि सारं स्यात् तदेकं तत्र संस्थितम् ॥ २७४ ॥

अज्ञानी तु गृहस्थोऽत्र भारवाहक इष्यते ।
खर एव यतीत्वेऽथ श्वैवाज्ञानेन दूषितः ॥ २७५ ॥

खरो भारेण खिन्नः स्यात् श्वा दूरात् प्रेक्षणे रतः ।
प्रेत एवेति बुद्ध्वाऽलं ज्ञानमात्रपरो भवेत् ॥ २७६ ॥

साक्षात् तत्प्राप्त्यभावेऽपि कर्मद्वारं समाश्रयेत् ।
स्मृतिशास्त्रेषु सम्प्रोक्तमित्यलं बहुचर्चया ॥ २७७ ॥

एवं कर्म विनिर्णीतं चित्तशुद्धिविधायकम् ।
शरीरयात्राहेतुस्तु कर्म सम्प्रोच्यतेऽधुना ॥ २७८ ॥

---

१. गीता ६।२६  २. तन्त्रालोकः ४।९१

शास्त्रेषु विहितं तज्ज्ञैर्देशकालानुसारतः।
कर्म कार्यं विना तेन न भवेद् देहसंस्थितिः॥ २७९॥

[1]"आहारार्थं कर्म कुर्यादनिन्द्यं कुर्यादाहारं प्राणसन्धारणार्थम्।
प्राणाः सन्धार्यास्तत्त्वजिज्ञासहेतोस्तत्त्वं जिज्ञास्यं येन भूयो न जन्म" ॥ २८०॥

इत्युक्तं श्रीवशिष्ठेन कर्म कार्यंतया स्फुटम्।
तद्विना जीविकासिद्धिं नैव गच्छेत् कदाचन॥ २८१॥

अनिन्द्यत्वं कर्मणस्तु शास्त्रोक्तत्वेन मुख्यतः।
गौणं तु देशकालाभ्यां विरोधाद् भवतः स्थितम्॥ २८२॥

देशकालविरुद्धं तु शास्त्रोक्तं जातु सन्त्यजेद्।
शास्त्राद्विरुद्धं ताभ्यां तु सिद्धं स्तोकेन न स्पृशेत्॥ २८३॥

नानाविधाः कल्पना हि शास्त्रे सद्भिः प्रकीर्तिताः।
देशकालानुसार्येव तन्मध्ये सारतः श्रयेत्॥ २८४॥

शास्त्राद्विरुद्धं देशादौ प्रसिद्धं नैव संश्रयेत्।
श्रितं वा मोहतः शीघ्रं त्याज्यं यत्नेन धीमता॥ २८५॥

हिंसा चौर्यं तथाऽऽसक्तिः परदारेषु मोहतः।
अपेयपानं तत्कारिसङ्गश्च दूरतस्त्यजेत्॥ २८६॥

सर्वेषां दर्शनानां हि सम्मतिरत्र सुस्फुटम्।
लोकाचारविरुद्धं च हिंसादि परिदृश्यते॥ २८७॥

देशकालवशादत्र विधिः शास्त्रेषु दृश्यते।
यद्यप्येव तथाप्यत्र वैमुख्यं हितकारकम्॥ २८८॥

अहिंसा हि परो धर्मो स्तैन्यं चाथ परस्त्रियः।
वैमुख्यं चापि मद्यादेः प्रकृतेः क्षोभकारकात्॥ २८९॥

तदेकनिष्ठसङ्गस्य त्यागश्च सुहितावहः।
सङ्गदोषासेवनाद्धि दुष्टाद् दुष्टतरः स्मृतः॥ २९०॥

सूत्रामण्यं सुरापानं यागे हिंसा पशोस्तथा।
इत्याद्युक्तं तु कामेन ग्रस्तान् प्रत्येव निश्चितम्॥ २९१॥

तत्त्वचर्चा परं येषां कार्यत्वेनास्ति निश्चिता।
प्रवृत्तिर्नात्र तेषां स्यादिति सारस्य सङ्ग्रहः॥ २९२॥

---

१. योगवासिष्ठम्।

१"त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन"।
इत्युक्तः श्रीभगवताऽयमेवार्थः स्फुटं स्वयम् ॥ २९३ ॥
त्रैगुण्यविषयत्वेन वेदानामत्र सम्मतम्।
कामात् तु विषयत्वं स्यात् परं भगवतः स्फुटम् ॥ २९४ ॥
वेदाः कर्मकलापस्य तत्तत्कामपदस्य तु।
वाचका अत्र विज्ञेया न ब्रह्मपदनिष्ठिताः ॥ २९५ ॥
निस्त्रैगुण्यपदेनात्र कामनात्याग उच्यते।
कार्यत्वेन न वेदानां त्यागोऽत्र सर्वथा स्मृतः ॥ २९६ ॥
कामनारहितं कर्म कृतं नो कृतमुच्यते।
हिंसादेस्तत्र वैमुख्यं युक्तं नो कर्मणस्ततः ॥ २९७ ॥
दयामात्रं महाधर्मः सर्वेषां हितकारणम्।
तत् त्यक्त्वा क्षुद्रधर्मेषु रतिर्नो सुसुखावहा ॥ २९८ ॥
अलं वा क्षुद्रधर्माणां नाशनेन यतो बुधैः।
अतिक्रूरदयाग्रस्तैरेवं संस्थापना कृता ॥ २९९ ॥
यागे पशोर्व्यथां दृष्ट्वा मारितस्य दयावृताः।
हिंसाया विमुखास्ते स्युरिति तद्देशना कृता ॥ ३०० ॥
तत्रापि देशकालादेर्यन्त्रणा दयया कृता।
तैः स्फुटं ह्यन्यथाऽमी स्युस्तन्मात्रैकपरायणाः ॥ ३०१ ॥
सूत्रामण्यं सुरादोषं दृष्ट्वा तस्या अमी तथा।
भवेयुर्विमुखास्तेन तत्रापि देशना कृता ॥ ३०२ ॥
एवं दोषे विधिर्यत्र क्वचनैव तु दृश्यते।
निषेधस्तत्र भङ्ग्या तु विज्ञेयः पण्डितोत्तमैः ॥ ३०३ ॥
कामनाकथनेनैव हिंसादेर्वेदशास्त्रगः।
ज्ञेयो निषेधो विद्वद्भिः कामना हि भृशं हता ॥ ३०४ ॥
कामनात्यागनिष्ठोऽयं वेदो भङ्ग्या निषेधकृत्।
हिंसादेरिति मन्तव्यं धीमद्भिः शास्त्रपारगैः ॥ ३०५ ॥
यथाकामप्रवृत्तानां शान्त्यर्थं कामनाः कृताः।
वेदेन नियमेनैता यत्र तत्र दयावता ॥ ३०६ ॥

---

१. गीता २४।५

कामिकं कर्म निर्दोषं कार्यमेव मनीषिभिः।
चित्तशुद्धिर्हि सर्वत्र फलं पूर्वं प्रसाधितम् ॥ ३०७ ॥
हिंसाधिकं(क्यं) तु तत्रैतच्चित्तक्षोभविधायकम्।
साक्षादनर्थजनकं प्रवृत्तिस्तत्र नोचिता ॥ ३०८ ॥
येषां चित्ते तु न क्षोभं जनयेल्लोभनिष्ठितेः।
अधर्मे धर्मबुद्धिं तान् धिगस्तु कुर्वतो भ्रमात् ॥ ३०९ ॥
यत्र यागेऽपि हिंसायास्त्याज्यत्वेनैव निर्णयः।
तत्र का व्यवहारे स्यात् तत्कथाऽत्यन्तदूषिता ॥ ३१० ॥
देशकालवशायातं पापं कर्म सदा त्यजेत्।
अशक्तौ प्राणिहिंसादि तत्र यत्नेन संत्यजेद् ॥ ३११ ॥
मांसस्य भक्षणं यत्तन्महादोषकरं स्मृतम्।
अनिच्छया कृतं तत्तु सामान्यदोषदं स्मृतम् ॥ ३१२ ॥
प्रयत्नेनाऽऽहृतं मांसं हिंसकत्वप्रसाधनम्।
अयत्नेन तु सम्प्राप्तं सामान्यदोषकृद् भवेत् ॥ ३१३ ॥
सामान्यदोषतोऽप्यत्र निवृत्तिः सुखदा स्मृता।
अशक्तौ तु महादोषान्निवृत्तिः सर्वथा शुभा ॥ ३१४ ॥
दोषे तु धर्मबुद्धिं ये कुर्वते लोभमोहिताः।
न तैः सङ्गं बुधः कुर्यात् स्ववञ्चनपरायणः ॥ ३१५ ॥
देशोऽत्र नैव कोऽप्यस्तु यो न दोषेण दूषितः।
शक्तौ स्वदेशदोषाच्च निवृत्तिः श्रेयसी स्मृता ॥ ३१६ ॥
धर्मबुद्धिस्तु या तत्र सेयं पातकरूपिणी।
त्यागेऽशक्तस्तु सन्तापं भजेतात्र कुकर्मणि ॥ ३१७ ॥
विगुणं सर्वथा त्याज्यं कर्म शीघ्रं मनीषिभिः।
वैगुण्यं तत्र शास्त्रेषु प्रोक्तं नानाविधं बुधैः ॥ ३१८ ॥
प्रसक्तानुप्रसक्त्यालं देहयात्राप्रसाधकम्।
व्यवहारं प्रकुर्वीत शास्त्रोक्तेनैव वर्त्मना ॥ ३१९ ॥
[1]"न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि विमुच्यते" ॥ ३२० ॥
इत्युक्तमस्ति शास्त्रेषु न्यायेनैव धनार्जनम्।
अन्यायेनागतं वित्तमन्यायेनैव गच्छति ॥ ३२१ ॥

---

१. याज्ञवल्क्यस्मृतिः ३।२०५

शुद्धा व्यवहृतिः सेव्याऽस्त्यापत्कालेऽपि संस्थितेः ।
अन्यथा मलिनं चित्तं भवेदेव न संशयः ॥ ३२२ ॥

येषां न चित्तं मालिन्यं याति निन्द्यैस्तु कर्मभिः ।
स्वभावमलिनं तेषां चित्तमस्तीति निश्चयः ॥ ३२३ ॥

मलिने मलसंस्पर्शो नैव मालिन्यकारणम् ।
शुद्धेर्लेशोऽपि तत्रास्य महामालिन्यकारकः ॥ ३२४ ॥

घनत्वे वासनाया ये नास्तिताभ्रममोहिताः ।
धिक् तान् पशूननात्मज्ञान् स्ववञ्चनपरायणान् ॥ ३२५ ॥
वासनारहितास्तज्ज्ञा विस्मृता व्यवहारतः ।
शुद्धादपि भवन्त्येव का कथा मदनस्य तु ॥ ३२६ ॥

देहयात्रार्थमेतं तु शुद्धं शास्त्रानुसारतः ।
पित्रादेरागतं कर्म कुर्वन्त्येवमनास्थया ॥ ३२७ ॥
दैवाधीनं फलं तत्र व्यवहारेऽस्त्यसंशयम् ।
शुद्धे वा मलिने वाऽपि शुद्धमेव समाचरेत् ॥ ३२८ ॥

यथा जलं जलनिधेर्वाडवे यात्यशङ्कितम् ।
त्यागाशक्ते जनेऽप्येवं प्रभावो विधिचोदितः ॥ ३२९ ॥

इच्छात्यागोऽत्र त्यागः स्यान्न बाह्यो गर्वपोषकः ।
क्षोभकश्च ततो विद्वान् नेच्छामर्थे प्रसारयेत् ॥ ३३० ॥
अनागतं न काङ्क्षेत धनं तज्ज्ञो महाशयः ।
आगतं नावमन्येत कुकार्येषु समर्पणात् ॥ ३३१ ॥

महत्यामपि काङ्क्षायां व्यवहारेऽपि कुत्सिते ।
कृतेऽपि यदि नायाति धनं दैवात् तु का गतिः ॥ ३३२ ॥
स्वयमिच्छा शुभे कार्या व्यवहारे सदा बुधैः ।
दैवस्य करणीयं यत् कर्ताऽवश्यं तदेव तत् ॥ ३३३ ॥

पौरुषं चापि न त्याज्यं शुभे कर्मणि पण्डितैः ।
तदप्यङ्गं यतः प्रोक्तं दैववत् सर्वकर्मसु ॥ ३३४ ॥
त्यागार्थं वाञ्छ्यते यत् तु तदवाञ्छनमुत्तमम् ।
त्यागः प्रोक्तस्तथा चोक्तं भारते धर्मसङ्ग्रहे ॥ ३३५ ॥
[1]"धर्मार्थं यस्य वित्तेच्छा वरं तस्य निरीहता" ।
[2]"प्रक्षालनाद्धि पङ्कस्य दूराऽदस्पर्शनं वरम्" ॥ ३३६ ॥

१. म० भा० ३।१०।१  २. म० भा० ३।२।४७

आ''''धनं तु मेधावी व्यवहारान्निजाच्छुभात् ।
कुकार्येषु न युञ्जीत महादुःखविधायिषु ॥ ३३७ ॥

यथायोगं यथाचारं कार्येषु शुभरूपिषु ।
विनियोज्यं धनं तज्ज्ञैः स्वबुद्धया शास्त्रनिष्ठया ॥ ३३८ ॥

दारिद्रये तु महद्धैर्यं कार्यमेवास्ति धीमता ।
तृष्णामात्रं हि दारिद्र्यं तत्त्यागे काऽस्य सङ्गतिः ॥ ३३९ ॥

शीतार्थं वसनं ग्राह्यं क्षुदर्थे भोजनं तथा ।
मनो विवेकतां नेयमलं भोगानुचिन्तनैः ॥ ३४० ॥

तावन्मात्रं तु सिद्धयेत भिक्षयाऽप्यतिशुद्धया ।
यावद्देहं देहिना हि जीविका विभुना कृता ॥ ३४१ ॥

तप्तं बीजं हि देहार्थं देहिनां रोहति स्फुटम् ।
तत्फलस्य विभागश्च तदैव विभुना कृतः ॥ ३४२ ॥

ब्रह्माण्डकार्ये लग्ना हि स्वयमेव तदाज्ञया ।
वातमेघादयस्तत्र का चिन्ता देहिनो मृषा ॥ ३४३ ॥

यस्य यत् प्राप्यमत्रास्ति स प्राप्नोत्येव तत् स्वयम् ।
नान्यार्थमन्यगं द्रव्यं गतं तु तस्य तत् स्मृतम् ॥ ३४४ ॥

भुक्तं च वमते जन्तुः स्वाद्यर्थे विभुना कृतम् ।
काऽत्र चिन्ता विभागे हि स्वयमेव विभू रतः ॥ ३४५ ॥

शुभेच्छापूर्वकस्तस्मात् व्यवहारः शुभो बुधैः ।
कार्य एव फलस्यात्र दाताऽस्ति भगवान् स्वयम् ॥ ३४६ ॥

कर्मेन्द्रियाणां जालं तु कर्मार्थं विभुना कृतम् ।
तेषां शक्तिस्तदावेशात् कोऽभिमानोऽत्र देहिनः ॥ ३४७ ॥

इच्छोक्तानां च तस्यैव कार्यं यद्यपि संस्थितम् ।
तथापि कर्तृता तेन जीवस्यात्र समर्पिता ॥ ३४८ ॥

स्वसामर्थ्यानुसारेण शुभं कार्यं हितेच्छुभिः ।
शास्त्रानुसारतो यस्मात् प्रमाणं तत्परं स्थितम् ॥ ३४९ ॥

सामर्थ्यं यत्र नो तत्र प्रोद्योगः शोभनः स्मृतः ।
कर्तृता नात्र दत्ता हि विभुना परमेष्ठिना ॥ ३५० ॥

सर्वं त्यक्त्वा तु यो तिष्ठेल्लोभानाकृष्टचेतनः ।
स तिष्ठतु परं त्वेतद् दुर्लभाद् दुर्लभं स्थितम् ॥ ३५१ ॥

यो वञ्चकस्तथा तिष्ठेत् किञ्चित् सम्भाव्य चेतसि ।
स स्वं वञ्चयते मूढो नो चेन्मूढः कथं भवेत् ॥ ३५२ ॥

परस्य वञ्चनं यत् तत् स्वस्यैव वञ्चनं विदुः ।
परस्य वस्तुनाशः स्यात् स्वस्य स्वात्मैव नश्यति ॥ ३५३ ॥

परस्य क्लेशकारित्वं स्वस्यैव परमार्थतः ।
आत्मा ह्येकोऽस्ति सर्वत्र देहोपाधिर्न किञ्चन ॥ ३५४ ॥

[1]"आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः" ॥ ३५५ ॥

एवमुक्तं भगवता गीतासु दयया स्वयम् ।
परत्रात्मतया दृष्टिः परो योगस्ततः स्मृतः ॥ ३५६ ॥

व्यवहारः शुभः कार्यः शुभ एव मनीषिभिः ।
दैवाधीनं फलं यस्मात् सर्वत्र परिकीर्तितम् ॥ ३५७ ॥

शुभोऽपि व्यवहारोऽत्र तथा कार्यस्तु धीमता ।
अहर्दिवं समाप्तिं तु व्रजेन्मग्नस्य नो यथा ॥ ३५८ ॥

कुटुम्बे स्वे यथौचित्यं तिष्ठेद् बुद्धिपरायणः ।
नातिसक्तो न निःस्नेहो द्वयमेतद्धि निन्दितम् ॥ ३५९ ॥

अतिसक्तस्य रागोऽत्र दोषोऽस्ति विततो महान् ।
निःस्नेहोऽपि दृषत्कल्पो नोपादेयोऽस्ति लेशतः ॥ ३६० ॥

पुत्रेणापि समं यस्य मैत्री नास्त्येव दुर्मतेः ।
अन्यैः समं भवेत् साऽस्य कथमेव विभेदिनः ॥ ३६१ ॥

अद्वैतस्य वुधैः प्रोक्ता मैत्रीलक्षणमुत्तमम् ।
तद्विहीनस्तु भेदेन ग्रस्त एव न संशयः ॥ ३६२ ॥

धनी धनव्ययाशङ्कां कृत्वा यः पीडयेन्निजम् ।
कुटुम्बं तस्य चर्चेह नास्त्येवात्यन्तलोभिनः ॥ ३६३ ॥

यथौचित्यं यथाशास्त्रं सर्वेषामनुपालनम् ।
सम्पत्तौ ज्ञानिचिह्नं स्याद् दारिद्र्ये स्थिरता परम् ॥ ३६४ ॥

शैथिल्यं व्यवहारेषु मुक्तेर्लक्षणमुत्तमम् ।
दार्ढ्यमात्रं तु बन्धः स्यात्.... .... .... .... ... ॥ ३६५ ॥

---

१. गीता ६।३२

यतीनां व्यवहारेषु नाधिकारोऽस्ति लेशतः।
भिक्षयाऽऽकाशवृत्त्या वा जीविकैषां शुभा स्मृता ॥ ३६६ ॥

ज्ञानयुक्तो यतिर्वाऽस्तु गृहस्थो वाऽत्र का भिदा।
ज्ञानमात्रं हि सारं स्याद् वर्णस्य नियमोऽपि कः ॥ ३६७ ॥

व्यवहारपराण्यत्र स्मृतिशास्त्राणि भूरिशः।
सन्त्येव सारतः किञ्चिदस्माभिः प्रकटीकृतम् ॥ ३६८ ॥

समाप्ता कर्मनिर्णीतिः सङ्ग्रहेण कृता मया।
भवत्वास्वादजननी सतां हृदयधामनि ॥ ३६९ ॥

इति श्रीमदाराध्यतमाचार्यवर्य-श्रीगुरुवरराजानकभास्करकण्ठविरचिते चित्तानुबोधाख्ये महाशास्त्रे कर्मनिर्णयिकं चतुर्दशं प्रकरणं सम्पूर्णम्। इति शिवम् ॥ १४ ॥

## पञ्चदशं प्रकरणम्

॥ ॐ नमः शिवाय गुरवे ॥

ॐ श्रीप्रकाशरूपाय परमात्मने नमः ।

ॐ श्रीविमर्शशक्तिरूपायै प्रतिभादेव्यै नमः ।

ॐ तद्द्वयसामरस्यरूपायै गुरुपादुकायै नमः ।

ॐ श्रीविघ्नहन्तृभ्यां प्राणापानस्वरूपाभ्यां गणेशवटुकाभ्यां नमः ।

ॐ पूर्वोक्तं संग्रहेणेदं कथ्यते युक्तिपूर्वकम् ।
प्रवक्तुं पुरुषो येन निश्चितोऽत्र स्फुटं भवेत् ॥ १ ॥

मङ्गलश्लोक एवात्र सूत्रत्वेन निवेदितः ।
शास्त्रे चित्तानुबोधाख्ये मयाऽस्मिन् सारवाचिनि ॥ २ ॥

प्रथमेनात्र निर्णीतो मया प्रकरणेन तु ।
निचयो विषयाणां यद्वशात् तेभ्यो विमुच्यते ॥ ३ ॥

विषयाख्यैर्महापाशैः पुरुषाः कलिताशयाः ।
भवन्ति विविधं दुःखं तत्रानाख्यं भजन्ति च ॥ ४ ॥

द्विविधा विषयाश्चैते बाह्या आभ्यन्तरास्तथा ।
नीलादयः स्मृता बाह्या आन्तरास्तु सुखादयः ॥ ५ ॥

अत्रैव लग्नाः पुरुषा देहाद् विस्मृतिमागताः ।
महाक्षोभमुपायाता भवन्त्येव न संशयः ॥ ६ ॥

भ्रमत्वमथ चिद्भावं स्वात्मत्वं वा शिवात्मताम् ।
न किञ्चिद्रूपतां वैषां निर्णीय बहुधा ततः ॥ ७ ॥

मेयतामात्रमारोप्य तेषु मातुस्ततः स्फुटम् ।
एभ्य आरोह एवात्र सम्यगुक्त्या प्रसाधितः ॥ ८ ॥

मेयं मातुर्ह्यधोदेश एव युक्तं विपर्ययः ।
न योग्योऽत्र यतो व्यक्तं मेयं मन्तुर्वशे स्थितम् ॥ ९ ॥

विषयीभावकाले तु मातुर्जाग्रत्पदाच्च्युतिः ।
भवत्येव हि जाग्रत्वं विषयित्वं बुधैः स्मृतम् ॥ १० ॥

देहादारभ्य शून्यान्तं मातॄणां निर्णयः कृतः।
द्वितीये येन देहादेर्मुक्तोऽयं पुरुषो भवेत् ॥ ११ ॥

तत्र देहैकनिष्ठस्य जाग्रत्त्वं परिकीर्तितम्।
बुद्धिनिष्ठस्य सम्प्रोक्ता स्वप्नाख्यपदगामिता ॥ १२ ॥

प्राणनिष्ठस्य तु प्रोक्ता भवेद् या सुप्तता स्फुटम्।
सुखधर्मितयाऽऽत्मा हि वेद्य एवास्य यत् स्थितः ॥ १३ ॥

शून्यनिष्ठस्यापवेद्यसुप्तियुक्तत्वमित्यलम्।
नात्माऽपि तत्र भात्येष सुप्तस्य मेयवत् स्फुटम् ॥ १४ ॥

देहादौ स्वात्मभ्रान्त्याऽयं पुरुषो दुःखभाग् भवेत्।
यथोत्तरं ततस्तस्मादारोहः शुभदः स्थितः ॥ १५ ॥

देहादेर्मेयताज्ञानादारोहः पण्डितैः स्मृतः।
चिन्मात्राख्ये पदे शून्यसाक्षिभावेन संस्थिते ॥ १६ ॥

देहादेरूर्ध्वगस्याथ चिन्मात्रस्य विनिर्णयः।
तृतीये कृत एवास्ति तुर्यावस्थास्वरूपिणः ॥ १७ ॥

तत्र माता भवेच्छुद्धो जाड्यदोषाच्च निर्गतः।
तुच्छता हि महाजाड्यं सा शून्ये केवलं भवेत् ॥ १८ ॥

चिन्मात्रे प्राप्तनिष्ठा ये ते समीपमलं गताः।
महामातुः शिवस्यास्य पूर्णीभावदशाजुषः ॥ १९ ॥

शिवाख्यो नैव माताऽतो मध्ये सन्नपि कीर्तितः।
सूत्रे पूर्णः शिवः सोऽयं चिन्मात्रं तुच्छतापदम् ॥ २० ॥

सदाशिवादेः केवात्र चर्चा युक्ता भवेद् यतः।
पूर्णताऽऽसादनस्यैता भूमिकाः पण्डितैः स्मृताः ॥ २१ ॥

चिन्मात्रं स्वात्मभूतं तच्चेत्यस्पर्शासहं परम्।
मध्यधामसु लभ्यं तन्नान्यथा सुसमाहितैः ॥ २२ ॥

चिन्मात्रमपि तुच्छं तच्छून्यकल्पं स्वरूपतः।
विश्रान्तिधामतायोग्यं भवत्येव न तत्त्वतः ॥ २३ ॥

चतुर्थे निर्णयस्तस्मात् कृतः परशिवास्पदः।
विभुशब्देन हि प्रोक्तः सूत्रे परशिवः प्रभुः ॥ २४ ॥

विभुता तस्य सेयं तु सर्वान्तःकरणात् स्थिता।
महापूर्णदशा सेयं सर्वान्तःकरणात्मिका ॥ २५ ॥

शिवः सर्वमयो भाति सर्वभावेन संस्थितेः ।
सर्वं तु सर्वमेवास्ति पदे परशिवात्मके ॥ २६ ॥

पूर्णापूर्णं पदं चैतन्न परं पूर्णतापदम् ।
अपूर्णताविहीना हि पूर्णता केव पूर्णता ॥ २७ ॥

तुर्यातीतदशा सेयं प्रोक्ता परशिवास्पदा ।
दशात्वकथनं त्वत्रोपचारवशतः स्थितम् ॥ २८ ॥

पार्यन्तिकी दशा सेयं विश्रान्तेः पण्डितैः स्मृता ।
पर्यन्तता च केवात्र पर्यन्ते परवस्तुनि ॥ २९ ॥

'जयतात्'पदद्योत्याऽथ सर्वोत्कृष्टतया स्थितिः ।
पञ्चमेऽत्र विनिर्णीता विभौ परशिवे स्थिता ॥ ३० ॥

सर्वोत्कृष्टे विभुः सोऽयं तदंशा यत्र संस्थिताः ।
ततोऽधिका भावरूपा नानाकार्येषु पण्डिताः ॥ ३१ ॥
तदाक्षिप्तनमस्कारनिर्णयोऽथ मया कृतः ।
षष्ठे प्रकरणे सम्यक् स्थूलसूक्ष्मादिभावतः ॥ ३२ ॥

सप्तमे स्तुतिरूपोऽथ वाचिको विस्तरान्मया ।
नमस्कारो विनिर्णीतः परादिभावतः स्फुटम् ॥ ३३ ॥

सर्वोत्कृष्टो नमस्कारः शोभते हि परं सदा ।
अन्यत्र तु कृतः सोऽयं पशुभावस्य व्यञ्जकः ॥ ३४ ॥

स्तुतिर्नमस्कृतिर्ह्यत्र वाक्कृता पण्डितैः स्मृता ।
परादिभावतो वाक् च चतुर्धा परिकीर्तिता ॥ ३५ ॥

नमस्कारकृतास्वादचर्चना त्वष्टमे कृता ।
सर्वास्वाददशानां हि सा एवोपरि संस्थिता ॥ ३६ ॥

स्वादास्वाददशाः सर्वा महास्वादेऽत्र तुल्यताम् ।
भजन्त्येव तदेकत्वात् पानके मरिचादिवत् ॥ ३७ ॥

अध्वषट्कविनिर्णीतिर्नवमेऽत्र कृता मया ।
सारमात्रानुसारेण सामान्येनैकतत्त्वतः ॥ ३८ ॥

देहादौ यद् गालनीयमध्वषट्कं बुधैः स्मृतम् ।
तद्गालनं तत्त्वरूपकथनेन विना कथम् ॥ ३९ ॥

देहादौ गालितं त्वध्वषट्कं तज्ज्ञैः सुनिश्चितैः ।
बाह्येन लङ्घनीयं स्याल्लङ्घितत्वात् स्वभावतः ॥ ४० ॥

वर्णादिरूपः कालाध्वा त्रिधाऽत्र नवमे तथा।
विशेषतो विनिर्णीतो वाचकत्वे कृतस्थितिः ॥ ४१ ॥

वाचकानन्तरं वाच्ये विश्रान्तिर्यद् बुधैः स्मृता।
वाचकाध्वत्रयं तस्मात् प्रथमं परिकीर्तितम् ॥ ४२ ॥

तत्त्वाध्वचर्चाऽथ मया दशमे परिकीर्तिता।
वाच्यरूपात् त्रिधा भिन्नाद् देशाध्वन इहाखिलम् ॥ ४३ ॥

कलाध्वचर्चा संक्षेपात् पूर्वमत्र कृता मया।
भुवनाध्वा विस्तृतेस्तु भयान्नोक्तेति विस्मृतः ॥ ४४ ॥

भुवनानां हि संक्षेपस्तत्त्वाध्वा कीर्तितो बुधैः।
व्यक्तीनामिव सामान्यं व्यक्तिव्यापकमित्यलम् ॥ ४५ ॥

तत्त्वानि भुवनाक्षेपं कुर्वन्त्येव स्वभावतः।
सामान्यान्यन्यथा सिद्धेर्विशेषं गमयन्ति हि ॥ ४६ ॥

एकादशेऽथ मातृणां निर्णयोऽत्र कृतो मया।
पाञ्चदश्यादिभेदोऽथ तेषामेव महाफलः ॥ ४७ ॥

मेयरूपेषु तत्त्वेषु मातारो हि पृथक् स्थिताः।
भवन्त्येवान्यथा तेषां कथं भेदेन संस्थितिः ॥ ४८ ॥

पाञ्चदश्यादिभेदोऽपि मातृणां युक्तिपूर्वकम्।
व्याप्यव्यापकभावं तु निर्णेतुं केवलं स्थितः ॥ ४९ ॥

उत्तरेषु हि मातारः पूर्वे व्यापकभावतः।
स्थिताः सन्त्येव तत्त्वेष्वप्येषा चर्चाऽस्ति सुस्फुटम् ॥ ५० ॥

सर्वेषां सर्वभावो यः स परस्मिन् शिवे स्थितिः।
नैषा चर्चाऽत्र युक्ताऽस्ति भेदाभेददशापदे ॥ ५१ ॥

कृत्यं मेयं च निर्णीतं यथास्वं तु विभागशः।
मातृणां द्वादशे युक्त्या शिवादीनां विशेषतः ॥ ५२ ॥

कृत्यपञ्चकविस्तारो विभौ परशिवे स्फुटम्।
त्रयोदशे विनिर्णीतः साक्षाद् द्वारेण च स्थितः ॥ ५३ ॥

शक्तिपातस्य विस्तारो नवधाऽत्रैव कीर्तितः।
तदावेशवशेनैव नृणां सर्वार्थसिद्धयः ॥ ५४ ॥

चतुर्दशे कर्मणोऽथ निर्णयोऽत्र कृतो मया।
कर्मैव द्वारं यत् प्रोक्तं ज्ञानस्येह कृतं बहु ॥ ५५ ॥

संग्रहणेन पुनः प्रोक्तं पूर्वोक्तं लेशतो मया ।
स्फुटं प्रकरणे पञ्चदशे संग्रहरूपिणि ॥ ५६ ॥

सेयं पञ्चदशी प्रोक्ता सम्यग्बोधविधायिनी ।
मया प्रकरणानां तु सारात् सारतया स्थिता ॥ ५७ ॥

अधोदेशपराकाष्ठा नैवारोहस्य भाजनम् ।
विषयाख्या बुधैः प्रोक्ताऽवरोहान्तपदात्मिका ॥ ५८ ॥

यतोऽवरोहस्तत्रैवारोहः कार्यतया स्थितः ।
तेभ्योऽवरूढिर्नैवास्ति काऽऽरूढिस्तत्र कथ्यताम् ॥ ५९ ॥

एभ्योऽवरोहो योऽयं स आरोहः परमे पदे ।
ऋजुदृष्टिभिरस्यैतन्नाममोहेन कल्पितम् ॥ ६० ॥

सर्वाधस्ताद् विभुः सोऽयं स्थितो हि व्यापकत्वतः ।
अन्यथा व्यापकत्वं तत् तस्य कीदृङ् न विद्महे ॥ ६१ ॥

अवरोहेन चेत् सोऽयं स्थितः स्यात् प्रतिबन्धकृत् ।
अवरोहानवस्था स्यादारोहप्रतिबन्धिनी ॥ ६२ ॥

अवरोहावसाने हि युक्त आरोह उद्यमः ।
अवरोहावसाने तत्स्थितः परशिवः स्वयम् ॥ ६३ ॥

आरोहस्यावसाने च सोऽयं परशिवः स्थितः ।
प्रतिगातक(?)भावेन नो चेत् तस्यानवस्थितिः । ६४ ॥

आरोहश्चावरोहश्च स्वयमेव परः शिवः ।
का कथाऽन्येतरस्यास्ति तस्याप्यत्र तथा स्थितेः ॥ ६५ ॥

तदेकः सर्वभावेन सर्वावसतिभावतः ।
स्थित एकः परशिवो नावसानपदत्वभाक् ॥ ६६ ॥

सर्वावसानरूपस्यावसानेऽस्य पुनः स्थितिः ।
सावसानं हि सर्वं तद् विभुश्च सर्वपूरकः ॥ ६७ ॥

भावानां नैव सा युक्ता भावमात्रैकरूपिणाम् ।
घटाभावस्वरूपो हि घटो नैवास्ति जातुचित् ॥ ६८ ॥

भावमात्रस्वरूपोऽयं शिवः सर्वतया स्फुरन् ।
स्वाभानभावतो भाने शक्त एवास्ति सर्वदा ॥ ६९ ॥

स्वावसानस्वरूपा वा भावाः सर्वे समन्ततः ।
तेषामादिश्च सम्प्रोक्तः स्वावसानैकरूपभाक् ॥ ७० ॥

मध्ये या सन्निवेशस्य वशेनान्यतया स्थितिः ।
सेयं तद्घनतारूपा नान्यरूपेति निश्चयः ॥ ७१ ॥
अवसानं तथाऽऽदिश्च सर्वेषां सर्वपूरितम् ।
वस्तु किञ्चिन्न तुच्छं तु नो चेत् सर्वं कुतो भवेत् ॥ ७२ ॥
अवसानं तथा मध्यमादिश्चापि निरन्तरम् ।
भावानामेकरूपं स्यादनेकत्वेऽपि संस्थितेः ॥ ७३ ॥
सन्निवेशस्तु यो मध्ये सोऽपि तद्घनतामयः ।
न तु शक्तेः शक्तिमतो भेदः कोऽपि बुधैः स्मृतः ॥ ७४ ॥
भावानामेकसाराणां सन्निवेशवशेन यः ।
भेदः सेयं स्मृता सद्भिः पराभेदविजृम्भणा ॥ ७५ ॥
आरोहोऽथावरोहश्च भावरूपौ स्फुटं स्थितौ ।
आदिर्मध्यं तथाऽन्तश्च तयोरप्येकरूपकम् ॥ ७६ ॥
अवधिश्चैतयोः सोऽयं विभुः परशिवः स्वयम् ।
स्वरूपं चेति निश्चित्य वर्तमानस्य तौ कुतः ॥ ७७ ॥
तथापि भासमानौ तौ तस्य क्रीडैव नापरम् ।
द्वैतं चापि महाद्वैते पूर्णताऽऽगादनोद्यतम् ॥ ७८ ॥
स्वातन्त्र्येणावरूढोऽयं विभुः स्वस्मात् पदाद् यतः ।
तेनैवारोहणं चास्य युज्यते नान्यप्रेरणात् ॥ ७९ ॥
अन्यश्च नात्र कोऽप्यस्ति भवन् वा तन्मयत्वभाक् ।
भवेत् तत्प्रेरणा चेयं तत्स्वातन्त्र्यविजृम्भितम् ॥ ८० ॥
गुरुशास्त्रादिकं सर्वं शिवस्यैव निजं वपुः ।
तत्प्रेरणातो नैवास्ति तत्स्वातन्त्र्याद् विभेदिनी ॥ ८१ ॥
आरोहणेच्छा स्वेनैव या स्याज्जीवस्य सा स्फुटम् ।
स्वातन्त्र्यरूपा कोऽत्रास्ति संशयः सोऽपि यच्छिवः ॥ ८२ ॥
अकस्माद् या तु केषाञ्चिदारूढिः परमे पदे ।
महास्वातन्त्र्यजृम्भा सा भवेन्नैवान्यरूपिणी ॥ ८३ ॥
स्वातन्त्र्यप्रेरितो माता रूढौ विषयदोषधृक् ।
भवेत् तेभ्यो विमुक्तोऽयं दोषदृष्टेः प्रभावतः ॥ ८४ ॥
तेभ्योऽहन्तां समाकृष्य समतां च विवेकतः ।
देहनिष्ठे तु ते कुर्यात् तेभ्यो देहो यदूर्ध्वगः ॥ ८५ ॥

शक्तिपातेन संस्पृष्टा केचित् तत्क्षणमेव तु ।
शिवभावेन तां दृष्ट्वा शिवरूपा भवन्त्यलम् ॥ ८६ ॥

नैषामध्वाऽत्र कोऽप्यस्ति लङ्घनीयो महात्मनाम् ।
देहादावपि केषाञ्चिदेवं तत्प्राप्तिरिष्यते ॥ ८७ ॥

सद्यो येषां न तत्प्राप्तिस्तेषां सा क्रमतो भवेत् ।
इदं शास्त्रं तदर्थं तु कृतं सारसमुद्गकम् ॥ ८८ ॥

तत्पदाप्तौ तदाप्तिश्च स्वयंसिद्धाऽस्ति तत्त्वतः ।
तत्पदं हि तदेवात्र नाधारत्वेन संस्थितम् ॥ ८९ ॥

भवत्वेव क्रमेणैव प्राप्तिः का हानिकल्पना ।
तदाप्तौ यः क्रमः सोऽपि स एव परमेश्वरः ॥ ९० ॥

अज्ञानं पौर्वकालीनं यच्च तच्चापि संस्मृतम् ।
नाममात्रे विवादोऽयं न तूक्तः परमार्थतः ॥ ९१ ॥

भवन् वाऽपि विवादोऽयं तद्दृशां सोऽपि तन्मयः ।
अतद्दृशां तु बाह्योक्ताद् विवादाच्छोभनः स्मृतः ॥ ९२ ॥

देहेऽहन्तासमायुक्तो विषयानभिपश्यति ।
मेयत्वेनैव ते चास्य भोगास्पदतया स्थिताः ॥ ९३ ॥

भोग्येषु विषयेष्वेव ये जना विवशाः स्थिताः ।
भोग्यैरेव तु ते भुक्ता भोक्तृता नास्ति तेष्विह ॥ ९४ ॥

भोक्त्रा भाव्यं न भोग्येन विषयेषु विवेकिना ।
भोक्ता चेतन एवास्ति भोग्यं जाड्येन दूष्यते ॥ ९५ ॥

भोक्ता भोग्येषु भोक्तैव न तन्नाशेऽस्य दुःखिता ।
चित्रं सुखार्थमार्तार्तमूढैर्दुःखमवाप्यते ॥ ९६ ॥

भोगं विनैव नष्टेऽपि भोग्ये दुःखं न साम्प्रतम् ।
सुखार्थमाहृताद् दुःखं महादुःखकरं स्मृतम् ॥ ९७ ॥

तस्मात् प्राप्ता उपादेयाः प्रवाहेण विवेकिना ।
अप्राप्ता विस्मृतिं नेया नष्टाश्चातितरां तथा ॥ ९८ ॥

देहनिष्ठस्य जडता शिलाया इव निश्चितम् ।
दुर्वारेति ततो देहं त्यक्त्वा बुद्धिं समाश्रयेत् ॥ ९९ ॥

बुद्धिश्चेयं परिच्छेदवती नो नित्यतापदम् ।
तस्मात् तामपि संत्यक्त्वा प्राणं स्वात्मतया श्रयेत् ॥ १०० ॥

प्राणभावोऽपि जाड्येन हतोऽस्ति देहवत् स्फुटम् ।
तं त्यक्त्वा शून्यभावस्तु ग्राह्यः स्वात्मनि पण्डितैः ॥ १०१ ॥

तत्रापि तुच्छतायोगात् तं त्यक्त्वाऽथ च पण्डितैः ।
तत्साक्षिभूतं चिन्मात्रं ग्राह्यं स्वात्मतया स्फुटम् ॥ १०२ ॥

चिन्मात्रं तुच्छकल्पं तच्छून्यमेव सहोदरः ।
तत् त्यक्त्वाऽथ तु संग्राह्यः शिवः पूर्णतया स्थितः ॥ १०३ ॥

एकाकी तत्र नो रन्ता भवेद् योगी ततः पुनः ।
त्यक्तं सर्वं तु गृह्णीयात् पराद्वैततया स्फुटम् ॥ १०४ ॥

तत्र सर्वं भावजातं प्रत्येकं स्वात्मवत्सुधीः ।
ज्ञात्वा परशिवत्वेन क्रीडामात्रपरो भवेत् ॥ १०५ ॥

सेयं परशिवावस्था महाविश्रान्तिरूपिणी ।
तद्गतोऽयं महायोगी महापूर्णतया स्फुरेत् ॥ १०६ ॥

सर्वत्र परताज्ञानं प्रत्येकं परमा दशा ।
स्वात्मरूपतया ज्ञानं प्रोक्ता शिवदशा बुधैः ॥ १०७ ॥

पादोनं तत्तया ज्ञानं प्रोक्ता मन्त्रमहेशता ।
अध्वेव(अर्धोनं) तु तथा ज्ञानं मन्त्रेशाख्या दशा स्मृता ॥ १०८ ॥

पादेन तु तथा ज्ञानं मन्त्रभावो निगद्यते ।
शुद्धचिन्मात्रताज्ञानं विज्ञानाकलता स्मृता ॥ १०९ ॥

लयाकलदशा प्रोक्ता शून्यभावेन संस्थितिः ।
मूर्च्छारूपा तु सा ज्ञेया सुखमात्रस्वरूपिणी ॥ ११० ॥

भावदृष्टिस्तु द्विविधा स्थूलसूक्ष्मतया स्थिता ।
सकलाख्या दशा सेयं मातॄणामिति संग्रहः ॥ १११ ॥

विषयेषु तु याऽहन्ता मातृभावादसौ च्युतिः ।
ऊर्ध्वं यानं मेयभावाच्छिवत्वमुत्तमैः स्मृतम् ॥ ११२ ॥

विषयीभावतोऽधस्ताच्छिवभावात् तथोर्ध्वतः ।
दशा पारशिवी प्रोक्ता महापूर्णतया स्थितेः ॥ ११३ ॥

अपूर्णादथ पूर्णाच्च गतेयं परमा दशा ।
द्वयान्तःकृतिदक्षा च महापूर्णतया स्थितेः ॥ ११४ ॥

दशात्वकथनं चात्र बोध्यार्थं न तु तात्त्विकम् ।
तात्त्विकं वाऽपि भवतु तत्र सर्वंसहे पदे ॥ ११५ ॥

नातः परतरं किञ्चित् साध्यमस्ति जगत्त्रये।
साध्यं वाऽपि च यत् तत्र सिद्धमेव निजे पदे॥ ११६॥

साध्यत्वमपि सिद्धत्वान्न भेदमर्हति स्फुटम्।
भाविता याऽत्र किं सा स्यान्नहि कालोऽत्र भेदकृत्॥ ११७॥

साध्यं वाऽस्तु च सिद्धत्वाद् भिन्नं का हानिरुत्थिता।
साधनं भावनामात्रमत्र तत्सिद्धगं परम्॥ ११८॥

साध्यस्य भावनामात्रात् कथं प्राप्तिर्भवेदिह।
भावनेनात्र करणं ह्यशक्यं वस्तुनो बहिः॥ ११९॥

आत्मा स्वात्मनि सिद्धोऽयं सर्वदैवाऽस्ति संस्थितः।
भावनामात्रलभ्योऽसौ तेन स्वात्मनि सर्वदा॥ १२०॥

भावना परमज्ञानमात्रमार्जनतत्परा।
सिद्धस्य प्रापयित्री सा न साध्यस्य कदाचन॥ १२१॥

साध्यप्राप्तौ कारकाणां सामग्री ह्युपयुज्यते।
न तां विना हि कुत्रापि साध्यं सिद्ध्यति जातुचित्॥ १२२॥

कारकाणां च कार्येण विना कारकता कथम्।
कार्याभावे कारकं हि वस्तु स्यान्न तु कारकम्॥ १२३॥

अन्योन्याश्रय एवं हि कार्यकारकयोर्भवेत्।
तत्तयोः सिद्धता युक्ता शिवताख्याऽनपायिनी॥ १२४॥

असिद्धिरनयोर्या स्याच्छङ्किता सा न सिद्ध्यति।
व्याघातविषयाभावदोषापातात् स्फुटं स्थितात्॥ १२५॥

अभातस्य हि का सिद्धिशङ्का भातस्य वा तथा।
भानमात्रं हि सिद्धत्वनिबन्धनमिह स्थितम्॥ १२६॥

यद् यद् भाति तु तत् सर्वं शिवस्यैव निजं वपुः।
भाति नो यत्तरां तच्च शान्तत्वात् तन्मयत्वतः॥ १२७॥

अभातमथ भातं च शिवभानैकरूपकम्।
आद्यं स्वरूपभावेनान्त्यं तु भूतितया स्थितेः॥ १२८॥

यस्त्वत्र विषयोपाधिर्नैवोपाधिः स उच्यते।
घटस्य मृदुपाधित्वं शङ्क्यते नहि केनचित्॥ १२९॥

भानं तद्विषयश्चेति द्वयमेकमिदं ततः।
प्रकाशत्वं जडत्वं च मूढैरत्र वृथा मतम्॥ १३०॥

अथवा द्वयमेतत् तु यत्र विश्रान्तिमागतम् ।
भवेत् तस्यैव सर्वत्वं काऽत्र भेदस्य कल्पना ॥ १३१ ॥

घटो भाति प्रमेत्यत्र घटो भानं च निश्चितम् ।
षष्ठ्यन्तवाच्यविश्रान्तं स्फुरत्येव न संशयः ॥ १३२ ॥

षष्ठ्यन्तवाच्यमत्राऽऽत्मा स एव च शिवः स्मृतः ।
देहादिभ्यो विनिष्क्रष्टः सोऽयं कोऽपि बुधैः स्मृतः ॥ १३३ ॥

चितौ यन्नैव विश्रान्तं तन्नभःकुसुमायते ।
नभःकुसुममप्यत्र विश्रान्तं सत्यवत् स्फुरेत् ॥ १३४ ॥

तस्मात् स्वसिद्धचिन्मात्रसाम्राज्ये सर्वतः स्थिते ।
साध्यं किं नु भवेत् तस्याभावे सर्वत्र सिद्धता ॥ १३५ ॥

किञ्च क्रियाऽपि तत्रास्ति साधकत्वेन सम्मता ।
साऽन्विष्टा हस्तमायाति कदाचिन्नैव कस्यचित् ॥ १३६ ॥

तस्याः क्षणास्तु ये केऽपि प्रत्येकं स्वात्मनि स्थितेः ।
न तन्तवः पटमिव साधयन्ति बहिःक्रियाम् ॥ १३७ ॥

पूर्वे हि स्मृतिशेषाः स्युरुत्तरेऽनागतास्तथा ।
वर्तमानक्षणस्त्वेकस्तां कथं साधयेत् क्रियाम् ॥ १३८ ॥

स एव तु क्षणश्चेत् स्यात् क्रियाभावेन संस्थितः ।
वर्तमानतया सोऽयं चितो न भेदभाग् भवेत् ॥ १३९ ॥

वर्तमानस्वरूपा हि चित् प्रोक्ता सर्वदा बुधैः ।
आगाम्यथ गतं चैतत् तस्याः काल्पनिकं वपुः ॥ १४० ॥

चिता साध्यतयाऽऽरब्धं चिदेव नात्र संशयः ।
स्वभावसिद्धा सेयं तु किं साधयति भेदतः ॥ १४१ ॥

सोऽयं क्षणः साधयेत् किं क्षणत्वेनैव चेन्मतः ।
नित्यत्वे त्वथ सिद्धोऽयं साधयेत् किं क्रियावपुः ॥ १४२ ॥

एकावयवसम्भूतः क्वचिन्नावयवी भवेत् ।
भवन् वाऽवयवः सोऽयं नैवावयवितापदम् ॥ १४३ ॥

साध्यमानात् तु सा किं नो फलाद् भेदेन दृश्यते ।
फलमेव तु सा चेत् तत् का क्रियावाग्वृथोदिता ॥ १४४ ॥
फलानुमेयतावादो न युक्तो व्याप्त्यनिश्चयात् ।
सामान्यतो व्याप्तिपक्षः कुशकाशावलम्बनम् ॥ १४५ ॥

अन्त्यः क्षणस्तु यस्तस्याः सोऽपि तत्कालनाशयुक् ।
न क्रियाव्यपदेशार्हः पूर्वेषां केव सङ्कथा ॥ १४६ ॥

क्रिया च फलसम्बद्धा युक्ता विषयिभावतः ।
असता कोऽनुसम्बद्धः सति किं कार्यमेतया ॥ १४७ ॥

न च संदृश्यते साऽत्र येन दर्शनमात्रतः ।
यथा तथा कल्पयेम तद्व्यवस्थां प्रयत्नतः ॥ १४८ ॥

स्वभावविप्रकर्षस्य कथा नाऽत्र विराजते ।
तत्क्षणानां स्फुटं दृष्टे विक्लित्यादिस्वरूपिणि ॥ १४९ ॥

अन्यथाऽनुपसृत्यासौ फलस्य नापि युज्यते ।
घटो ह्यपि तथा किं नो पटोऽसौ कल्प्यते त्वया ॥ १५० ॥

कल्प्यते सा त्वदृष्टापि यत् तत् किं सिद्धमेव तत् ।
फलं न सह्यते येन कल्पनालाघवं भवेत् ॥ १५१ ॥

फलस्यादर्शनं यत् तत् सूक्ष्मत्वेनैव संस्थितेः ।
नाभावान्नासतो भावो विद्यते हि स्वभावतः ॥ १५२ ॥

तण्डुलादोदनस्यायं यो भेदः परिदृश्यते ।
नासौ स्वरूपभेदः स्याद् गुणभावेन संस्थितेः ॥ १५३ ॥

विक्लित्तिर्या च तस्येयं स्वभावः स्वात्मनि स्थितः ।
शिलाऽपि पाकयोगेनान्यथा तद्भागिनी भवेत् ॥ १५४ ॥

भावानां योजनाऽन्योन्यं स्वभावाविष्कृतौ रता ।
दृश्यतेऽत्र न युक्ताऽस्ति चोद्यचञ्चुकचोदना ॥ १५५ ॥

कारकाणां तदर्थं यो दृश्यते क्षोभविभ्रमः ।
स मातृकल्पनामूलः स त्वज्ञानविजृम्भितम् ॥ १५६ ॥

सर्वं स्वमात्रनिष्ठं तु विद्यतेऽत्र जगत्त्रये ।
सर्वेषां स्वं निजात्मैव स एव परमेश्वरः ॥ १५७ ॥

कल्पनाऽपि च या साऽपि स्वात्मैव परमेश्वरः ।
कल्पकः कल्पनीयश्च स एवात्र पराद्वये ॥ १५८ ॥

सर्वं सर्वत्र वा चास्तु भेदेन हानिरत्र का ।
पराभेदो हि सोऽयं स्यात् स्वान्तःकृतद्वयाद्वयः । १५९ ॥

कालोऽपि सहकारित्वं याति साध्यस्य साधने ।
सोऽपि भिन्नः शिवान्नो तत्क्रियावैचित्र्यभावतः ॥ १६० ॥

देशोऽपि साध्यनिर्माणे सहकारी परो मतः ।
सोऽपि मूर्तिस्वरूपोऽस्य शिवस्य परमात्मनः ॥ १६१ ॥

अतो न दृश्यते किञ्चित् स्थितं साध्यतया भवेत् ।
भावाः सिद्धाः शिवः सिद्धः किं साध्यं साधयेदसौ ॥ १६२ ॥

या क्रिया तु प्रभोः प्रोक्ता शाश्वती सिद्धरूपिणी ।
तत्साध्यं सिद्धमेवास्ति प्रभुवत् सर्वदा स्थितेः ॥ १६३ ॥

न च भेदस्य शङ्काऽत्र यच्छक्तिः शक्तिमत्पदात् ।
न भिन्ना प्रोच्यते कैश्चिद् भेदे स शक्तिमान् कथम् ॥ १६४ ॥

तद्वत्त्वं हि तदेकत्वं नान्येनान्यस्य तत् स्मृतम् ।
भिन्नस्त्वन्यो बुधैः प्रोक्तो नो चेत् सोऽन्यः कथं न सः ॥ १६५ ॥

साध्यं विना क्रियात्वं स्यात् तस्याः कीदृङ् न विद्महे ।
साध्यतायां तु साध्यस्य कथं नित्या भवेदसौ ॥ १६६ ॥

विषये नैव सिद्धाऽस्ति क्रिया विषयसाधिनी ।
प्रभोर्वा यदि वाऽन्यस्य कोऽत्र भेदोऽस्ति वस्तुतः ॥ १६७ ॥

विषयो यदि सिद्धस्तत् क्रियायां किं प्रयोजनम् ।
असिद्धश्चेत् तरां यस्मान्नाभावो विद्यते सतः ॥ १६८ ॥

स्वरूपमात्रे तस्मात् तु क्रियाभावस्य कल्पना ।
अन्यथाऽनुपपत्त्यैव जगद्भानस्य निश्चितम् ॥ १६९ ॥

इच्छाज्ञाने च कल्प्येते ते एव विदितात्मभिः ।
लोकरीतिं विना यस्मान्न मूढा ज्ञानभागिनः ॥ १७० ॥

साध्यत्वशङ्कयाऽत्रास्ति भानसिद्धे जगत्पदे ।
सा न युक्ता यतो भानं सिद्धं रूपं महेशितुः ॥ १७१ ॥

भातव्ये साध्यताशङ्का याऽत्र साऽपि न युज्यते ।
सन्निवेशविशेषस्याऽऽधाने का साध्यता भवेत् ॥ १७२ ॥

जगदुत्पादने यास्तु क्रियन्ते प्रक्रिया बुधैः ।
ता बोध्यबोधनार्थाय केवला न तु तत्त्वतः ॥ १७३ ॥

सन्निवेशा विभिद्यन्ते भावानां केवलं स्फुटम् ।
नोत्पादः कोऽपि तेषां यत् सिद्धास्ते सर्वदा स्थिताः ॥ १७४ ॥

सन्निवेशविशेषेण साध्यत्वं कथयन्ति ये ।
हेम्नोऽपि साध्यतां तेऽलं कटकत्वे वदन्तु वा ॥ १७५ ॥

सन्निवेशो न कोऽप्यस्तु सत्यत्वेन विचारितः ।
वस्तुशक्तिर्विचित्रैव तद्भावेन हि जृम्भते ॥ १७६ ॥

सन्निवेशोऽपि नात्रास्ति विशेषकलितो यतः ।
तस्य सत्ताप्रदं भानमेकमेवास्ति तत्त्वतः ॥ १७७ ॥

विशेषो वाऽस्तु सोऽयं स्यात् पराभेदविजृम्भणा ।
अभेदे भेदचर्चा हि पराद्वैतस्य विस्फुरा ॥ १७८ ॥

साध्याभावे शिवस्यैवं साधकस्यापि किं भवेत् ।
साध्यं नहि ततो भिन्ना कर्तृताऽस्य बुधैः स्मृता ॥ १७९ ॥

साधकत्वं हि तत् तस्य शिवादेव परात् स्मृतम् ।
स्वतन्त्रकर्तृता यस्माद्धेतुकर्तृनियोजिता ॥ १८० ॥

स्वतन्त्रकर्तृताऽप्यस्य साधके नैव तिष्ठति ।
साध्ये सति हि सा युक्ता सिद्धिकर्तृतया स्थिते ॥ १८१ ॥

तत्र या कर्तृताऽस्यास्ति साधकस्य भ्रमागता ।
शिवस्य हेतुता तां तु भात्ता शीघ्रं विनाशयेत् ॥ १८२ ॥

समर्थाचरणे कर्ता कर्ताऽस्ति परमार्थतः ।
स्वतन्त्रकर्ता योऽयं तु स प्रेर्यं इति निश्चयः ॥ १८३ ॥

समर्थाचरणे कर्तुः समर्थाचरणे तु यः ।
कर्ता सोऽयं महाकर्ता द्वयान्तःकृतिपण्डितः ॥ १८४ ॥

अथवा कर्तृता येयं त्रिधा भात्यत्र सुस्फुटा ।
सा चिद्रूपे स्फुटं युक्ता चिद्रूपः केवलः शिवः ॥ १८५ ॥

कुम्भकारे कर्तृता या घटं प्रति स्फुटं स्थिता ।
देहावच्छिन्नचैतन्ये सा स्थिताऽस्य न देहके ॥ १८६ ॥

मृतोऽपि कुम्भकारोऽयं घटं कुर्य्यान्न चेदिदम् ।
सन्निधानेऽपि सामग्र्या न तु सोऽत्र प्रवर्तते ॥ १८७ ॥

देहस्य सहकारित्वं केवलं तत्र संस्थितम् ।
तत्प्रभाववशाऽऽयातं मृतो तच्चास्य हीयते ॥ १८८ ॥

सहकारे च देहेऽत्र क्रीडयाऽनेन कल्पितः ।
देहस्य करणे कोऽभून्महाकारी न विद्महे ॥ १८९ ॥

स्वतन्त्रो वाऽथ हेतुर्वा कर्ताऽत्र चेतनः परम् ।
जडस्य कर्तृता नैव युक्ता कार्यतया स्थितेः ॥ १९० ॥

साधकस्य च देहेऽस्ति चैतन्यं तत्र तद्गता।
कर्तृता स्फुटमेवास्ति नात्र काऽपि विकल्पना ॥ १९१ ॥

देहोपाधेर्निर्गता तु चित् सर्वत्र कृतस्थितिः।
स्वांशं तं देहगं प्रेर्यं प्रेरयत्येव निश्चितम् ॥ १९२ ॥

कर्तृतावयवे या हि तत्रावयविचोदना।
हेतुतां भजते व्यक्तं नात्र कोऽप्येव संशयः ॥ १९३ ॥

या चिच्छुद्धा स एवायं शिवः परशिवस्तथा।
अपूर्णतापूर्णतादि परं भेदस्य कारणम् ॥ १९४ ॥

साधकोऽयं शिवादेवं न भेदमर्हति स्फुटम्।
शिवस्य साध्यं नैवास्ति साधकस्य कथं भवेत् ॥ १९५ ॥

साध्याभावे कर्तृताया अभावो नैव युक्तिमान्।
शिवकर्तृतया सिद्धे स्वभावान्न तु कार्यतः ॥ १९६ ॥

क्रियाकाले हि कर्ता नो कर्ता पूर्णतया स्थितेः।
स्वरूपलीनकर्तृत्वः कर्ताऽसौ ज्ञातृवद् भवेत् ॥ १९७ ॥

ज्ञाता ज्ञाने प्रवृत्तो हि न ज्ञाता प्रोच्यते बुधैः।
स्वरूपे ज्ञातृता यस्य स ज्ञाता परमो मतः ॥ १९८ ॥

विषयैः साध्यमानोऽयं ज्ञातृभावोऽत्र सत्यतः।
ज्ञातृतानयतो ज्ञातशास्त्रो ज्ञाता न तत्परः ॥ १९९ ॥

चित्तत्त्वे शान्तिमायाते प्रोक्ता कर्तृतया स्थितिः।
तदुक्तास्तु कणा एता(षा) स्थिता जगति कर्तृता ॥ २०० ॥

कर्तृतायां स्थितायां तु ज्ञातृता क्वेव गच्छति।
ज्ञानपल्लवभूता हि क्रिया जगति तिष्ठति ॥ २०१ ॥

कर्ता ज्ञाता तदेकोऽयं शिवो जगति संस्थितः।
कार्यं ज्ञेयं च नैवास्य सत्त्वे का तु तथा स्थितिः ॥ २०२ ॥

कार्यं हि शिष्यते यस्य ज्ञेयं चापि विशेषतः।
कोऽयं कर्ताऽथवा ज्ञाता शक्के हि शेषकल्पना ॥ २०३ ॥

ये ज्ञातारोऽथ कर्तारो भान्ति मायापदे तु तान्।
तत्कार्यज्ञेयभावेन स्थितान् विद्धि विशेषतः ॥ २०४ ॥

न च शेषतया तेऽस्य ज्ञेया शक्तस्य सर्वदा।
तादृशानां समुत्पादेऽनन्तानां स्वस्वरूपतः ॥ २०५ ॥

क्षोभावस्थाऽपि या तस्य जीवोत्पादे स्फुटं स्थिता ।
सेयं महाशान्तिदशा महाकर्तृत्वरूपिणी ॥ २०६ ॥

अशक्तस्य हि यः क्षोभः स क्षोभ इति संस्मृतः ।
शक्तस्य क्षोभः क्रीडैव क्रीडाशान्तिः परास्मृता ॥ २०७ ॥

निर्व्यापारा हि प्रभवः क्रीडायां रक्तचेतसः ।
न(क)र्तव्याः परनिर्मग्नाः क्रीडाशान्तिस्ततः परा ॥ २०८ ॥

वैवश्यरहितानां यः क्षोभः सा शान्तिरुत्तमा ।
न जडावस्थितिः सा हि [सिद्धा] शक्तेषु केवलम् ॥ २०९ ॥

क्षुब्धो वाऽस्त्वथवा शान्तो महतां तु प्रभुः स्मृतः ।
महाकर्ता च सोऽयं स्याच्छुद्धत्वान्नात्र संशयः ॥ २१० ॥

साध्येन रहितानां या प्रवृत्तिः साध्यसाधने ।
निःसाध्यत्वं परा काष्ठा सेयं सद्भिरुदाहृता ॥ २११ ॥

साध्याद् विमुखतायां हि परं सा साध्यनिष्ठिता ।
साध्याद् विमुखता यत्नात् साध्यतां न जहाति यत् ॥ २१२ ॥

साध्याद् विमुखता साध्ये संस्थितिश्चापि या सदा ।
स्वयं सिद्धा शिवे सेयं परा निःसाध्यता भवेत् ॥ २१३ ॥

नियमोऽनीश्वरत्वे स्यान्नेश्वराणां हि यन्त्रणा ।
साऽप्यत्र संस्थिता नित्यं माहेश्वर्यप्रसाधनी ॥ २१४ ॥

एवं निःसाध्यता देवे स्थिताऽस्ति परमेश्वरः ।
शिष्टसाध्योऽसमर्थो हि किं साधयति नि.सहः ॥ २१५ ॥

एवं शिवाद् विभेदेन योगिनोऽपि न साध्यधीः ।
शिवस्य साध्यमेवास्य साध्यं नान्यद्धि किञ्चन ॥ २१६ ॥

यत् करोति शिवः स्वेन तत्कार्यमस्य नो पृथक् ।
अस्य कार्यं शिवस्यैव नास्येति निश्चयोऽस्त्यलम् ॥ २१७ ॥

शान्तावस्था शिवस्यास्ति महाकर्तृतया स्थिता ।
क्षुब्धावस्थाऽपि तस्मात् सा सर्वदा कर्तृतापदम् ॥ २१८ ॥

तद्भावमागतो योगी तत्कार्येनैव कार्यवान् ।
भवेदेवेति विश्रान्तः सदा स्वेनैव सोऽस्त्यलम् ॥ २१९ ॥

साध्यं च साध्यभावेन सिद्धमेवात्र संस्थितम् ।
अन्यथा सिद्धमेवैतत् काऽत्र साध्यत्वकल्पना ॥ २२० ॥

साध्यभावेन सिद्धं च सिद्धमेव निगद्यते।
साधनं तस्य साध्यत्वसिद्धताद्योतनोद्यतम् ॥ २२१ ॥

साध्यं सिद्धं द्वयं चेति विरोधात् संभवासहम्।
सविरुद्धं किमप्येव द्वयसाधनशक्यमत् ॥ २२२ ॥

तदेवात्र फलं तस्य सत्यता काऽथ साधनम्।
किं साधकश्च कोऽत्रास्ति सर्वं चास्ति निरत्ययम् ॥ २२३ ॥

यद्विभाति तदत्रास्ति स्वभावेन समाश्रितम्।
सर्वं भाति ततस्तच्च तत्रास्त्येव निरत्ययम् ॥ २२४ ॥

सिद्धिश्च काऽत्र भिन्ना स्याददैते साध्यरूपतः।
साध्यस्य सिद्धता सिद्धिर्नान्यत् किञ्चित् स्वरूपतः ॥ २२५ ॥

नवीनत्वं सिद्धताया भ्रमेणैवात्र कल्प्यते।
नवीनता हि कालेन स च पूर्वंतरं गतः ॥ २२६ ॥

भावाः सिद्धा शिवः सिद्धः सर्वभावश्च सिद्धिभाक्।
पदे परशिवाख्येऽत्र किं साध्यमवशिष्यते ॥ २२७ ॥

सेयं महापूर्णताऽत्र सर्वदा सर्वभासनम्।
यदेतत् स्व-स्वभावेन स्वभावे केव चोदना ॥ २२८ ॥

साध्यं च सिद्धमेवात्र स्वभावेनैव तिष्ठति।
तथापि साध्यताभानं यत् सा क्रीडा प्रभोः स्मृता ॥ २२९ ॥

ऐक्यं भेदो द्वयं चैतदभावो वा त्रयास्पदः।
आभासमात्रमेवास्ति कैतद्भेदस्य कल्पना ॥ २३० ॥

आभासाभास एषोऽपि पराभासविजृम्भितम्।
आभासाभाव एषोऽपि यत्र स्वस्थोऽवतिष्ठते ॥ २३१ ॥

अनाभासस्तथाभासो यन्मयौ यत्र च स्थितौ।
पराभासस्वरूपं तं विदुः परशिवं बुधाः ॥ २३२ ॥

यदेव या दशा सेयं तदेव पररूपिणी।
येषां ते स्युः स्फुटं तत्र विश्रान्ताः परमे पदे ॥ २३३ ॥

राज्यावाप्तिर्मृतिर्वापि प्राप्ता दैववशात् स्वयम्।
भेदेनैवाऽनुभूताऽपि योगिनामेकरूपिणी ॥ २३४ ॥

यद् यदाऽऽभाति तत् तेषां स्वभावेन परः शिवः।
न कल्पना[कल्प]नैव कल्पनाय हि ते गताः ॥ २३५ ॥

खण्ड एषां रुद्धमेव तेषां परशिवो यथा।
आभातं तु तरां तेन कुत्रैषां साध्यभावना ॥ २३६ ॥

सिद्धत्वमपि नैवात्र वक्तुं युक्तं विभेदकृत्।
प्रतियोगिहृतं किं वा कुर्मो वागीदृशी स्थिता ॥ २३७ ॥

सिद्धस्यान्तर्गतं साध्यं साध्यस्यान्तर्गतं च तत्।
भवेदेव द्वयं पूर्वं द्वाभ्यां का भेदकल्पना ॥ २३८ ॥

पूर्णत्वमपि निर्णीतं हीनत्वे पर्यवस्यति।
अपूर्णत्वं हि तत्रास्ति नैव लेशेन वस्तुतः ॥ २३९ ॥

महापूर्णत्वरूपात्र दशा योग्या ततो भवेत्।
ते द्वयं चार्थते(तः) साक्षाद् भागभावेन नित्यशः ॥ २४० ॥

तथापि शब्ददोषोऽयं नास्य यात्येव मन्दिरात्।
प्रतियोगी हि शब्दस्य वाच्येऽयं कृतसन्निधिः ॥ २४१ ॥

शब्दः संकेतितः सोऽयं न स्वरूपविभेदकः।
मातृकल्पतया रूढ एवं श्रुत्वा प्रशाम्यताम् ॥ २४२ ॥

न प्रशाम्यन्ति ये मूढास्तेषामर्थे तु योगिनाम्।
महत्त्वस्य द्वितीयस्य कुर्मः का क्षतिरागता ॥ २४३ ॥

मूढस्तु नैव कोऽप्यस्ति तत्त्वज्ञं प्रति जातुचित्।
भाति यस्य तु मूढः स्यात् स एवात्र न संशयः ॥ २४४ ॥

स्वमनस्तु परं भातं ममैतन्मूढभावतः।
तस्मात् तस्यावरोधार्थं मया शास्त्रमिदं कृतम् ॥ २४५ ॥

तन्मूढतापसारे तु सिद्धे शास्त्रार्थभावनात्।
ममापि मूढता नश्येत् तन्मौढ्यासूत्रणोक्तितः ॥ २४६ ॥

परमार्थेन मूढोऽत्र नैव कोऽपि जगत्त्रये।
मूढेषु मूढता याऽत्र भाति सा तज्ज्ञ''''॥ २४७ ॥

मनसोऽपि च या स्वस्य मूढता साऽपि तज्ज्ञता।
परमार्थेन तत्रापि बोधनं तस्य युक्तिमत् ॥ २४८ ॥

..................................तस्य तज्ज्ञतया स्फुरेत्।
सैवेयं तज्ज्ञता मे स्यादिति यत्नो मया कृतः ॥ २४९ ॥

प्रसक्तानुप्रसक्त्याऽलं प्रकृतं ब्रूमहे पुनः।
पुनः पुनः परामृष्टं वस्तु यस्मात् प्रसीदति ॥ २५० ॥

साध्यं साध्यं भवति न कदाऽप्येव साध्यैकरूपं
सिद्धं नष्टं जगति भजते साध्यभावार्हतां यत् ।
सिद्धिर्नाशो द्वयमिति भवेत् कालरूपात् क्रमात् स
कालः कोऽयं परचितिमहावह्निराशौ तृणं किम् ॥ २५१ ॥

नाशः कोऽयं ननु परचितो नाशकालेऽपि यः स्वं
साक्षित्वेन स्पृशति नियतं स्वप्रकाशस्वरूपा(पम्) ।
नो चेन्नाशो भवति तु समं नैव सत्तां हि साक्षी
चिद्रूपोऽयं कथयति परं स्वस्य वाऽन्यस्य नित्यम् ॥ २५२ ॥

सिद्धा नाशं कथमिव भजेदंशहीना चिदेषा
नाशोंऽशानां विभजनमयो ह्यंशिनो नान्यरूपः ।
नाशोऽदृष्टिस्त्विति यदि मतं स्वेन दृष्टिस्वरूपा
चिन्नादृष्टेः पदमिह भवेत् केव नाशस्य चिन्ता ॥ २५३ ॥

भावाः साध्या ननु यदि मतास्तत्र कः साधकः स्यात्
ते तान् कुर्युः कथमिव कुतो वाप्यसत्तां स्वकीयाम् ।
पूर्णः कर्ता न भवति कदाप्येव तृप्तेर्महेशोऽ-
पूर्णोऽशक्तः किमिह कुरुते भाववत् साध्यरूपः ॥ २५४ ॥

साध्याभावे भवति किमियं सिद्धता भेदजुष्टा
साध्यं कर्तुः श्रयति खलु यत् सिद्धतां कालयोगात् ।
नो मृच्चेत् स्याद् व्रजति घटतां ब्रूत कः कालमात्रा-
च्चित् साध्यत्वं भजति न कदाप्येव चेत्यानुरोधात् ॥ २५५ ॥

साध्यत्वं वा भजतु चिदियं केन सा सिद्धिभाक् स्यात्
यद् दण्डाद्यैर्व्रजति घटतां मृत्तिकापिण्ड एषः ।
तत् साध्यत्वं न भजति किमप्येव सिद्धिं कदाचित्
स्वेनासिद्धं कथमिव भवेत् साधनेऽन्यस्य शक्तम् ॥ २५६ ॥

शक्तः सिद्धौ यदि किल भवेत् कोऽपि वाऽस्यास्तदानीं
सोऽस्याः स्थाने ननु समुचितश्चित्स्वरूपेऽभिषेक्तुम् ।
केयं सा स्यात् किमु सुखकरं ब्रूत द्वैराज्यमेतत्
साध्यः स्थातुं कथमिव पुरः शक्नुयात् सिद्धयुद्धे ॥ २५७ ॥

अन्यस्तस्या न भवति कदाप्येव युक्तोऽभिषेक्तुं
चित्त्वाख्येऽस्मिन् महति परमे स्थानवर्येऽतिमन्दः ।
अन्यस्तस्या जगति हि जडः सोऽपि वा नैव यस्मा-
च्चित्सान्निध्ये भवति न कथाऽन्यस्य कस्यापि जातु ॥ २५८ ॥

अन्यः सिद्धो भवतु च परं सर्वरूपेण भातः
किं स्वं सिद्धं स्थितमिह सदा साधयेद् व्यर्थमेव ।
यत् स्वं साध्यं न भवति कदाप्येव कस्यापि नित्यं
तत्त्वे स्वत्वं कथमिह भवेत् स्वं हि सिद्धं न साध्यम् ॥ २५९ ॥

साध्यं सिद्धं द्वयमिति गतं साधकोऽप्येव कः स्यात्
सिद्धिः केयं वदत विबुधाः साधनं वाऽपि किं तत् ।
सर्वं चैतद् भवतु च पराद्वैतभावेन सिद्धं
तज्ज्ञेष्वेवं भवति च ततो ज्ञो जनः प्राप्तकामः ॥ २६० ॥

मध्यस्थानां भवति शिथिला द्वैतबुद्धिर्मनाग्य-
द्यप्येवैषां स्फुटमिह तथाप्येव ते शक्तिपातात् ।
अद्वैतेऽस्मिन् कृतपदतया स्वेन पुष्टिं गतास्तं
प्राप्स्यन्ते वाऽनिशमिह महाद्वैतभावं विशालम् ॥ २६१ ॥

साध्यं सिद्धं भवति निखिलं सिद्धमेतच्च साध्यं
स्वे भावेऽथो तदितरतया भासने यत्क्रमेण ।
किं साध्यं स्यादिह जगति तत् सिद्धमेतच्च किं वा
मातुर्भ्रान्तिः परमिह न वा साऽपि क्रीडा हि दैवी ॥ २६२ ॥

क्रीडाऽप्येषा ननु जडपदा नैव तत्रास्ति योग्या
क्रीडानिष्ठा यदिह नियतं बालका नैव तज्ज्ञाः ।
वक्तुर्भानाद् भवति च तथा वाच्यताऽसौ न सारा
नो युक्ता तद् भवति परमा विस्मयस्यैव निष्ठा ॥ २६३ ॥

बीजे वृक्षो भवति च यथा वृक्षदेहेऽपि तानि
तेषां चान्तः पुनरपि तथा ते स्युरित्थं पुनश्च ।
तद्वत् सर्वं जगदिह पुरे तच्च तस्यान्तरेऽथो
तत् तस्मिन् स्यात् पुनरपि तथा काऽत्र निष्ठाऽनुरूपा ॥ २६४ ॥

को हेतुः स्यात् किमिव च तथा कार्यमत्रास्ति द्वन्द्वे
नो जाने यद् द्वयमपि द्वयाल्लब्धसिद्धिः सदैव ।
कोऽप्यन्यः स्याद् द्वयमपि तु यत्रैव लब्ध्वा स्थितिं स्वां
भूमौ बीजादिकमिव भजेद्धेतुतां कार्यतां च ॥ २६५ ॥

बीजं वृक्षो द्वयमपि यथा भूमिनिष्ठं तथैव
चिच्चेत्ये स्तः परमिव पदे पूर्णपूर्णे सदैव ।
एतत् तत्त्वं भवति तु पराच्चित्स्वरूपात् परं यत्
सर्वातीतं भवति सततं सर्वरूपं च तद्वत् ॥ २६६ ॥

एतद्दृष्टौ भवति नियतं सर्जनीयैकरूपं
स्थैर्यं चैतत् स्थितिपद इहास्त्येव संहार्यरूपम् ।
संहारेऽथो तदनु च भवेच्छेषरूपत्वभावे
भूत्वा साक्षी निजपरपदे सर्वदा सर्वरूपम् ॥ २६७ ॥

एतद्दृष्ट्यादिकमिह परे सर्वदैवास्ति तत्त्वे
पूर्णे स्वान्तर्गतमिव सदा भावपूगं समीक्ष्य ।
नैतत् तत्रास्ति च ननु कदाऽप्येव वीच्यादिसृष्ट्या
नाशाद् वाऽलं जलनिधिरयं कः स्वतद्वान् विभाति ॥ २६८ ॥

ब्रह्माण्डानामकलिततमा पङ्क्तिरत्रास्ति नित्यं
जाता लीना स्थितिपदमिता जायमाना लये च ।
औन्मुख्येनाश्रितपरिचया स्थीयमाना तथान्त-
स्तत्रास्त्येवं त्वपि परपदे स्वेऽतिशुद्धं सदैव ॥ २६९ ॥

चिद्रूपं तद् यदि खलु तदा चेत्यरूपं कथं स्या-
च्चेत्यत्वे तत् कथमिव भवेत् तत्र साक्षित्वभाग् वा ।
नानिर्वाच्यं भवति च यतो वागियं तस्य वक्त्री
तस्माद् भाता तदितरदसंवित्ति किं तद्धि सर्वम् ॥ २७० ॥

यद् यत् किञ्चिज्जगति सकले भाति नो भाति वा यत्
तत् तत् सर्वं सततमिह तन्नातदस्त्येव किञ्चित् ।
अस्त्येवातत् किमपि यदि वाऽस्थापि तत्तद्धि सत्ता
कर्त्री सत्ता परमिह भवत्येव सा तस्य रूपम् ॥ २७१ ॥

नो सच्चासद् भवतु न ततो भेदभाक् स्याद्धि शृङ्गं
कस्माद् भेदं भजति शशगं निःस्वरूपं न किञ्चित् ।
नो सद् वैतद् व्रजति तु महासत्तयान्तर्विशीर्णं
सद्भावं सा समलमिह यत् पूर्णमेतस्य रूपम् ॥ २७२ ॥

साध्ये साध्यः परशिव इहास्त्येव सिद्धे तु सिद्धो
भावे . चैतद्द्वयकृतपदे भावरूपस्तथैव ।
यद् यत् किञ्चित् स्फुरति सततं न स्फुरत्येव वा यत्
तत् सर्वं स्यात् परशिव इहाऽस्मान्न किञ्चिद् विभिन्नम् ॥ २७३ ॥

भिन्नं भिन्नं न भवति ततो भिन्नमेतत् त्वभिन्नं
नो युक्तं तत् किमिव कलना भेदरूपाऽन्यथा वा ।
भिन्नस्तस्मात् कथमिव भवेत् सोऽथ तद्वच्च भिन्नो
दृष्टः साक्षाज्जगति सकले भेदमूलो ह्यभेदः ॥ २७४ ॥

सर्वं तत्र स्थितिमिह भजत्येव सर्वस्य भानात्
सर्वाभावोऽपि च समुचितस्तत्र शान्ते स्वदेहे।
भानं ह्येतद् भवति निखिलं तस्य रूपं सुपुष्टं
भानाभावोऽपि च ननु भवेत् तस्य शान्तं स्वरूपम् ॥ २७५ ॥

रूपे स्वस्मिन् विसृमरतया प्रौढियुक्ते निलीनं
व्युत्थाने स्यादथ कृतपदं शान्तमेवास्स्व शान्तौ।
देहं तावन्नियतिवशगं चित्त सत्तैकरूपं
देहान्ते स्याः स्वयमथ सदा शान्तशान्तस्वरूपम् ॥ २७६ ॥

लीनं तस्मिन् परमगहने शान्तशान्ते स्वरूपे
सर्वै रूपैः स्फुरसि सततं सारभावेन सम्यक्।
तत्रानन्दं तृणमिव विहायाथ कुत्रापि चित्त!
विश्रान्तं स्याः परमिह भवांस्तत्र विज्ञो वयं के ॥ २७७ ॥

विदेहमुक्तेरिह चर्चयाऽलं देहेन योगादिह सा पदे नः।
अभुक्तभोज्यस्य हि कोऽस्ति विज्ञः स्वादं विजानाति विशेषतोऽत्र ॥ २७८ ॥

सामान्यतो यत् कथनं न तत् स्यात् सन्तोषहेतुर्विबुधव्रजस्य।
तृणस्य काण्डेन प्रदर्शनं हि नैवेक्षुकाण्डोत्थरसस्य युक्तम् ॥ २७९ ॥

जीवन्विमुक्तोऽपि न योग्य एव मूढेषु वक्तुं हृदयेषु शान्तः।
बाह्ये तु सामान्यजनस्य रीत्या प्रवाहनिष्ठो न विशेषयोगी ॥ २८० ॥

तथापि वैमुख्यनिवारणार्थं मूढेषु शान्तेः सहजात्मिकायाः।
स्वभावचर्चा घटतेऽत्र जीवन्मुक्तस्य शान्तस्य परे पदेऽस्मिन् ॥ २८१ ॥

मूढा हि नाशैकमयीं स्वशान्तिं जानन्ति नो सौख्यमयीं कदाचित्।
सदेहमुक्तांस्तु सुखैकमग्नान् दृष्ट्वाऽथ ते शान्तिपदोन्मुखाः स्युः ॥ २८२ ॥

न स्युस्तु ये तेऽपि मनाक् तदीयां धर्मैकरूपां व्यवहारनिष्ठाम्।
बुद्ध्वा प्रवृत्तिं ननु धर्मकार्ये कुर्युर्न चेद्धानिरिहास्ति का नः ॥ २८३ ॥

स्वचित्तबोधासिक्तते प्रयत्नः कृतो ह्ययं नान्यकृतेऽत्र शास्त्रे।
चित्तं च तन्नैव शृणोति सम्यक् कथैव काऽन्यस्य विरुद्धबुद्धेः ॥ २८४ ॥

शृणोतु मा चित्तमिदं च चित्तं नैवास्मि तत्त्वेन.... .... .... .... ।
शृणोति को नैव हि चित्तमस्ति सद्वाऽपि सन्मात्रमिदं न भिन्नम् ॥ २८५ ॥

तस्यानुबोधोऽपि च मे भ्रमोऽयं यत्नस्तदर्थं च तरां तथैव।
तस्यानुबोधस्य च सिद्ध्यसिद्धी तमां भ्रमः कल्पनमात्रसारः ॥ २८६ ॥

सिद्धया तु हर्षोऽथ विषादयोगोऽसिद्ध्या महान् मे भ्रमतो भ्रमोऽयम् ।
ततो भ्रमोऽयं भ्रमता विवादो नावस्थयाऽलं भ्रमभावनायाः ॥ २८७ ॥

सर्वः प्रपञ्चः परमार्थतोऽयं यद्वा स्वरूपं परमेश्वरस्य ।
काऽत्रास्ति मे पूर्वतया स्थितेयं चर्चा विभेदोऽत्र महाननभेदः ॥ २८८ ॥

यद् भाति यच्चापि न भाति यत्र यदा वदा तत्र तदेव रूपम् ।
महेश्वरस्यैव महाप्रकाशविमर्शरूपस्य परात्परस्य ॥ २८९ ॥

किं ब्रूमहे वाऽत्र न ब्रूमहे वाऽखिलाद् गते सर्वतया स्थिते च ।
पदे सदा यत्र सदैव सर्वं भातीव नो भाति च मातृभेदात् ॥ २९० ॥

अपूर्वमत्रास्ति न किञ्चिदेव योग्यं प्रवक्तुं ननु कल्पनात्वात् ।
यथा यदस्त्येव जगत्सु सिद्धं तथैव तद् भाति ममैव रूपम् ॥ २९१ ॥

यद्यप्यभानं च सदा तथैव रूपं महेशस्य परस्वभावात् ।
तथापि तद्भानतयाऽपि भानं भावेषु मे स्यादिति वर्णितं मे ॥ २९२ ॥

वाञ्छा हि देहान्तमियं न हेयात्यन्तेऽपि सेयं हृदये यदेति ।
अन्ते तु देहस्य यदेव भावि तदस्तु का वाऽनुमतिर्ममेति ॥ २९३ ॥

एतच्चित्तानुबोधाख्यं शास्त्रं चित्तानुबोधकम् ।
श्रीमन्माधवकण्ठस्य प्रपौत्रेण महात्मनः ॥ २९४ ॥

श्रीमद्वैडूर्यकण्ठस्य स्वतःसिद्धस्य योगिनः ।
पौत्रेणाथ च पुत्रेण सिद्धस्य द्वयतः स्फुटम् ॥ २९५ ॥

श्री-अवताराख्यकण्ठस्य त्रयतः सिद्धिमीयुषा ।
कृतं भास्करकण्ठेन पारम्पर्योपदेशतः ॥ २९६ ॥

पित्रादेरागतात् तद्वच्छ्रीमत्कौलनरोत्तमात् ।
प्राप्तविद्येन स्वस्यैव मन्त्रोपदेशतः स्फुटम् ॥ २९७ ॥

पितामहस्य सच्छिष्यात् प्राप्तविद्यात् तथैव च ।
समस्तविद्यानिपुणाद् रत्नकण्ठाद् दयानिधेः ॥ २९८ ॥

नात्र चित्तेन संवादो येन तेनैव भाषणम् ।
भवेत् किं त्वत्र बोधार्थं तस्य यत्नो यथा तथा ॥ २९९ ॥

बोधस्यात्रानुपूर्वत्वं स्मृतिकार्यतया स्थितम् ।
चित्तं तातोपदिष्टेन पूर्वमत्र हि बोध्यते ॥ ३०० ॥

यद्यत्र स्खलितं किञ्चित् सम्पन्नं मोहदोषतः ।
तत् क्षन्तव्यं बुधैः सद्भिर्मात्सर्यरहिताशयैः ॥ ३०१ ॥

बालो यथा तथा स्वस्य विनोदं हृदयस्य यत् ।
कुर्वन् नाक्षेपयोग्यत्वं भजत्येव कदाचन ॥ ३०२ ॥

हृदय किमिमां चिन्तां व्यर्थं करोषि भृशं यतो
ननु भगवतः परो दृष्टो न कश्चन जातुचित् ।
तदपि च जनाः श्रेष्ठाः सर्वे स्तुवन्ति विभुं न तद्
न तव विभुपरं शास्त्रं निन्दा यथामति कुर्वतः ॥ ३०३ ॥

श(शा)ब्दोऽपि दोषो यदि कश्चिदत्र भवेन्ममाज्ञानवशेन सन्तः ।
तत्रापि द्वेषो मयि नैव कार्योऽज्ञाने न दोषो खलु तत्र योग्यः ॥ ३०४ ॥

प्रवृत्तिरेषाऽपि न चैव चोद्या ममात्र केनापि हृदि स्थितेन ।
नियोजितस्याधिकृतेरभावेऽप्यत्राधिकारो हि वशे स्थितोऽस्य ॥ ३०५ ॥

शब्दार्थमार्गे स्खलितानि दुर्गे प्राप्नोत्यसौ वाक्पतिरत्र सोऽपि ।
कोऽहं वराको ननु मूकतुल्यः क्षमैव योग्या भवतां च तत्र ॥ ३०६ ॥

कृतिर्ममास्त्येव न वाऽत्र कोऽयं तद्दोषचिन्ताफलितोऽभिमानः ।
सोऽयं शिवः सर्वमिदं स्वयं हि स्वात्मार्थमेव स्वमयं करोति ॥ ३०७ ॥

कर्ताऽथ कार्यं करणं च कर्म सर्वोऽथवा कारकवर्ग एषः ।
स्वयं शिवः सर्वमिदं प्रसादात् तस्यैव सर्वत्र शिवं सदाऽस्तु ॥ ३०८ ॥

शिवः कर्ता शिवो वक्ता शिवः पाठक एव च ।
व्याख्याता च शिवः साक्षात् शिवः पूर्णमिदं स्वयम् ॥ ३०९ ॥

इति विभुपरं शास्त्रं दृब्धं परासिकरं सतां
भवतु सततं चित्ते स्वस्मिन् प्रशान्तिमुपेयुषाम् ।
अथ च हृदये मात्सर्याख्यं त्वघं दधतां मनोऽ-
पि वहतु परां शुद्धिं कर्ता शिवोऽत्र यतः स्वयम् ॥ ३१० ॥

इति श्रीमदाराध्यतमाचार्यवर्य-श्रीगुरुवरराजानकभास्करकण्ठविरचिते
चित्तानुबोधाख्ये महाशास्त्रे उपसंहारात्मकं
पञ्चदशं प्रकरणं सम्पूर्णम् ॥१५॥
इति शिवम् । ॐ नमः शिवाय गुरवे ।

# परिशिष्टानि

## ( क )

### उद्धरणग्रन्थानां सङ्केतसूची

अ० गुप्त = अभिनवगुप्तः
अ० प्र० सि० = अजडप्रमातृतासिद्धिः
आ० मा० = आलोकमाला
ई० प्र० = ईश्वरप्रत्यभिज्ञा
गीता = भगवद्गीता
गी० सा० = गीतासारः
तन्त्रा० = तन्त्रालोकः
प० सा० = परमार्थसारः
पा० गृ० सू० = पारस्करगृह्यसूत्रम्
पु० = पुराणम्
प्र० भू० = प्रशस्तभूतिः
ब० ग० स्तो० = बहुरूपगर्भस्तोत्रम्
म० भा० = महाभारतम्
म० म० = महार्थमञ्जरी
म० शा० = महाभारतं शान्तिपर्व
म० स्मृ० = मनुस्मृतिः
मा० वि० = मालिनीविजयतन्त्रम्
मै० उ० = मैत्रायण्युपनिषत्
मो० पा० = मोक्षोपायम्
या० स्मृ० = याज्ञवल्क्यस्मृतिः
यो० वा० = योगवासिष्ठम्
वा० प० = वाक्यपदीयम्
वि० भै० = विज्ञानभैरवः
शि० दृ० = शिवदृष्टिः
शि० सू० = शिवसूत्रम्
शि० स्तो० = शिवस्तोत्रावली
श्रुतिः
श्वे० उ० = श्वेताश्वतरोपनिषद्
सं० प्र० = संवित्प्रकाशः
स्त० चि० = स्तवचिन्तामणिः
स्प० का० = स्पन्दकारिका
स्मृ० = स्मृतिः
स्व० त० = स्वच्छन्दतन्त्रम्

## उद्धरणसूची

———

## ग्रन्थ-ग्रन्थकार-मत-मतान्तरसूची

———

## ग्रन्थकृता परिभाषितानां शब्दानां सूची

**अज्ञानम्**

विपरीतं बुधैर्ज्ञानमज्ञानमिति कीर्तितम् ।
नञो विपर्यये वृत्तेः स्वभावादेव नान्यतः ॥ १४।१७७

**अनुत्तरम्**

मूढस्य तत्कृतिर्मोहो करणं तु ततस्तराम् ।
तज्ज्ञानां सर्वमेवेहानुत्तरं परिकीर्तितम् ॥ ६।२९२

**अन्तःकरणम्**

त्रिधाऽन्तःकरणं बुद्धिमनोऽहङ्कारनामकम् । १०।२५४

**अंशजीवनम्**

भागतः स्वात्मता या हि विषयेषु स्थिता भ्रमात् ।
सा त्वंशजीवनं प्रोक्तं ९।२५

**आणवोपायः**

शाक्तोपायस्य हेतुः स्यादाणवोपायनामकः ।
उच्चारादिविभेदेन बहुधा संप्रकीर्तितः ॥ ९।४७

**आणवो मलः**

तत्राणवो द्विधा प्रोक्तो मलः सद्भिर्मलोज्झितैः ।
स्वातन्त्र्यहानिरेकः स्याद् बोधस्यामर्शहानितः ।
स्वातन्त्र्यावोधताज्ञानं द्वितीयोऽत्र निगद्यते ॥ ११।१०३-४

**उपवीतम्**

उप स्वात्मसमीपे तु विर्विशेषेण संस्मृतम् ।
इतं सम्बद्धमित्युक्तं तच्च तृप्ततया स्थितिः ॥ १०।२७१

**कलादीक्षा**

कलाध्वप्रविभागेन सर्वाध्वशोधनं स्थितम् ।
दीक्षायां येन सा लोके कलादीक्षेति संस्मृता ॥ ९।१६१

**कषायपाकः**

कषायो मल इत्युक्तः पाकस्तस्य च पक्वता । १०।२८४

**काम्यकर्म**

काम्यं पुष्टिकरं प्रोक्तं पुष्टिकामैरनुष्ठितम् ।
शान्तिकं वापि तत्प्रोक्तं शान्तिकामैरनुष्ठितम् ॥ १४।१५९

**कार्मो मलः**

करणादिसमायोगः कार्माख्यो मल उच्यते। ११।१०५

**कालाध्वा**

क्रियारूपोऽथ कालाध्वा त्रिधैव परिकीर्तितः।
पदानि मन्त्राः वर्णाश्च वाचकत्वेन संस्थितः॥ ९।३४

**कृत्यपञ्चकम्**

सृष्टिः स्थितिस्तथा ध्वंसः पिधानानुग्रहौ तथा।
कृत्यानां पञ्चकं प्रोक्तमित्येवं शास्त्रदृष्टिषु॥ १३।२१
सृष्टिः प्रोद्भावनं प्रोक्तं कार्यजालस्य स्वात्मनि।
स्थितिस्तु धारणं तस्य तिरोधिर्ध्वंस उच्यते॥
संस्कारतोऽपि नाशस्तु पिधानं कीर्तितं बुधैः।
अनुग्रहस्तु सात्म्यं स्यात् कार्यजालस्य निश्चितम्॥ १३।४–५

**गुणत्रयम्**

सत्त्वं सुखस्वरूपं स्याद् रजो दुःखमिति स्मृतम्।
मोहरूपं तमः प्रोक्तं जाड्यमात्रमिति स्मृतम्॥ १०।२४९

**गुरुः**

गुरुः शास्त्रानुसारेणोपदेष्टा गुरुरुच्यते।

**चित्**

चेतना स्वयमेव चित् ३।२१२

**चित्तशुद्धिः**

चित्तशुद्धिस्तु संप्रोक्ता संकल्पास्फुरणं बुधैः। १४।१५२

**चिन्मात्रम्**

चेतना येन चेतन्ति तच्चिन्मात्रमुदाहृतम्। ३।२०७
भूमेरुत्थानभाजोऽमी उद्भिजा यद्बलेन तत्।
चिन्मात्रं सर्वगं प्रोक्तं बलमात्रस्वरूपकम्॥ ३।२१९
सर्वाध्यासोऽस्ति यत्रैव यदध्यासेऽपि सर्वतः।
तच्चिन्मात्रमिति प्रोक्तं स्फुटास्फुटतया स्थितम्॥ १।२२९

**चेतनम्**

चेतनं भवनस्यैव रूपं शुद्धस्य कीर्तितम्। ३।२०९

**जपः**

मन्त्रोच्चारे जपः प्रोक्तः संख्यापूर्वो विचक्षणैः।
मन्त्रार्थस्य परामर्शोऽथ तद्देवतात्मता॥ १४।१४९

**ज्ञः**

सर्वाभिमानराहित्यमात्रमेव ज्ञलक्षणम् ।
बुधैः प्रोक्तं पुराविद्भिर्नैन्द्रजालिकविभ्रमः ॥ ११।१६७

**तत्त्वपञ्चकम्**

शिवादिशुद्धविद्यान्तं चिदादिशक्तियोगतः ।
तत्त्वपञ्चकमित्युक्तं साक्षाच्छिवमयं बुधैः ॥ १०।२०३
चितियुक्तः शिवोऽत्रास्ति शिवतत्त्वत्वमागतः ।
आनन्दयुक्तः शक्तिस्तु सेच्छः सादाख्य उच्यते ॥
ईश्वरो ज्ञानसहितो विद्यातत्त्वं क्रियान्वितः । १०।१३२-१३३

**तन्मात्रपञ्चकम्**

तत्र शब्दः श्रोत्रलभ्यस्त्वचा स्पर्शोऽथ नेत्रतः ।
रूपं ग्राह्यं रसश्चैव रसनेन्द्रियतस्तथा ॥
गन्धो घ्राणेन लभ्यं स्यादिति तन्मात्रपञ्चकम् । १०।२९१-२९२

**तृप्तिः**

आस्वादना तृप्तिरियं निरुक्ता तृप्तिः स्मृताद्यैर्निरपेक्षभावः । ८।१०३

**दम्भः**

दम्भो हि मिथ्यैव विकत्थनं स्यात् । ८।१२२

**दारिद्र्यम्**

तृष्णामात्रं हि दारिद्र्यम् । १४।३३९

**दीक्षा**

दीयते परमं स्थानं क्षीयन्ते कर्मवासनाः । ६।२४३

**देशाध्वा**

मूर्तिरूपोऽथ देशाध्वा त्रिधा वाच्यस्वरूपकः ।
भुवनानि कलाः पञ्च तत्त्वानीति विभेदतः ॥ ९।३३

**धर्मः**

सत्कर्मणस्तु संस्कारो धर्म इत्युच्यते बुधैः ।
मुख्यं तस्य फलं ज्ञानं गौणं स्वर्गादि संस्मृतम् ॥ १२।२६१

**नाशः**

नाशोऽयं ननु को नाशः स्वरूपावस्थितिर्हि सः ।
घटो नष्टो हि मृद्रूपो भवत्येव न संशयः ॥ २।२२५

**नित्यकर्म**

अकृतौ प्रत्यवायस्योत्पादकं नित्यमुच्यते ।
तच्च सन्ध्यावन्दनादि स्मृतिशास्त्रे प्रकीर्तितम् ॥ १४।१५७

**नियमाः**

शौचः स्वाध्यायसन्तोषौ तप ईश्वरचिन्तनम् ।
नियमाः पञ्च संप्रोक्ता वाह्याङ्गत्वेन संस्थिताः ॥ १२।२२४

**नैमित्तिककर्म**

निमित्तादागतं सद्भिर्नैमित्तिकमुदाहृतम् ।
सूर्योपरागशुद्ध्यादि तच्च विघ्नोपशान्तये ॥ १४।१५८

**पञ्चीकरणम्**

द्विधा विधाय चैकैकं चतुर्धा प्रथमे पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्चपञ्चतः ।
पञ्चीकरणमित्येवं वेदान्तेषु स्थितिं गतम् ॥ १०।३०२-३०३

**पदाध्वा**

एकाशीतिस्तु यास्त्वर्धमात्रा वर्णेषु संस्थिताः ।
पदाध्वा सोऽयमेवोक्तो महाशास्त्रेषु पण्डितैः ॥
ह्रस्वानां दश संप्रोक्ता द्वात्रिंद्दीर्घगाः स्मृताः ।
स्वभावतः प्लुतस्यास्य ल्कारस्य षडुदाहृताः ॥
त्रयस्त्रिंशत्तु कादीनामर्धमात्राः प्रकीर्तिताः ।
कषसंयोगरूपस्य क्षकारस्यात्र न स्थितिः ॥ ९।११३-११५

**परमशिवः**

प्रकाशामर्शरूपस्तु परमः शिव उच्यते । १।२६४

**परशिवः**

शक्त्या युक्तः शिवः साक्षात् प्रोक्तः परशिवो बुधैः । ४।९३

**पापम**

कुकर्मणस्तु संस्कारः पापमित्युच्यते बुधैः ।
मोहं तस्य फलं मुख्यं गौणं तु निरयादिकम् ॥ १२।२६२

**प्रकृतिः**

सत्त्वं रजस्तम इति गुणाः साम्येन संस्थिताः ।
स्वरूपं प्रकृतेः प्रोक्तं साम्यं स्वात्मन्यवस्थितिः ॥ १०।२४७

**प्राणचारः**

प्राणभावेन हृदयादुत्थाय लयमेत्ययम् ।
द्वादशान्ते बहिर्देशे सूर्योऽस्तपर्वते यथा ॥ ९।८३
ततोऽपानतयोत्थाय हृदये लयमेति सः ।
सोऽयमेकः प्राणचारः पण्डितैः परिकीर्तितः ॥ ९।८४

**बोधः**

चित्तचाञ्चल्यत्यागस्तु बोधः सद्भिरुदाहृतः। १२।२७५

**मन्त्राध्वा**

अन्नानादृतिभागर्थे मन्त्रोच्चारः प्रकीर्तितः।
मन्त्राध्वा सोऽयमेव स्यात् सारशास्त्रेषु कीर्तितः॥ ९ १२०

**मलत्रयम्**

आणवोऽप्यथ मायीयः कार्मश्च तदनन्तरम्।
मलानां त्रितयं प्रोक्तमागमेषु विशारदैः॥ ११।१०२

**महाकाशः**

लोको हि तेज इत्युक्तोऽलोकस्तम उच्यते।
ततः परं तु यत्किञ्चिन्महाकाशः स उच्यते॥ १०।३५५

**महाभेदः**

अभेदेऽपि च यो भेदो भेदे चाभेद एव यः।
महाभेदः स एवोक्तो विश्रान्तेः परमं पदम्॥ १३।२४१

**माया**

मीनात्ययं मिनोतीति माया हिंसाकरी मता।
स्वरूपविस्मृतिर्हिंसा साऽस्याः कार्यं बुधैः स्मृतम्॥
मिमीते वाऽनया विश्वं मातेति च स्मृता बुधैः।
माया तन्मात्रमेवेह जगत्सर्वं हि संस्थितम्॥
मात्यत्र विश्वं मायेति मायायामत्र यज्जगत्।
सावकाशं भवत्येव न तु संबाधदुःखितम्॥ १०।२०५-२०७

**मायीयो मलः**

भिन्नवेद्यप्रथामात्रं मायीयो मल उच्यते। ११।१०४

**मोक्षः**

सत्यस्वरूपप्रथनं मोक्षो वा वृद्धसम्मतः। १।१५२
नाश एव चितेर्मोक्षश्चार्वाकैः प्रतिपादितः। १।१३३
विज्ञानमात्रं शुद्धं तु बुद्धैर्मोक्षः प्रकीर्तितः। १।१५४
प्रकृतेर्निर्गमो मोक्षः सांख्यैरात्मन इष्यते। १।१५५
दुःखात्यन्ताभाव एवेह सोऽयं मोक्षः प्रोक्तस्तार्किकैस्तत्त्वविद्भिः। १।१५६
अस्वातन्त्र्ये यत्परं तत्तु बन्धः स्वातन्त्र्यं यत् सोऽस्ति मोक्षोऽत्र सत्यः। १।१५८

**मौनम्**

मौनं वाचो नियमनम् १४।२११

**यमाः**

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
इति पञ्च यमाः प्रोक्ता महाशास्त्रविशारदैः॥ १२।२२३

**वर्णाध्वा**

वर्णोच्चारः प्राणचारे वर्णाध्वा कीर्तितो बुधैः।
सोऽयं नादः समाख्यातः कुण्डलीतः प्रवृत्तिभाक्॥
आन्तरोऽयं समुच्चारः परमः समुदाहृतः।
अयत्नजः सूक्ष्मवर्णरूपोऽनाहतसंज्ञकः॥ ९।१०५, १०६

**विवेकः**

आलोचनं हि तत्त्वस्य विवेकः प्रोच्यते बुधैः।
वाह्यान्तरपदार्थौघो गोचरार्थः प्रकीर्तितः॥

**शक्तिपञ्चकम्**

क्रिया सृष्टिः समाख्याता ज्ञानं स्थितिरुदाहृतम्।
इच्छाध्वंसस्तु संप्रोक्त आनन्दोऽन्तर्धिरुच्यते॥
अनुग्रहश्चितिः प्रोक्ता— १३।९-१०।

**शाक्तोपायः**

भावनामात्ररूपोऽसौ शिवामर्शननामकः।
शाक्तोपायः स्मृतः सद्भिः शाम्भवोपायसाधकः॥ ९।४६

**शाम्भवोपायः**

शाम्भवाख्य उपायोऽत्र प्रथमः परिकीर्तितः।
निर्विकल्पा स्थितिः सेयं मध्यालम्बस्वरूपिणी॥ ९।४१

**शिखाबन्धः**

शिखा हि प्राणशक्तिः स्याद् बन्धस्तस्य निरोधनम्। ९।५५

**सच्चिन्मात्रम्**

येन सर्वाणीन्द्रियाणि यथास्वं कार्यवन्ति भोः।
सारेण प्रेरकेणापि सच्चिन्मात्रं तदीरितम्॥ ३।२१

**सदसत्कर्म**

सत्कर्म निजशास्त्रोक्तं तद्विरुद्धं तु कुत्सितम्।
अन्यदर्शनसंप्रोक्तमकर्मेति स्मृतं बुधैः॥ १२।२६४

सन्निवेशः

अवस्थानं सन्निवेशो भावानां परिकीर्तितम् । ४।९०

सन्मात्रम्

येन सर्वे सन्ति तत्तु सन्मात्रं परिकीर्तितम् । ३।२०७
अचला येन सारेण गुरुभावं गता अमी ।
स्थैर्यं भजन्ति तत् सूक्ष्मं सन्मात्रं समुदाहृतम् ॥ ३।२२०

सर्वम्

नैकजातीयवस्तूनां सङ्घः सर्वमिहोच्यते ।
भिन्नजातीयराशिर्हि सर्वमित्युच्यते बुधैः ॥ ४।५९

संसारः

अभानं शून्यमाता स्याद् भानैक्यं तु शिवात्मकम् ।
पृथक् पृथग् भानमिह संसारः परिकीर्तितः ॥ ११।२५६

होमः

द्रव्यत्यागस्तु होमोऽग्नौ देवतोद्देशतो भवेत् । १४।१५०

———

## विशिष्टशब्दसूची

———

